✱ ओ३म् ✱

# अष्टाध्यायी ।

श्रीपाणिनिमुनिप्रणीता ।

## ( उत्तरार्धम् )

श्रीजीवारामोपाध्यायप्रणीतया-
पाणिनिसूत्रवृत्त्या समेता ।

साचेयम्
तेनैव
मुरादाबादनगरे
स्वीयसरस्वतीनाम्नि मुद्रणयन्त्रे
मुद्रयित्वा प्राकाश्यं नीता ।

Printed and Published by,
Pt. JIWARAM UPADHYAYA,
AT THE SARASWATI-PRESS, MORADABAD.

द्वितीयावृत्तौ ५०० } सं० १९८५ वै० { मूल्यम् २)

# अथ पञ्चमाऽध्यायस्य प्रथमः पादः ।



## प्राक् क्रीताच्छः ॥१॥

प्राक्[1], क्रीतात्[5], छः[1] । तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥ तेन क्रीतम् (५।१।३७) के अधिकार से पूर्व पूर्व छ प्रत्यय का अधिकार है ॥१॥

## उगवादिभ्योयत् ॥२॥

उगवादिभ्यः[5], यत्[1]। उवर्णान्ताद् गवादिभ्यश्च यत् स्यात् । शङ्कव्यं दारु । गव्यम्॥ (नाभि नभंच;) । नभ्यः—अक्षः । नभ्यम्—अञ्जनम् । रथनाभावेवेदम् । (शुनः सम्प्रसारणं वाच दीर्घत्वम्) शून्यम्, शुन्यम् । (ऊधसोऽनङ् च) ऊधन्यः ॥ उवर्णान्त और गवादि प्रातिपदिकों से प्राक् क्रीतीय अर्थों में यत् प्रत्यय हो ॥२॥

## कम्बलाच्चसञ्ज्ञायाम् ॥३॥

कम्बलात्[5] । च(अ), स०म्[7] । यत् स्यात् । कम्बल्यम्—ऊर्णापलशतम् ॥ सञ्ज्ञा विषय में कम्बल शब्द से प्राक् क्रीतीय अर्थों में यत् प्रत्यय हो ॥३॥

## [1]विभाषा हविरपूपादिभ्यः[5] ॥४॥

यत् स्यात् । आमिक्ष्यं—दधि । आमिक्षीयम् । पुरोडाश्याः—तण्डुलाः । पुरोडाशीयाः । अपूप्यम् । अपूपीयम् ॥ हविष् विशेषवाचक और अपूपादि प्रातिपदिकों से प्राक् क्रीतीय अर्थों में विकल्प से यत् प्रत्यय हो ॥ ४ ॥

## [4]तस्मै हितम्[1] ॥५॥

चतुर्थी समर्थाद् हितमित्येतस्मिन्नर्थे यथा विहितं प्रत्ययः स्यात् । वत्सेभ्योहितः—वत्सीयः गोधुक् ॥ चतुर्थी समर्थ शब्द से हित अर्थ में यथाविहित प्रत्यय हो ॥५॥

## [5]शरीरावयवाद्यत्[1] ॥६॥

शरीरं-प्राणिकायः । शरीरावयववाचिनोयत् स्यात् । दन्त्यम् । कण्ठ्यम् । ओष्ठ्यम् । (नस् नासिकायाः) । नस्यम् । नाभ्यम् ॥ शरीर अवयव वाचक प्रातिपदिक से हित अर्थ में यत् प्रत्यय हो ॥६॥

## [5]खलयवमाषतिलवृषब्रह्मणश्च[अ] ॥७॥

एभ्यो हितार्थे यत् स्यात् । खलाय हितम्—खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । ब्रह्मन् शब्दो ब्राह्मण पर्यायः । प्रकृतिभावस्तु ये चाभावकर्मणोरिति ॥ चाद्—रथ्या । खल्, यव, माष, तिल, वृष और ब्रह्मन् शब्द से हित अर्थ में यत् प्रत्यय हो ॥७॥

## अजाविभ्यां[5] थ्यन्[1] ॥८॥

आभ्यां थ्यन् स्याद्धिते । यथा—अजथ्या । अविथ्या ॥ चतुर्थी समर्थ अज (बकरा) और अवि (भेड़) शब्द से हित अर्थ में थ्यन् प्रत्यय हो ॥८॥

## आत्मन् विश्वजनभोगोत्तरपदात् खः ॥९॥

आ०त्[४], खः[१]। यथा—आत्मने हितम्—आत्मनीनम् (६।४।१६९) इति प्रकृतिभावः। विश्वजनीनम्॥ (कर्मधारयादेवेष्यते)॥ षष्ठीतत्पुरुषाद् बहुव्रीहेश्च छ एव। विश्वजनीयम्॥ (पञ्चजनादुपसङ्ख्यानम्)॥ पञ्चजनीनम्॥ (सर्वजनाट्ठञ् खश्च)॥ सार्वजनिकम्। सर्वजनीनम्॥ (महाजनाट्ठञ्॥ माहाजनिकम्। मातृभोगीणः। पितृभोगीणः॥ (आचार्यादणत्वं च)॥ आचार्यभोगीनः॥ चतुर्थी समर्थ आत्मन् विश्वजन और भोगोत्तरपद प्रातिपदिक से हित अर्थ में ख प्रत्यय हो॥ ९॥

## सर्वपुरुषाभ्यां[५] णढञौ[१] ॥१०॥

आभ्यां यथासङ्ख्यं णढञौ स्याताम्। सर्वस्मै हितम्-सार्वम्। पौरुषेयम्। (सर्वाण्णोवेति वाच्यम्)॥ सर्वीयम्। (पुरुषाद् वधविकार समूहतेन कृतेषु वाच्यम्) पौरुषेयो वधः, विकारः, समूहो वा। तेन कृते। पौरुषेयो ग्रन्थः॥ चतुर्थी समर्थ सर्व और पुरुष शब्द से हित अर्थ में यथा सङ्ख्य ण और ढञ् प्रत्यय हो॥ १०॥

## माणवचरकाभ्यां[५] खञ्[१] ॥११॥

माणवाय हितम्—माणवीनम्। चारकीणम्॥ चतुर्थी समर्थ माणव और चरक शब्द से हित अर्थ में खञ् प्रत्यय हो॥ ११॥

## [१]तदर्थं [५]विकृतेः प्रकृतौ[७] ॥१२॥

विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छः स्यात्। अङ्गारेभ्योहितान्येतानि काष्ठानि—अङ्गारीयाणिकाष्ठानि। प्राकारीयाः-इष्टकाः॥ विकृतिवाचक प्रातिपदिक से विकृत्यर्थं प्रकृति वाच्य हो तो छ प्रत्यय हो॥ १२॥

## छदिरुपधिबलेर्ढञ् ॥१३॥

छ० लेः[५]। ढञ्[१]। छदिरादिभ्यः शब्देभ्यो ढञ् स्यात् तदर्थं विकृतेः प्रकृतौ। छादिषेयाणि तृणानि। छदि तृण पटलः। तस्मै इमानीत्यर्थः। औपधेयम्। उपधि शब्दात् स्वार्थे इष्यते। उपधीयत इत्युपधिः-रथाङ्गम्। बालेयास्तण्डुलाः॥ बलये इमे इत्यर्थः। बल्यर्थः इति भावः।॥ विकृति वाचक छदिष् उपधि और बलि शब्द से विकृत्यर्थं प्रकृति में ढञ् प्रत्यय हो॥ १३॥

## [६] ऋषभोपानहोर्ञ्यः ॥१४॥

आर्षभ्यः-वत्सः। यो वत्सः ऋषभावस्था प्राप्त्यर्थं पोष्यते स एवमुच्यते। औपानह्यः—मुञ्जः। उपानहे अयमिति भावः॥ विकृति वाचक ऋषभ और उपानह् शब्द से विकृत्यर्थं प्रकृति में ञ्य प्रत्यय हो॥ १४॥

## चर्म्मणो[५] ऽञ्[१] ॥१५॥

चर्म्मणो या विकृतिस्तद्वाचकादञ् स्यात्। वर्ध्र्यै इदम्-वार्ध्रं-चर्म्म। या वर्ध्री चर्म रज्जुः। नध्री वर्ध्री वस्रास्यात॥ वारत्रम्-चर्म्म॥ विकृति वाचक चर्मन् शब्दसे विकृत्यर्थं प्रकृति में अञ् प्रत्यय हो॥ १५॥

## तदस्य तदस्मिन्त्स्यादिति ॥१६॥

तद्[१] अस्य,[१] तद्[१], अस्मिन्[७], स्यात्(क्रि), इति(अ)। प्राकार आसामिष्टकानां

स्यात्—प्राकारीया इष्टकाः । प्रासादीयं दारु । सप्तम्यर्थे । प्राकारोऽस्मिन् देशे स्यात्-प्राकारीयो देशः । प्रासदीया भूमिः ॥ समानाधिकरण प्रथमा समर्थ शब्द से षष्ठ्यर्थ और सप्तम्यर्थ में यथाविहित प्रत्यय हो ॥ १६ ॥

## परिखाया ढञ् ॥१७॥

पारिखेयी-भूमिः।छयतोः पूर्णोविधिः ॥ समानाधिकरण प्रथमा समर्थ परिखा(खाई) शब्द से षष्ठ्यर्थ और सप्तम्यर्थ में ढञ् प्रत्यय हो ॥ १७॥

## प्राग्वतेष्ठञ् ॥१८॥

प्राक्, वतेः, ठञ्। तेन (५।१।११५) तुल्यमिति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते ॥ तेनतुल्यं क्रियाचेद्वतिः, इस सूत्र पर्यन्त ठक् प्रत्यय का अधिकार है ॥१८॥

## आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् ॥१९॥

आर्हात्, अ०त्, ठक्, । तदर्हति (५।१।६३) इत्येतदभि व्याप्य ठञधिकारमध्ये ठञोऽपवादः, ठगधिक्रियते गोपुच्छादीन् विहाय ॥ तदर्हति, इस सूत्र तक गोपुच्छ सङ्ख्यावाचक और परिमाणवाचक शब्दों को छोड़कर समर्थ शब्द से ठक् प्रत्यय हो यह अधिकार है ॥१९॥

## असमासेनिष्कादिभ्यः ॥२०॥

आर्हादित्येतत् (तेन क्रीतम्) इति यावत् । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । निष्केण क्रीतम् । नैष्किकम् ॥ समासभिन्न निष्कादि प्रातिपदिकोंसे आर्हीय अर्थों में ठक् प्रत्यय हो ॥२०॥

## शताच्च ठन्यतावशते ॥२१॥

शतात्, च(अ), ठन्यतौ, अशते। शतेन क्रीतम्-शतिकम्, शत्यम् ॥ शत वाच्य न होतो शत शब्दसे आर्हीय अर्थोंमें ठन् और यत् प्रत्यय हो ॥२१॥

## सङ्ख्याया अतिशदन्तायाः कन् ॥२२॥

सङ्ख्यायाः कन् स्यादार्हीयेऽर्थे नतु त्यन्तशदन्तायाः । पञ्चभिर्मुद्राभिः क्रीतः पञ्चकः । बहुभिः क्रीतः—बहुकः ॥ अत्यन्त और अशदन्त सङ्ख्या से आर्हीय अर्थों में कन् प्रत्यय हो ॥२२॥

## वतोरिड् वा ॥२३॥

वतोः, इट्, वा(अ) । वत्वन्तात् कन इड् वा स्यात् । तावतः क्रीतः-तावतिकः—तावत्कः ॥ वत्वन्त सङ्ख्यासे आर्हीय अर्थोंमें विहित कन् प्रत्यय को विकल्पसे इट् का आगम हो ॥२३॥

## विंशतित्रिंशद्भ्यां ड्वुन्नसञ्ज्ञायाम् ॥२४॥

विं०भ्याम्, ड्वुन्, अ० म्। योगविभागोऽत्र कार्य्यः । आभ्यां कन् स्यात् असंज्ञायाम् ड्वुन् स्यात् । विंशत्या क्रीतः—विंशकः । (६।४।१४२) इति तिलोपः । त्रिंशता क्रीतः—त्रिंशकः । 'टेः' इति टिलोपः । संज्ञायां तु । विंशतिकः । त्रिंशतिकः ॥ असंज्ञा विषय में विंशति और त्रिंशत् शब्दसे आर्हीय अर्थोंमें ड्वुन् प्रत्यय हो ॥२४॥

## कंसाट्टिठन् ॥२५॥

कंसात्[५], टिठन्[१], टेरङ्गार्थः । इकारउच्चारणार्थः । कंसेन क्रीतः कंसिकः । कंसिकी । ( अर्द्धाच्चेति वाच्यम् ) ॥ अर्द्धिकः । अर्द्धिकी ॥ (कार्षापणाट्टिठन् वक्तव्यः प्रतिरादेशश्च वा) ॥ कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी ॥ कंसशब्दसे आर्हीय अर्थोंमें टिठन् प्रत्यय हो ॥२५॥

## शूर्पादञन्यतरस्याम् ॥ २६ ॥

शूर्पात्[५], अञ्[१], अ०म्(अ) । शूर्पेण क्रीतम्—शौर्पम् । शौर्पिकम् ॥ शूर्प शब्द से आर्हीय अर्थों में विकल्प से अञ् प्रत्यय हो ॥ २६ ॥

## शतमानविंशतिकसहस्रवसनादण् ॥२७॥

शत०त्[५], अण्[१], । एभ्योऽण् स्यात् । शतमानेन क्रीतम्-शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ॥ शतमान, विंशतिक, सहस्र और वसन शब्द से आर्हीय अर्थों में अण् प्रत्यय हो ॥ २७ ॥

## अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २८ ॥

अ०गोः[५], लुक्[१], अ०म्[७] । अध्यर्द्धपूर्वात्, द्विगोश्चपरस्य आर्हीयस्य लुक् स्यात् । अध्यारूढमर्धम्-अध्यर्धम् । अध्यर्धेन कंसेन क्रीतम्—अध्यर्द्धकंसम् । द्विकंसम् ॥ असंज्ञाविषय में अध्यर्ध पूर्व और द्विगु से परे आर्हीय प्रत्यय का लुक् हो ॥ २८ ॥

## [१]विभाषा कार्षापणसहस्राभ्याम्[५] ॥ २९ ॥

आभ्यां लुग्वा स्यात् । अध्यर्द्धकार्षापणम् । अध्यर्द्धकार्षापणिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् । औपसङ्ख्यानिकस्य टिठनोलुक् । पक्षे—अध्यर्द्धप्रतिकम् । द्विप्रतिकम् । अध्यर्द्धसहस्रम् । अध्यर्द्धसाहस्रम् । द्विसहस्रम् । द्विसाहस्रम् ॥ अध्यर्द्धपूर्व और द्विगुसंज्ञक कार्षापण और सहस्र शब्दसे आर्हीय प्रत्यय का विकल्प से लुक् हो ॥२९॥

## द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥

द्वि०र्द्[५], निष्कात्[५] । लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । ( बहुपूर्वाच्चेतिवाच्यम् ) ॥ बहुनिष्कम् । बहुनैष्किकम् ॥ द्वित्रिपूर्व निष्कान्त द्विगुसे आर्हीय प्रत्ययका विकल्प से लुक् हो ॥ ३०॥

## विस्ताच्च ॥ ३१ ॥

विस्तात्[५], च(अ) । द्वित्रिबहुपूर्वाद् विस्तादार्हीयस्य प्रत्ययस्य वा लुक् स्यात् । द्विविस्तम् । द्विवैस्तिकम् । त्रिविस्तम् । त्रिवैस्तिकम् । बहुविस्तम् । बहुवैस्तिकम् ॥ द्वि त्रि बहुपूर्वक विस्तान्त द्विगुसञ्ज्ञक शब्द से आर्हीय प्रत्यय का विकल्प से लुक् हो ॥३१॥

## विंशतिकात्[५] खः[१] ॥ ३२॥

अध्यर्द्ध पूर्वात्प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः स्यात् । अध्यर्धविंशत्या क्रीतम् । अध्यर्द्धविंशतिकीनम् । द्वाभ्यां विंशतिकाभ्यां क्रीतम्–द्विविंशतिकीनम् ॥ अध्यर्द्धपूर्वविंशतिक और द्विगुसंज्ञक प्रातिपदिक से आर्हीय अर्थों में ख प्रत्यय हो ॥ ३२ ॥

## खार्या[५] ईकन्[१] ॥३३॥

अध्यर्द्धपूर्वात् प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् स्यात् । अध्यर्द्धखारीकम् । द्विखारीकम् ॥ ( केवलाच्चेति वाच्यम् ) खारीकम् ॥ ( काकिण्याश्चोप सङ्ख्यानम् ) ॥ अध्यर्द्धकाकिणीकम् ॥ अध्यर्द्धपूर्व और द्विगुसंज्ञक खारीशब्द से आर्हीय अर्थों में ईकन् प्रत्यय हो ॥३३॥

## पणपादमाषशताद्यत् ॥३४॥

प० तृ[५], यत्[१] । अध्यर्द्धपूर्वात् द्विगोश्च पणपादमाषशतशब्दान्तादार्हीयेष्वर्थेषु यत् स्यात् । अध्यर्धपणेन क्रीतम्-अध्यर्द्धपण्यम् । द्विपणेन क्रीतम्—द्विपण्यम् । अध्यर्द्धपाद्यम् । द्वाभ्यांपादाभ्यां चतुर्थांशाभ्यां क्रीतम्-द्विपाद्यम् । अध्यर्द्धमाष्यम् । द्विमाष्यम् । अध्यर्द्धशत्यम् । द्विशत्यम् ॥ अध्यर्द्धपूर्व और द्विगुसंज्ञक पण पाद माष और शत शब्दसे आर्हीय अर्थों में यत् प्रत्यय हो ॥३४॥

## शाणाद्[५] वा[अ] ॥ ३५ ॥

शाणशब्दादध्यर्द्धपूर्वात् द्विगोरार्हीयेष्वर्थेषु वा यत् स्यात् । पक्षे ठञ् तस्य लुक् । अध्यर्द्धशाण्यम् । अध्यर्द्धशाणम् । द्विशाण्यम् । द्विशाणम् ॥ अध्यर्द्धपूर्व और द्विगु संज्ञक शाण शब्दसे आर्हीय अर्थों में विकल्प से यत् प्रत्यय हो ॥३५॥

## [५]द्वित्रिपूर्वादण्[१] च[अ] ॥ ३६ ॥

द्वित्रिपूर्वाच्छाणान्तात् प्रातिपदिकादार्हीयेष्वर्थेषु अण् स्याच्चाद्यच्च वा । तेन त्रैरूप्यम् । ( परि० ।७३ । १५ ) इतिपर्युदासादादिवृद्धिरेव । द्विशाण्यम् । द्वैशाणम् । द्विशाणम् । त्रिशाण्यम् । त्रैशाणम् । त्रिशाणम् ॥ द्वि और त्रि शब्द हैं पूर्व जिसके ऐसे शाण शब्दसे आर्हीय अर्थों में अण् और यत् प्रत्यय विकल्प से हो ॥३६॥

## तेन[३] क्रीतम्[१] ॥ ३७॥

तृतीयासमर्थात् क्रीतमित्यर्थे यथाविहितं प्रत्ययः स्यात् । पणेन क्रीतम्-पाणिकम् । मुद्रया क्रीतम्-मौद्रिकम् ॥ तृतीया समर्थ से क्रीत अर्थमें यथाविहित प्रत्यय हो ॥३७॥

## तस्य[६] निमित्तं[१] संयोगोत्पातौ[१] ॥३८॥

संयोगः-सम्बन्धः । उत्पातः—शुभाशुभसूचकः । तत्र यथाविहितं प्रत्ययः स्यात् । शतस्य निमित्तं धनपतिना संयोगः-शत्यः । शतिको वा । शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम्-शत्यम्, शतिकं वा । शतस्यनिमित्तमित्यर्थः ॥ ( वातपित्तश्लेष्मभ्यश्शमनकोपनयोरुपसङ्ख्यानम् ) ॥ वातस्य-शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । ( सन्निपाताच्चेतिवाच्यम् ) ॥ सान्निपातिकम् ॥ संयोग और उत्पात समानाधिकरण षष्ठीसमर्थ शब्दसे निमित्त अर्थमें यथाविहित प्रत्यय हो ॥३८॥

## गोद्व्यचोऽसङ्ख्यापरिमाणाऽश्वादेर्यत् ॥३९॥

गो० च:[५], अ०दे:[५], यत्[१] । गोशब्दाद् द्व्यचश्च प्रातिपदिकात् सङ्ख्यापरिमाणाश्वादिवर्जितायत् स्यात् तस्य निमित्तं संयोगपातावित्यर्थे । गोर्निमित्तं संयोगः, उत्पातो वा—गव्यः । धन्यः । धन्यः । यशस्यः ॥ ( ब्रह्मवर्चसादुपसङ्ख्यानम् ) ॥ ब्रह्मवर्चस्यम् ॥ सङ्ख्या परिमाण और अश्वादि को छोड़कर संयोग और उत्पात

समानाधिकरण षष्ठी समर्थ गो और द्व्यच् प्रातिपदिकसे निमित्त अर्थमें यत्प्रत्यय हो॥

## पुत्राच्छ च ॥ ४०॥

पुत्रात्[5], छ[1], च(अ)। चाद्यत्। पुत्रस्य निमित्तं संयोगः, उत्पातो वा पुत्रीयः। पुत्र्यः॥ संयोग और उत्पात समानाधिकरण षष्ठी समर्थ पुत्र शब्दसे निमित्त अर्थ में छ और यत् प्रत्यय हो॥४०॥

## सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥

स० भ्याम्[5] अ० औ[1]। सर्वभूमेर्निमित्तं संयोगउत्पातो वा—सार्वभौमः। पार्थिवः। (७।३।२०) इति वृद्धिः संयोग और उत्पात समानाधिकरण षष्ठी समर्थ सर्वभूमि और पृथिवी शब्द से निमित्त अर्थ में यथासङ्ख्य अण् और अञ् प्रत्यय हो॥४१॥

## तस्येश्वरः ॥ ४२ ॥

तस्य[6], ईश्वरः[1]। सर्वभूमेरीश्वरः—सार्वभौमः। पार्थिवः॥ षष्ठीसमर्थ सर्वभूमि और पृथिवी शब्दसे ईश्वर अर्थ में यथाक्रम अण् और अञ् प्रत्यय हो॥४२॥

## तत्र विदित इति च ॥ ४३ ॥

तत्र(अ), वि०तः[1], इति(अ),च(अ)। विदितोज्ञातः। प्रकाशित इत्यर्थः। सार्वभूमौविदितः सार्वभौमः पार्थिवः॥ सप्तमीसमर्थ सर्वभूमि और पृथिवी शब्दसे विदित अर्थ में यथाक्रम अण और अञ् प्रत्यय हो॥ ४३॥

## लोकसर्वलोकाट्ठञ् ॥ ४४ ॥

लो० त्[5], ठञ्[1]। आभ्यां ठञ् स्यात्। लोके विदितः–लौकिकः। सर्वलोके विदितः सार्वलौकिकः॥ सप्तमी समर्थ लोक और सर्वलोक शब्दसे विदित अर्थमें ठञ् प्रत्ययहो॥

## तस्य[6] वापः[1] ॥ ४५ ॥

उप्यते अस्मिन्निति–वापः-क्षेत्रम्। तस्येति षष्ठी समर्थाद् वाप इत्यर्थे यथाविहितं प्रत्ययः स्यात्। प्रस्थस्य वापः—क्षेत्रम्—प्रास्थिकम्। द्रौणिकम्। खारीकम्॥ षष्ठीसमर्थ शब्द से वाप अर्थमें यथाविहित प्रत्यय हो॥४५॥

## पात्रात्[5] ष्ठन्[1] ॥४६॥

पात्रस्य वापः—क्षेत्रम्-पात्रिकम्। पात्रिकी क्षेत्रभक्तिः॥ षष्ठीसमर्थ पात्र शब्द से वाप अर्थमें ष्ठन् प्रत्यय हो॥४६॥

## तदस्मिन्वृद्ध्याय लाभशुल्कोपदादीयते ॥४७॥

तद्[1], अ० न्[7], वृ०दः[1], दीयते(क्रि०)। प्रथमासमर्थात् सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात्; यत् तत् प्रथमा समर्थ वृद्ध्यादि चेद्दीयते। वृद्धिर्दीयते, इत्यादि क्रमेण प्रत्येकं सम्बन्धादेकवचनम्। पञ्च अस्मिन्–वृद्धिः—आयः, लाभः, शुल्कम्, उपदा, वा दीयते पञ्चकः। 'सङ्ख्याया अतिशदन्तायाः' इति कन्। शतिकः। शत्यः। साहस्रः। 'शतमान सहस्र' इत्यण्। उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्योभागः—आयः। विक्रेत्रा मूल्यादधिकग्राह्यम्लाभः। रक्षानिर्वेशोराजभागः—शुल्कः। उत्कोचः—उपदा॥ (चतुर्थ्यर्थे उपसङ्ख्यानम्)॥ पञ्च अस्मै वृद्ध्यादि दीयते पञ्चकः यज्ञदत्तः॥

दीयते क्रियायुक्त वृद्धि, आय, लाभ, शुल्क, और उपदा समानाधिकरण प्रथमासमर्थ शब्दसे सप्तम्यर्थ में यथाविहित प्रत्यय हो ॥४७॥

## पूरणार्द्धाट् ठन् ॥४८॥

पू० तु[५], ठन्[१] । अर्द्धशब्दो रूपकार्द्धस्यरूढिः । द्वितीयोवृद्ध्यादिरस्मिन् दीयते—द्वितीयिकः । तृतीयिकः । अर्धिकः ॥ दीयते क्रियायुक्त वृद्धि, आय, लाभ, शुल्क, उपदा समानधिकरण प्रथमा समर्थ पूरणवाचक और अर्धशब्दसे सप्तम्यर्थमें ठन् प्रत्ययहो॥४८

## भागाद्यच्च ॥ ४९ ॥

भा० तु[५], यत्[१] । चा ठन् । भागशब्दोऽपि रूपकार्द्धे रूढः । भागोवृद्ध्यादिरस्मिन् दीयते-भाग्यम् भागिकम् शतम् । भाग्या भागिका विंशतिः॥ दीयते क्रियायुक्त वृद्धि आय लाभ शुल्क और उपदा समानाधिकरण प्रथमा समर्थ भागशब्द से सप्तम्यर्थमें यत् और ठन् प्रत्यय हो ॥४९॥

## तद्धरतिवहत्यावहतिभाराद्वंशादिभ्यः ॥५०॥

तद्[२], ह० क्रि[१], ति(क्रि), अ० ति(क्रि), भा०द्[५]व०[५]भ्यः वंशादिभ्यः परोयो भारशब्दः तदन्तं यत् प्रातिपदिकं तत् प्रकृतिकाद् द्वितीयान्तादित्यर्थः । वंशभारं हरति, वहति, आवहति । वा वांशभारिकः । ऐक्षुभारिकः ॥ द्वितीयासमर्थ वंशादि शब्दोंसे परे भारान्त प्रातिपदिक से हरति, वहति, आवहनि अर्थों में यथाविहित प्रत्यय हो ॥५०॥

## वस्नद्रव्याभ्यां[५] ठन्कनौ[१] ॥५१॥

आभ्यां यथासङ्ख्यमिमौ स्याताम् । वस्नं-हरति, वहति, आवहति वा-वस्निकः । द्रव्यकः ॥ द्वितीयासमर्थ वस्न (द्रव्य) और द्रव्य शब्दसे हरति वहति और आवहति अर्थों में यथाक्रम ठन् और कन् प्रत्यय हो ॥ ५१॥

## सम्भवत्यवहरतिपचति ॥ ५२॥

सं० ति,(क्रि) अ० ति, क्रि) प० ति (क्रि) । सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययः स्यात् । प्रस्थं सम्भवति-प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन् समावेशयतीत्यर्थः । प्रास्थिकी पाचिका । प्रस्थमवहरति, पचति वेत्यर्थः ॥ ( तत्पचतीति द्रोणादण् च ) चाट्ठञ् द्रोणं पचति-द्रौणी । द्रौणिकी ॥ द्वितीयासमर्थ शब्दसे सम्भवति अवहरति और पचति अर्थमें यथाविहित प्रत्यय हो ॥५२॥

## आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३॥

आ० तु[५], खः[१], अ० म् (अ) ॥ आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्यो वा सम्भवत्यादिष्वर्थेषु खः स्यात् । पक्षे ठञ् । आढकं सम्भवति, अवहरति, पचति वा—आढकीना । आढकिकी । आचितीना । आचितिकी । पात्रीणा । पात्रिकी ॥ द्वितीया समर्थ आढक ऽ४ आचित २५ऽ और पात्र शब्द से सम्भवति अवहरति और पचति अर्थमें विकल्प से ख प्रत्यय हो ॥५३॥

## द्विगोः ष्ठंश्च ॥ ५४ ॥

द्विगोः[५] ठन्[१], च (अ) । आढकाचितपात्रान्ताद् द्विगोः सम्भवत्यादिष्वर्थेषु ष्ठन् खौ

वा स्याताम्। पक्षे ठञ् तल्लुक्। द्व्याढकिकी, द्व्याढकीना। द्व्याढकी। द्व्याचितिकी। द्व्याचितीना। द्व्याचिता। अपरिमाणविस्ताचितेति ङीप् प्रतिषेधः। द्विपात्रिकी। द्विपात्रीणा। द्विपात्री॥ द्वितीया समर्थ आढकान्त, आचितान्त, पात्रान्त द्विगु से सम्भवति अवहरति और पचति अर्थ में विकल्प से ठञ् और ख प्रत्यय हो ॥५४॥

## कुलिजाल्लुक्खौ च ॥ ५५ ॥

कु० त्[५], लु० खौ[१], च (अ)। कुलिजान्ताद् द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्याताम्। चात् ष्ठंश्च। लुगभावे ठञः श्रवणम्। द्वे कुलिजे सम्भवत्यवहरति पचति वा द्विकुलिजिकी। द्विकुलिजीना। द्विकुलिजा। द्वैकुलिजिकी॥ द्वितीयासमर्थ कुलिज शब्दान्त द्विगु से सम्भवति अवहरति और पचति अर्थ में लुक्, ख और ठञ् प्रत्यय विकल्प से हो ॥५५॥

## सोऽस्यांशवस्नभृतयः ॥ ५६ ॥

सः[१], अस्य[६], अं० यः[१]। अंशः—भागः। वस्नं—मूल्यम्। भृतिः—वेतनम्। प्रथमा समर्थात् षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्, यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेमे स्युः। पञ्च अंशो वस्नो भृतिर्वा यस्य—पञ्चकः॥ अंश वस्न और भृति समानाधिकरण प्रथमासमर्थ शब्द से षष्ठ्यर्थ में यथाविहित प्रत्यय हो ॥५६॥

## तदस्यपरिमाणम् ॥ ५७ ॥

तत्[१], अस्य[६], प०म्[१]। प्रथमासमर्थात् षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्, यत्तत् प्रथमासमर्थं परिमाणं चेत् स्यात्। प्रस्थः परिमाणमस्य प्रास्थिकोराशिः॥ परिमाण समानाधिकरण प्रथमा समर्थ शब्द से षष्ठ्यर्थ में यथाविहित प्रत्यय हो ॥५७॥

## "सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राऽध्ययनेषु[७] ॥ ५८ ॥

पष्ठ्यर्थेषु सङ्ख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात् प्रथमासमर्थात् षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्। (तत्रसंज्ञायां स्वार्थेप्रत्ययोवाच्यः)॥ पञ्चैव पञ्चकाः शकुनयः। पञ्चपरिमाणमेषामिति वा। सङ्घे। पञ्चपरिमाणमस्य पञ्चकः—सङ्घः। सूत्रे। अष्टकंपाणिनीयम्। सङ्घशब्दस्य प्राणिसमूहे रूढत्वात् सूत्रं पृथगुपात्तम्। अध्ययने। पञ्चकम्—अध्ययनम्। (स्तोमे डविधिः)॥ पञ्चदशपरिमाणमस्य पञ्चदशः। सप्तदशः। एकविंशः। सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादि संज्ञिका स्तुतिः—स्तोमः॥ संज्ञा, सङ्घ, सूत्र, और अध्ययन प्रत्ययार्थ विशेषण हो तो परिमाणोपाधिक प्रथमा समर्थ सङ्ख्यावाचक प्रातिपदिक से षष्ठ्यर्थ में यथाविहित प्रत्यय हो ॥५८॥

## पङ्क्तिविंशति त्रिंशच्चत्वारिंशत्पञ्चाशत् षष्टिसप्तत्यशीतिनवतिशतम्[१] ॥ ५९ ॥

इमे रूढि शब्दा निपात्यन्ते॥ परिमाण समानाधिकरण प्रथमा समर्थ पङ्क्ति (दश) विंशति, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति, नवति, और शत ये दश शब्द षष्ठ्यर्थ में निपातन किये हैं ॥५९॥

## 'पञ्चदशतौवर्गे[७] वा[अ] ॥ ६० ॥

इमौ वर्गे वा निपात्येते। पञ्चपरिमाणमस्य पञ्चद्-वर्गः। दशद्-वर्गः। पक्षे।

पञ्चकः। दशकः॥ षष्ठ्यर्थ में वर्ग वाच्य हो तो परिमाणाधिकरण प्रथमा समर्थ पञ्चद् और दशद् शब्द विकल्प से निपातित हैं॥६०॥

## सप्तनोऽञ् छन्दसि॥ ६१॥

सप्तनः[५], अञ्[१], छन्दसि[७]। तदस्य परिमाणमिति वर्ग इति च। सप्तन् शब्दाच्छन्दसि विषयेऽञ् स्यात् वर्गेऽभिधेये। सप्त साप्तान्यसृजत्॥ वर्ग वाच्य हो तो छन्दो विषय में परिमाण समानाधिकरण प्रथमा समर्थ सप्तन् शब्द से षष्ठ्यर्थ में अञ् प्रत्यय हो॥ ६१॥

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डण्॥ ६२॥

त्रिं० तोः[५], ब्रा० णे[७], सं० म्[७], डण्[१]। ब्राह्मणेऽभिधेये त्रिंशच्चत्वारिंशच्छब्दाभ्यां सञ्ज्ञायां विषये डण् स्यात्, तदस्य परिमाणमिति विषये। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां-त्रैंशानि। चात्वारिंशानि—ब्राह्मणानि॥ संज्ञाविषय होने पर ब्राह्मण वाच्य हो तो परिमाण समानाधिकरण प्रथमा समर्थ त्रिंशत् और चत्वारिंशत् शब्दसे षष्ठ्यर्थ में डण् प्रत्यय हो॥६२॥

## तदर्हति॥६३॥

तद्[२], अर्हति (क्रि)। द्वितीयासमर्थादर्हतीत्यर्थे यथाविहितं प्रत्ययाः स्युः। श्वेतच्छत्रमर्हति-श्वैतच्छत्रिकः॥ द्वितीयासमर्थ शब्द से अर्हति (प्राप्ति के योग्य) अर्थ में यथा विहित प्रत्यय हो॥६३॥

## छेदादिभ्योनित्यम॥ ६४॥

छे०भ्यः[५], नि०म्[२]। नित्यम्-आभीक्ष्ण्यम्। छेदादिभ्यो द्वितीयासमर्थेभ्यो नित्यमर्हतीति विषये यथाविहितं प्रत्ययः स्यात्। छेदं नित्यमर्हति छैदिकः—वेतसः। छिन्नप्ररूढत्वात् (विरागविरङ्गं च)॥ विरागं नित्यमर्हति—वैरागिकः। वैरङ्गिकः॥ द्वितीयासमर्थ छेदादि प्रातिपदिकों से नित्यम् अर्हति इस अर्थ में यथाविहित प्रत्यय हो

## शीर्षच्छेदाद्यच्च॥६५॥

शी० त्[५], यत्[१], च (अ)। शिरश्छेदं नित्यमर्हति—शीर्षच्छेद्यः। शैर्षच्छेदिकः॥ द्वितीया समर्थ शीर्षच्छेद शब्द से नित्यम् अर्हति इस अर्थ में यत् और यथाविहित प्रत्यय हो॥६५॥

## दण्डादिभ्यो यः॥६६॥

द० भ्यः[५], यः[१]। एभ्यो द्वितीया समर्थेभ्योऽर्हतीत्यर्थे यः स्यात् दण्डमर्हति दण्ड्यः। वध्यः॥ द्वितीयासमर्थ दण्ड आदि शब्दों से अर्हति अर्थ में य प्रत्यय हो॥६६॥

## छन्दसि[७] च[अ]॥ ६७॥

प्रातिपदिकमात्राच्छन्दसि विषये तदर्हतीत्यर्थे यः स्यात्। यूप्यः पलाशः॥ छन्दो विषय में द्वितीया समर्थ प्रातिपदिक मात्र से यत प्रत्यय हो॥ ६७॥

## पात्राद् घंश्च॥ ६८॥

पात्राद्[५], घन्[१], च (अ)। चाद्यस्तदर्हतीत्यर्थे। पात्रियः। पात्र्यः॥ द्वितीया समर्थ पात्र शब्दसे अर्हति इस अर्थमें घन् और य प्रत्यय हो॥६८॥

## कडङ्करदक्षिणाच्छ च ॥६९॥

क० त[५], छः[१], च (अ) आभ्यां छः स्याद्यश्च तदर्हतीत्यर्थे । कडङ्करमर्हति- कडङ्करीयो गौः । नीवार पाकादि कडङ्करीयैः, इति रघुः ॥ कडङ्कर्यः । दक्षिणामर्हतीति- दक्षिणीयः । दक्षिण्योविप्रः ॥ द्वितीया समर्थ कडङ्कर और दक्षिणा शब्द से अर्हति अर्थ में छ और य, प्रत्यय हो ॥ ६९ ॥

## स्थालीबिलात्[५] ॥७०॥

अस्मादर्हतीत्यर्थे छयौ स्याताम् । स्थालीबिलमर्हन्ति स्थालीबिलीयाः-तण्डुलाः । स्थालीबिल्याः । पाकयोग्याइत्यर्थः ॥ द्वितीया समर्थ स्थालीबिल शब्द से अर्हति इस अर्थ में छ और य प्रत्यय हो ॥ ७० ॥

## यज्ञर्त्विग्भ्यां[५] घखञौ[१] ॥७१॥

आभ्यां यथासङ्ख्यमिमौ स्याताम् । यज्ञम्, ऋत्विजं वा, अर्हति-यज्ञियः । आर्त्विजीनः ॥ ( तत्कर्मार्हतीत्युपसङ्ख्यानम् ) ॥ यज्ञमर्हति-यज्ञियः देशः । आर्त्विजीनं द्विज- कुलम् ॥ द्वितीया समर्थ यज्ञ और ऋत्विज् शब्द से अर्हति इस अर्थ में यथासङ्ख्य घ और खञ् प्रत्यय हो ॥ आर्हीय विधि समाप्त ॥७१॥

## [२]पारायणतुरायणचान्द्रायणं वर्त्तयति[कि] ॥ ७२ ॥

पारायणं वर्तयति-पारायणिकः छात्रः । तौरायणिकः यजमानः । चान्द्रायणिकः तपस्वी ॥ द्वितीया समर्थ पारायण ( जिसके द्वारा एक कार्य्य को समाप्त करे ) तुरायण ( यज्ञविशेष ) और चान्द्रायण ( एक व्रत ) शब्द से वर्त्तयति इस अर्थ में ठञ् प्रत्यय हो ॥

## संशयमापन्नः ॥ ७३॥

संशयम्[२], आपन्नः[१] । संशयः शब्दाद् द्वितीया समर्थादापन्न इत्यर्थे ठञ् स्यात् । संशय विषयी भूतोऽर्थः । सांशयिकः-स्थाणुः द्वितीया समर्थ संशय शब्द से आपन्न ( प्राप्त ) अर्थ में ठञ् प्रत्यय हो ॥ ७३ ॥

## योजनं[२] गच्छति[कि०] ॥७४॥

द्वितीया समर्थाद् योजन शब्दाद् गच्छतीत्यर्थे ठञ् स्यात् । योजनं गच्छति यौज- निकः ( क्रोशशतयोजनशतयोरुपसङ्ख्यानम् ) ॥ क्रोशशतं गच्छति-क्रौशशतिकः । यौजनशतिकः ॥ ( ततोऽभिगमनमर्हतीति च वक्तव्यम् )॥ क्रोशशतादभिगमनमर्हतीति- क्रौशशतिकः भिक्षुः । यौजनशतिकः आचार्य्यः ॥ द्वितीया समर्थ योजन ( चार कोस ) शब्द से गच्छति इस अर्थ में ठञ् प्रत्यय हो ॥ ७४ ॥

## पथः[५] ष्कन्[१] ॥७५॥

षोऽङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी ॥ द्वितीया समर्थ पथिन् शब्द से गच्छति इस अर्थ में ष्कन् प्रत्यय हो ॥ ७५ ॥

## पन्थोणो नित्यम् ॥ ७६ ॥

-पन्थः[१], णः[१], नित्यम्[२]। पथः पन्थ इत्ययमादेशः स्यात् णश्च प्रत्ययोनित्यम् गच्छ- तीत्यर्थे । पन्थानं नित्यं गच्छति-पान्थः । पान्था ॥ द्वितीयासमर्थ पथिन् शब्द से

नित्यं गच्छति इस अर्थ में ण प्रत्यय और पथिन् शब्द को पन्थ आदेश हो ॥ ७६ ॥

## [३]उत्तरपथेनाऽऽहृतं[१] च[अ] ॥७७॥

उत्तरपथ शब्दात्तृतीयासमर्थादाहृतमित्यर्थे ठञ् स्यात् । उत्तरपथेन आहृतम्-औत्तरपथिकम् । उत्तरपथेन गच्छति-औत्तरपथिकः । ( आहृत प्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसङ्ख्यानम् ) ॥ वारिपथेनाहृतम्-वारिपथिकम् । वारिपथेन गच्छति-वारिपथिकः । जङ्गलपथेनाऽऽहृतम्-जाङ्गलपथिकम् । जङ्गलपथेन-गच्छति-जाङ्गलपथिकः । स्थालपथिकम् । स्थालपथिकः । कान्तारपथिकम् । कान्तारपथिकः ॥ तृतीयासमर्थ उत्तरपथ शब्द से आहृत और गच्छति इस अर्थमें ठञ् प्रत्यय हो ॥

## कालात्[५] ॥७८॥

व्युष्टादिभ्योऽण् इत्यतः प्रागधिकारोऽयम् ॥ यहां से ( ५।१।९७ ) यहां तक काल का अधिकार है ॥ ७८ ॥

## तेन[३] निर्वृत्तम्[१] ॥७९॥

अह्ना निर्वृत्तम्-आह्निकम् । नवाह्निकम् ॥ तृतीयासमर्थ काल वाचक प्रातिपदिक से निर्वृत्त इस अर्थ में ठञ् प्रत्यय हो ॥ ७९ ॥

## तमधीष्टो भृतो भूतो भावी ॥ ८० ॥

तम्[२], अ० ष्ट[१], भूतः, भावी[१] । अधीष्टः-सत्कृत्य व्यापारितः । भृतः-वेतनेन क्रीतः । भूतः-स्वसत्तया व्याप्तकालः । भावी-तादृश एवानागतकालः । मासमधीष्टः मासिकोऽध्यापकः । मासं भृतः-मासिकः कर्मकरः । मासं भूतः मासिको व्याधिः । मासं भावी-मासिकः उत्सवः ॥ द्वितीयासमर्थ कालवाची प्रातिपदिक से अधीष्ट भृत भूत और भावी अर्थ में यथाविहित प्रत्यय हो ॥ ८० ॥

## मासाद्[५] वयसि[७] यत्खञौ[१] ॥ ८१ ॥

भूतेऽर्थे मासशब्दाद् वयस्यभिधेये यत्खञौ स्याताम् । मासं भूतः मास्यः-मासीनः॥ अवस्था वाच्य होतो प्रथमा समर्थ मास शब्द से भूत अर्थमें यत् और खञ् प्रत्ययहो ।

## द्विगोर्यप् ॥८२॥

द्विगोः[५], यप्[१] । वयस्यभिधेये मासान्ताद् द्विगोर्यप् स्यात् । द्वौ मासौ भूतः-द्विमास्यः । त्रिमास्यः ॥ अवस्थावाच्य हो तो द्वितीयासमर्थ मासान्त द्विगु से भूत अर्थ में यप् प्रत्यय हो ॥ ८२ ॥

## षण्मासाण्ण्यच्च ॥ ८३॥

षण्[५],ण्यत्[१],च(अ) । वयस्यभिधेये षण्मासशब्दाण्ण्यद्यप् ठञः स्युः । षाण्मास्यः । षण्मास्यः । षाण्मासिकः ॥ अवस्था वाच्य हो तो द्वितीया समर्थ षण्मासशब्द से भूत अर्थ में ण्यत् यप् और ठञ् प्रत्यय हो ॥ ८३ ॥

## अवयसि ठंश्च ॥८४॥

अ० सि[७], ठन्[१], चअ । षण्मासशब्दाद् वयस्यभिधेये ठन् स्याच्चात् ण्यत् । षण्मासिकोव्याधिः । षाण्मास्यः ॥ अवस्था भिन्न अर्थ वाच्य होतो द्वितीयासमर्थ षण्मास शब्द से ठन् और ण्यत् प्रत्यय हो ॥ ८४ ॥

## समायाः[5] खः[1] ॥८५॥

समाशब्दात् द्वितीया सर्थादधीष्टादिष्वर्थेषु खः स्यात्। समाम्-अधीष्टः, भृतः, भूतः, भावी वा,-समीनः॥ द्वितीया समर्थ समा ( वत्सर ) शब्द से अधीष्टादिचार अर्थों में ख प्रत्यय हो॥ ८५॥

## द्विगोर्वा ॥८६॥

द्विगोः[5], वा (अ)। समायाः ख इत्येव। तेन परिजय्येत्यतः-प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः। द्विसमीनः। द्वैसमिकः॥ द्वितीया समर्थ समाशब्दान्त द्विगुसे तेन (५।१।९३) से पूर्व निर्वृत्तादि पांच अर्थों में विकल्प से ख प्रत्यय हो॥ ८६॥

## रात्र्यहः संवत्सराच्च ॥८७॥

रा०त्[5], च (अ)। रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोर्निवृत्तादिष्वर्थेषु खो वा स्यात्। द्विरात्रीणः। द्वैरात्रिकः। द्वाभ्यां रात्रिभ्यां निवृत्तः, द्वे रात्रीअधीष्टो भृतोभूतो भावीवेत्यर्थः। द्व्यहीनः। द्वैयह्निकः। 'न य्वाभ्याम्' इत्यैच् द्विसंवत्सरीणः। द्विसांवत्सरिकः॥ (७।३।१५) इत्युत्तरपदवृद्धिः)॥ द्वितीयासमर्थ रात्रि अहन् और संवत्सर ये हैं अन्त में जिसके ऐसे द्विगुसे निर्वृतादि अर्थों में विकल्प से ख प्रत्यय हो॥८७॥

## वर्षाल्लुक्च ॥ ८८॥

वर्षात्[5], लुक्[1], च (अ) वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषुखो वा स्यात्। पक्षे ठञ् वा च लुक्। द्विवर्षीणो व्याधिः। द्विवार्षिको बालः। (७।३। १५) इत्युत्तरपदस्यवृद्धिः॥ द्विवर्षः॥ द्वितीया समर्थ वर्षान्त द्विगु से निर्वृत्तादि अर्थों में विकल्प से ख प्रत्यय और पक्ष में ठञ् उसका विकल्प से लुक् हो॥ ८८॥

## चित्तवति[7] नित्यम्[1] ॥ ८९॥

वर्षशब्दान्ताद् द्विगोः प्रत्ययस्य नित्यं लुक् स्यात्, चेतनेप्रत्ययार्थे। द्विवर्षो दारकः॥ चेतन अभिधेय होतो द्वितीया समर्थ वर्षान्त द्विगुसे निर्वृत्तादि अर्थों में उत्पन्न प्रत्यय का नित्य लुक् हो॥८९॥

## षष्टिकाः[1] षष्टिरात्रेण[3] पच्यन्ते[क्रि०] ॥९०॥

षष्टिकशब्दो निपात्यते। षष्टिरात्रेण पच्यन्ते-षष्टिकाः सञ्ज्ञैषा धान्यविशेषस्य॥ तृतीया समर्थ से कन् प्रत्यय और रात्र शब्द का लोप निपातन किया है॥ ९०॥

## वत्सरान्ताच्छश्छन्दसि ॥९१॥

व० त्[5], छः[1], छ० सि[7]। छन्दसि विषये वत्सरान्तात् प्रातिपदिकात् निर्वृत्तादिष्वर्थेषु छः स्यात्। इद्वत्सरीयः॥ वत्सरान्त प्रातिपदिक से छन्दोविषय होने पर निर्वृत्तादि अर्थोंमें छ प्रत्यय हो॥९१॥

## संपरिपूर्वात्खश्च ॥९२॥

स०त्[5], खः[1], च (अ) चाच्छः। संवत्सरीणः। संवत्सरीयः। परिवत्सरीणः। परिवत्सरीयः॥ सम् और परिपूर्वक वत्सरान्त प्रातिपदिक से निर्वृत्तादि अर्थों में ख और छ प्रत्यय हो ९२॥

## ³तेन परिजय्यलभ्यकार्य्यसुकरम्¹ ॥ ६३ ॥

कालवाचिनस्तृतीयासमर्थात् प्रातिपदिकात् परिजय्यादिष्वर्थेषु ठञ् स्यात् । मासेन परिजय्यो जेतुं शक्यः–मासिको व्याधिः । सांवत्सरिकः । मासेन लभ्यः मासिकः पटः । मासेन कार्य्यं मासिकं चान्द्रायणम् । मासेन सुकरो मासिकः प्रासादः ॥ तृतीयासमर्थ काल वाचक प्रातिपदिकसे परिजय्य, लभ्य, कार्य्य और सुकर अर्थ में ठञ् प्रत्यय हो॥

## तदस्य ब्रह्मचर्य्यम् ॥ ६४ ॥

तद्², अस्य⁶, ब्र०म्¹ । द्वितीयान्तात् कालवाचिनोऽस्येत्यर्थे ठञ् स्याद् ब्रह्मचर्य्ये गम्ये । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्य्यमस्य–समासिको ब्रह्मचारी । सांवत्सरिकः । यद् वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति–मासिकं ब्रह्मचर्य्यम् ॥ ( महानाम्नादिभ्यः षष्ठ्यन्तेभ्यः उपसङ्ख्यानम् ) ॥ महानाम्न्यो नाम "विदामघवन्" इत्याद्या ऋचः । तासां ब्रह्मचर्य्यमस्य—महानामिकः॥ ( अष्टाचत्वारिंशतोड्वुंश्चडिनिश्च वाच्यम् )॥ अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति–अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥ ( चातुर्मास्यानां यलोपश्चड्वुंश्च डिनिश्च वाच्यम् ) ॥ चातुर्मास्यानि चरति-चातुर्मासकः । चातुर्मासी ॥ ( चतुर्मासाण्णो यज्ञे तत्र भव इत्यर्थे ) ॥ चतुर्षु मासेषु भवानि-चातुर्मास्यानि ॥ ( सञ्ज्ञायामण् वाच्यः ) ॥ चतुर्षु मासेषु भवा–चातुर्मासी । पौर्णमासी । आषाढी । कार्त्तिकी । फाल्गुनी ॥ ब्रह्मचर्य्य गम्यमान हो तो द्वितीयासमर्थ कालवाचक प्रातिपदिक से षष्ठ्यर्थ में ठञ् प्रत्यय हो ॥६४॥

## तस्य⁶ च³ दक्षिणा¹ यज्ञाख्येभ्यः ॥ ६५ ॥

षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यर्थे ठञ् स्यात् । अग्निष्टोमस्य दक्षिणा-आग्निष्टोमिकी । वाजपेयिकी । राजसूयिकी ॥ षष्ठीसमर्थ यज्ञाख्य प्रातिपदिकों से दक्षिणा इस अर्थ में ठञ् प्रत्यय हो ॥६५॥

## तत्र⁷ च³ दीयते^{क्रि}·कार्य्यं¹ भववत्³ ॥ ६६ ॥

कालवाचिनः सप्तमी समर्थाद् दीयते कार्य्यं चेत्यर्थे भववत् प्रत्ययः स्यात् । प्रावृषि–दीयते, कार्य्यं वा प्रावृषेण्यम् । शारदम् कालाधिकारस्य पूर्णोऽवधिः ॥ सप्तमी समर्थ कालवाचक प्रातिपदिक से दीयते और कार्य्य इस अर्थमें भववत् प्रत्यय हो॥६६॥

## ⁵व्युष्टादिभ्योऽण् ॥ ६७ ॥

व्यु०भ्यः⁵, अण्¹ । व्युष्टादिभ्यः सप्तमी समर्थेभ्यो दीयते कार्य्यं चेत्यर्थेऽण् स्यात् । व्युष्टे—दीयते, कार्य्यं वा- वैयुष्टम् । 'न य्वाभ्याम्' इत्यैजागमः । नैत्यम् ॥ सप्तमीसमर्थ व्युष्ट (प्रभात) आदि प्रातिपदिकों से 'दीयते' और कार्य्य अर्थ में अण् प्रत्यय हो ॥६७॥

## तेन³ यथाकथाचहस्ताभ्यां⁵ णयतौ¹ ॥ ६८ ॥

तृतीयासमर्थाभ्यां यथाकथाच हस्तशब्दाभ्यां यथासङ्ख्यं णयतौ स्याताम् , दीयते, कार्यं चेत्यर्थे । यथाकथा च–दीयते, कार्य्यं वा, याथाकथाचम् ॥ अनादरेण देयम्—कार्य्यं वेत्यर्थः । हस्तेन—दीयते, कार्य्यं वा, हस्त्यम् ॥ तृतीयासमर्थ यथाकथाच और हस्त शब्द से दीयते और कार्य्य अर्थ में यथासङ्ख्य ण और यत प्रत्यय हो ॥ ६८ ॥

## सम्पादिनि⁷ ॥ ६९ ॥

तृतीयासमर्थात् सम्पादिन्यभिधेये ठञ् स्यात्। कर्णवेष्टकाभ्यां सम्पादि-कार्णवेष्टकिकम् मुखम्। कर्णालङ्काराभ्यामवश्यं शोभते, इत्यर्थः॥ सम्पादी वाच्य हो तो तृतीया समर्थ शब्दसे इनि प्रत्यय हो ॥९९॥

## कर्म्मवेषाद्यत् ॥ १००॥

क० तृ५, यत्१। आभ्यां तृतीयासमर्थाभ्यां सम्पादिनीत्यर्थे यत् स्यात्। कर्मणा सम्पादि-कर्मण्यम्—शौर्यम्। वेषेण सम्पादी वेष्यः—नटः॥ तृतीया समर्थ कर्म और वेष ( कृत्रिम आकार ) शब्द से सम्पादी अर्थमें यत् प्रत्यय हो ॥१००॥

## तस्मै४ प्रभवति^क्रि०सन्तापादिभ्यः५ ॥१०१॥

सन्तापादिभ्यश्चतुर्थी समर्थेभ्यः प्रभवतीत्यर्थे ठञ् स्यात्। सन्तापाय प्रभवति—सांतापिकं दुर्जनसङ्गतं वै। सान्तापिको ग्रीष्मकालः। सान्तापिकी नीचजनस्यसेवा॥ चतुर्थी समर्थ सन्तापादि प्रातिपदिक से प्रभवति (समर्थ) इस अर्थमें ठञ् प्रत्यय हो॥

## योगाद्यच्च ॥१०२॥

यो० तृ५, यत्१, च (अ)। चाट्ठञ्। योगाय प्रभवति—योग्यः। यौगिकः॥ चतुर्थी समर्थ योग शब्दसे यत् प्रत्यय हो और चकार से ठञ् भी हो ॥१०२॥

## कर्म्मण उकञ् ॥ १०३ ॥

कर्मणः५,उकञ्१। कर्म्मणे प्रभवति-कार्मुकं धनुः। उकञि टिलोपः॥ चतुर्थी समर्थ कर्मन् शब्द से प्रभवति इस अर्थ में उकञ् प्रत्यय हो ॥१०३॥

## समयस्तदस्य प्राप्तम् ॥१०४॥

समयः१, तद्१,अस्य६, प्राप्तम्१। प्रथमासमर्थात्समयशब्दात् षष्ठ्यर्थे ठञ् स्यात्। यत्तत् प्रथमासमर्थं प्राप्तं चेत् स्यात्। समयः प्राप्तोऽस्य—सामयिकं कार्य्यम्॥ प्राप्त समानाधिकरण प्रथमा समर्थ समय शब्दसे षष्ठ्यर्थ में ठञ् प्रत्यय हो ॥ १०४॥

## ऋतोरण् ॥ १०५ ॥

ऋतोः५, अण्१। ऋतुः प्राप्तोऽस्य-आर्त्तवम्-पुष्पम्। अणि 'ओर्गुणः' आदिवृद्धिः, रपरत्वम् प्राप्त समानाधिकरण प्रथमा समर्थ ऋतुशब्द से षष्ठ्यर्थ में अण् प्रत्यय हो॥

## छन्दसि७ घस्१ ॥१०६॥

ऋतुशब्दाच्छन्दसि विषये घस् स्यात् तदस्य प्राप्तमित्यर्थे। ऋत्वियः॥ छन्दोविषय में प्राप्त समानाधिकरण प्रथमासमर्थ ऋतु शब्दसे षष्ठ्यर्थ में घस् प्रत्यय हो॥ १०६॥

## कालाद्यत् ॥ १०७॥

कालात्५, यत्१। कालशब्दाद्यत् स्यात्तदस्य प्राप्तमित्यर्थे। कालः प्राप्तोऽस्य-काल्यं शीतम्। काल्यस्तापः॥ प्राप्तसमानाधिकरण प्रथमासमर्थ काल शब्द से षष्ठ्यर्थ में यत् प्रत्यय हो ॥१०७

## प्रकृष्टे७ ठञ्१ ॥ १०८॥

प्रकर्षे वर्त्तमानात् कालात् प्रथमासमर्थात् षष्ठ्यर्थे ठञ् स्यात्। प्रकृष्टो-दीर्घः काले-

ऽस्येति-कालिकं वैरम् । कालिकमृणम् ॥ प्रकर्ष में वर्त्तमान प्रथमासमर्थ कालशब्द से षष्ठ्यर्थ में ठञ् प्रत्यय हो ॥१०८॥

## प्रयोजनम्[1] ॥ १०९ ॥

प्रथमासमर्थात् षष्ठ्यर्थे ठञ् स्यात्, यत्तत् प्रथमासमर्थं प्रयोजनं चेत् भवेत् । इन्द्रमहः प्रयोजनमस्य-ऐन्द्रमहिकम् ॥ प्रयोजनसमानाधिकरण प्रथमासमर्थ शब्द से षष्ठ्यर्थ में ठञ् प्रत्यय हो ॥१०९॥

## विशाखाषाढादण्मन्थदण्डयोः ॥११०॥

वि० त्[5], अण्[1], म० योः[7] । आभ्यामण् स्यात् प्रयोजनमित्यर्थे—क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य—वैशाखः—मन्थः । आषाढः—दण्डः ॥ ( चूडादिभ्यउपसङ्ख्यानम् ) ॥ चूडाप्रयोजनमस्य-चौडम् । श्रद्धाप्रयोजनमस्य-श्राद्धम् ॥ यथा सङ्ख्य मन्थ ( मथनी ) और दण्ड ( मथनी ) वाच्य हों तो प्रयोजन समानाधिकरण प्रथमा समर्थ विशाखा और आषाढा शब्द से षष्ठ्यर्थ में अण् प्रत्यय हो ॥ ११० ॥

## अनुप्रवचनादिभ्यश्छः ॥ १११ ॥

अ० भ्यः[5], छः[1] । अनुप्रवचनं प्रयोजनमस्य—अनुप्रवचनीयम् ॥ प्रयोजनसमानाधिकरण प्रथमासमर्थ अनुवचनादि शब्दों से षष्ठ्यर्थ में छ प्रत्यय हो ॥१११॥

## समापनात्[5] सपूर्वपदात्[5] ॥११२॥

प्रयोजनमित्यर्थे छः स्यात् । व्याकरणसमापनं प्रयोजनमस्य-व्याकरणसमापनीयम् । न्यायसमापनीयम् ॥ प्रयोजन समानाधिकरण प्रथमासमर्थ सपूर्वपद समापन शब्द से षष्ठ्यर्थ में छ प्रत्यय हो ॥११२॥

## ऐकागारिकट्[1] चौरे[7] ॥११३॥

ऐकागारिकड् इति निपात्यते चौरेऽभिधेये । एकागारं प्रयोजनमस्य-ऐकागारिकः-चौरः । ऐकागारिकी ॥ चौर ( चोर ) वाच्य हो तो प्रयोजन अर्थ में ऐकागारिकट् शब्द निपातित है ॥११३॥

## आकालिकडाद्यन्तवचने ॥११४॥

आ० ड्[1], आ ने[7] । आद्यन्तवचने आकालिकड् इति निपात्यते । समानकालौ आद्यन्तौ यस्येति—आकालिकः । समानकालस्य आकालादेशः । आशुविनाशिनीत्यर्थः ॥ ( आकालाट् ठंश्च ) आकालिका विद्युत् ॥ ठञः पूर्णोऽवधिः ॥ आद्यन्त वचन में तदस्य प्रयोजन इस विषय के होने पर आकालिक यह शब्द निपातित है ॥११४॥

## तेन[3] तुल्यं[1] क्रिया[1] चेद्[अ] वतिः[1] ॥११५॥

तृतीयासमर्थात्तुल्यमित्यर्थे वतिः स्यात् । यत्तुल्यम् क्रिया चेत् सा भवेत् । ब्राह्मणेन तुल्यम्—ब्राह्मणवद्—अधीतेऽसौ । क्षत्रियवत् शूरायते ॥ तृतीयासमर्थ शब्द से क्रिया समानाधिकरण तुल्य अर्थ में वति प्रत्यय हो ॥ ११५ ॥

## तत्र तस्येव ॥ ११६ ॥

तत्र(अ), तस्य[6], इव(अ) । सप्तमी समर्थात् षष्ठी समर्थाच्च वतिः स्यात् । मथुरा-

यामिव—मथुरावत् स्रुघ्ने प्राकाराः। चैत्रस्येव चैत्रवत्—मैत्रस्य गावः॥ सप्तमी तथा षष्ठी समर्थ शब्द से इवार्थ में वति प्रत्यय हो ॥११६॥

## तदर्हम् ॥११७॥

तद्[२], अर्हम्[१]। द्वितीया समर्थादर्हतीत्यर्थे वतिः स्यात्। विधिमर्हति—विधिवत्॥ द्वितीया समर्थ शब्द से अर्ह इस अर्थ में वति प्रत्यय हो ॥११७॥

## "उपसर्गाच्छन्दसि" धात्वर्थे" ॥ ११८ ॥

धात्वर्थविशिष्टे साधने वर्त्तमानात् स्वार्थे वतिः स्यात्। यदुद्वतोनिवतः। उद्गतानिर्गतानित्यर्थः॥ धात्वर्थ में वर्त्तमान सोपसर्ग से छन्दोविषय होनेपर स्वार्थ में वति प्रत्यय हो ॥ ११८ ॥

## तस्य भावस्त्वतलौ ॥११६॥

तस्य[१], भावः[१], त्वतलौ[१]। षष्ठी समर्थाद्भाव इत्यर्थे त्वतलौ स्याताम्। प्रकृतिजन्यबोधेप्रकारो भावः। गोर्भावः-गोत्वम्। गोता। त्वान्तं क्लीवम्। तलन्तं स्त्रियाम्॥ षष्ठी समर्थ शब्द से भाव अर्थ में त्व और तल् प्रत्यय हो ॥११६॥

## आ[अ] च[अ] त्वात्[५] ॥१२०॥

( ब्रह्मणस्त्वः ) इत्यतः प्राक् त्वतलावधिक्रियेते॥ ब्राह्मणस्त्वः (५।१।१३६) इस सूत्र पर्यन्त त्व और तल् प्रत्यय का अधिकार है ॥१२०॥

## न नञ् पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः १२१

न(अ),न०त्[५],तत्[५] अ०भ्यः[५]। इतः परं ये भावप्रत्ययास्ते नञ् तत्पुरुषान्न स्युश्चतुरादीन् विहाय। अपतित्वम्। अपटुत्वम्॥ चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस शब्दों को छोड़कर नञ्पूर्व तत्पुरुष से यहां से आगे विहित भाव प्रत्यय न हों॥

## पृथ्वादिभ्य इमनिज्वा ॥१२२॥

पृ० भ्यः[५], इ० च्[१], वा(अ)। वावचनम्-अणादि समावेशार्थम्। पृथोर्भावः-प्रथिमा। 'रऋतो हलादेर्लघोः' इति ऋकारस्य रेफादेशः। 'टेः'—इति भस्य टेर्लोपः। पार्थिवम्। म्रदिमा। मार्दवम्॥ षष्ठीसमर्थ पृथ्वादि शब्दों से भाव में विकल्प से इमनिच् प्रत्यय हो ॥१२२॥

## वर्णदृढादिभ्यः ष्यञ्च ॥१२३॥

व० भ्यः[५], ष्यञ्[१], च(अ)। चादिमनिच्। शुक्लस्य भावः—शौक्ल्यम्। शुक्लिमा। शुक्लत्वम्। शुक्लता। दार्ढ्यम्। द्रढिमा। दृढत्वम्। दृढता॥ षष्ठीसमर्थ वर्ण विशेष वाचक और दृढादि शब्दों से भाव में ष्यञ् और इमनिच् प्रत्यय हो ॥ १२३ ॥

## गुणवचनब्राह्मणादिभ्यः" कर्मणि" च[अ] ॥ १२४ ॥

चाद् भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा—मौढ्यम्। ब्राह्मणस्य भावः कर्म वा—ब्राह्मण्यम्॥ ( अर्हतो नुम् च )॥ अर्हतो भावः कर्म वा—आर्हन्त्यम्। आर्हन्ती। ( चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम् )॥ चत्वार एव वर्णाः-चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामी-

ष्यम् । औपम्यम् । त्रैलोक्यमित्यादि । सर्वे वेदाः—सर्ववेदाः । तानधीतेऽसौ सार्ववैद्यः। ( चतुर्वेदस्योभयपदवृद्धिश्च ) ॥ चतुरोवेदानधीते-चतुर्वेदः । स एव-चातुर्वैद्यः ॥ भाव और कर्मवाच्य हो तो षष्ठीसमर्थ गुण वचन और ब्राह्मणादि शब्दों से ष्यञ् प्रत्यय हो ॥ १२४ ॥

## स्तेनाद्यन्नलोपश्च ॥ १२५ ॥

स्ते० त्[५], यत्[१], न० प[१]:, च(अ) । स्तेन शब्दात् षष्ठीसमर्थाद् भावकर्मणोर्यत् स्यात् नकारस्य च लोपः । स्तेनं चौर्ये पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । स्तेनाद् इति सूत्रं विभज्य—स्तैन्यमितिष्यञन्तमपि केचिदिच्छन्ति ॥ षष्ठी समर्थ स्तेन शब्द से भाव और कर्म में यत् प्रत्यय और स्तेन शब्दके नकार का लोप हो ॥१२५

## सख्युर्यः ॥ १२६ ॥

सख्युः[५], यः[१] । सख्युर्भावः कर्म वा-सख्यम् ॥ षष्ठी समर्थ सखि शब्द से भाव और कर्म में य प्रत्यय हो ॥१२६॥

## कपिज्ञात्योर्ढक् ॥ १२७ ॥

क०त्योः[६], ढक्[१] । आभ्यां भावकर्मणोरर्थयोर्ढक् स्यात् । कपेर्भावः कर्म वा-कापेयम् । ज्ञातेयम् ॥ षष्ठी समर्थ कपि और ज्ञाति शब्द से भाव और कर्म में ढक् प्रत्यय हो ॥१२७

## पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥

प० भ्यः[५], यक्[१] । पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च भावकर्मणोरर्थयोर्यक् स्यात् । सेनापतेर्भावः कर्म वा—सैनापत्यम् । प्राजापत्यम् । पौरोहित्यम् । राज्यम् ॥ षष्ठीसमर्थ पत्यन्त और पुरोहितादि प्रातिपदिकोंसे भाव और कर्म अर्थमें यक् प्रत्ययहो॥

## प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥

प्रा० भ्यः[५], अञ्[१] । अश्वस्य-भावः कर्म वा आश्वम् । औष्ट्रम् । वयोवचनेभ्यः। कौमारम् । कैशोरम् । उद्गात्रादिभ्यः । औद्गात्रम् । औन्नेत्रम ॥ षष्ठीसमर्थ प्राणभृज्जाति वाचक,वयोवचन और उद्गात्रादि शब्दोंसे भाव और कर्म अर्थ में अञ् प्रत्ययहो॥

## हायनान्तयुवादिभ्योऽण् ॥ १३० ॥

हा० भ्यः[५], अण्[१] । हायनान्तेभ्यः प्रातिपदिकेभ्यः युवादिभ्यश्चाण् स्याद् भाव कर्म्मणोरर्थयोः । द्विहायनस्य भावः कर्म वा—द्वैहायनम् । त्रैहायनम् । युवादिभ्यः । यूनोभावः, कर्म्म वा—यौवनम् । स्थाविरम् ॥ ( श्रोत्रियस्य यलोपश्च ) ॥ श्रोत्रियस्य भावः, कर्म वा—श्रौत्रम् ॥ षष्ठीसमर्थ हायनान्त और युवन् आदि शब्दों से भाव और कर्म अर्थ में अण् प्रत्यय हो ॥ १३० ॥

## इगन्ताच्च लघुपूर्वात् ॥१३१ ॥

इ० त्[५], च (अ), ल० त्[५], । भावकर्मणोरिगन्ताच्च लघुपूर्वादण् स्यात् । लघुः पूर्वोऽवयवोऽस्येति-लघुपूर्वः । शुचेर्भावः, कर्म वा शौचम् । मौनम् ॥ षष्ठीसमर्थ लघुपूर्वक इगन्त प्रातिपादिक से भाव और कर्म में अण् प्रत्यय हो ॥ १३१ ॥

## योपधाद् गुरूपोत्तमाद् वुञ् ॥ १३२ ॥

यो० त्[५], गु० त्[५], वुञ्[१]। रमणीयस्य भावः कर्म वा-रामणीयकम्। आभिधानीयकम् ( सहायाद्वा ) ॥ साहाय्यम्। साहायकम्॥ यकारोपध गुरूपोत्तम शब्द से भाव और कर्म में वुञ् प्रत्यय हो ॥ १३२ ॥

## द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥

द्व०भ्यः[५], च(अ)। भावकर्मणोर्द्वन्द्वसञ्ज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् स्यात्। शिष्योपाध्यायानाम् भावः कर्म वा-शैष्योपाध्यायिका। मनोजानाति परितोषयतीति मनोज्ञं वस्तु। तस्य भावः, कर्म वा—मानोज्ञकम्॥ षष्ठीसमर्थ द्वन्द्व संज्ञक और मनोज्ञादि शब्दों से भाव और कर्म में वुञ् प्रत्यय हो ॥ १३३ ॥

## गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४॥

गो० त्[५], श्ला० षु[७]। गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् स्यात् भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। श्लाघाविकत्थनम्। अत्याकारः पराधिक्षेपः। तदवेतस्तत्प्राप्तस्तज्ज्ञो वा। गार्गिकया श्लाघते। गार्ग्यत्वेन विकत्थत इत्यर्थः। गार्गिकयाऽत्या कुरुते। गार्ग्यत्वेनाधिक्षिपतीत्यर्थः। गार्गिकामवेतः। गार्ग्यत्वं प्राप्त इत्यर्थः॥ श्लाघा, अत्याकार तदवेत विषयभूत हों तो षष्ठी समर्थ गोत्र और चरणवाचक प्रातिपदिक से भाव और कर्ममें वुञ् प्रत्यय हो ॥ १३४ ॥

## होत्राभ्यश्छः ॥ १३५ ॥

हो० भ्यः[५], छः[१]। होत्राशब्द ऋत्विग्वाची। ऋत्विग् विशेषवाचिभ्यश्छः स्यात्। अच्छावाकस्य भावः कर्म वा-अच्छावाकीयम्। मैत्रावरुणीयम्॥ षष्ठी समर्थ ऋत्विग्विशेष वाचक शब्दों से भाव और कर्म में छ प्रत्यय हो ॥ १३५ ॥

## ब्रह्मणस्त्वः ॥ १३६ ॥

ब्र० णः[५], त्वः[१]। ब्रह्मन् शब्दात् होत्रावाचिनस्त्वः स्यात् भावकर्मणोः। ब्रह्मणो भावः कर्म वा-ब्रह्मत्वम्॥ षष्ठी समर्थ होत्रावाचक ब्रह्मन् शब्द से भाव और कर्म में त्व प्रत्यय हो ॥ १३६ ॥

इति पञ्चमाऽध्यायस्य प्रथमः पादः।

---

# अथ पञ्चमाऽध्यायस्य द्वितीयः पादः।

## धान्यानां[६] भवने[७] क्षेत्रे[७] खञ्[१] ॥ १ ॥

भवने क्षेत्रेऽभिधेये धान्यविशेषवाचिभ्यःषष्ठीसमर्थेभ्यः खञ् स्यात्। भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रम्—मौद्गीनम्॥ षष्ठी समर्थ धान्य विशेष वाचक शब्दों से भवन क्षेत्र वाच्य होने पर खञ् प्रत्यय हो ॥ १ ॥

## व्रीहिशाल्योर्ढक् ॥ २ ॥

व्री० ल्योः[६], ढक्[१]। व्रीहीणां भवनं क्षेत्रम् व्रैहेयम्। शालेयम्॥ भवन क्षेत्र वाच्य हो तो षष्ठी समर्थ व्रीहि और शालि शब्द से ढक् प्रत्यय हो ॥२॥

## यवयवकषष्टिकाद्यत् ॥ ३ ॥

य० त्[५], यत्[१] । यवानां भवनं क्षेत्रम्-यव्यम् । यवक्यम् । षष्टिक्यम् ॥ भवन क्षेत्र वाच्य हो तो षष्ठी समर्थ यव यवक ( जौ ) और षष्टिक शब्द से यत् प्रत्यय हो ॥३॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

वि० षा (अ), ति० भ्यः[५] । एभ्यो यद् वा स्याद् भवने क्षेत्रेऽभिधेये पक्षे खञ् । तिलस्य भवनं-क्षेत्रं तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् ॥ भवन क्षेत्रवाच्य होतो षष्ठी समर्थ तिल, माष ( उर्द ) उमा ( हल्दी ) भङ्गा ( सन ) और अणु ( कङ्गुनी ) शब्द से विकल्प करके यत् प्रत्यय हो ॥ ४ ॥

## सर्वचर्म्मणः[५] कृतः[१] खखञौ[१] ॥ ५ ॥

सर्वचर्म्मणा कृतः-सर्वचर्म्मीणः । सार्वचर्मीणः ॥ तृतीया समर्थ सर्वचर्मन् शब्द से कृत अर्थ में ख और खञ् प्रत्यय हो ॥ ५ ॥

## यथामुखसम्मुखस्य[६] दर्शनः[१] खः[१] ॥ ६ ॥

मुखस्य सदृशम्-यथामुखम्-प्रतिबिम्बम् । निपातनात् सादृश्येऽव्ययीभावः । समं सर्वं मुखं सम्मुखम् । समशब्दस्यान्तलोपो निपात्यते । यथामुखं दर्शनः-यथामुखीनः । सर्वस्य मुखस्य दर्शनः-सम्मुखीनः ॥ षष्ठी समर्थ यथामुख और सम्मुख शब्द से दर्शन अर्थ में ख प्रत्यय हो ॥ ६ ॥

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

तत्[२], स० देः[५], प० त्रम्[२], व्या० ति (क्रि) । सर्वादेः पथ्याद्यन्ताद् द्वितीयान्तात् खः स्यात् । सर्वपथान् व्याप्नोति-सर्वपथीनो रथः । सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीणमोदनम् ॥ पथिन् अङ्ग कर्म्मन् पत्र और पात्र हैं अन्त में जिसके ऐसे सर्वादि प्रातिपदिक से व्याप्नोति इस अर्थ में ख प्रत्यय हो ॥ ७ ॥

## आप्रपदं[२] प्राप्नोति[क्रि] ॥ ८ ॥

द्वितीयासमर्थादाप्रपदशब्दात्प्राप्नोतीत्यर्थे खः स्यात् । पादस्याग्रम्-प्रपदम् । तन्मर्यादीकृत्य-आप्रपदम् । आप्रपदीनः पटः ॥ द्वितीया समर्थ आप्रपद शब्द से प्राप्नोति इस अर्थ में ख प्रत्यय हो ॥ ८ ॥

## [२]अनुपदसर्वान्नायानयंबद्धाभक्षयतिनेयेषु[७] ॥ ९ ॥

अनुपदादिभ्यो बद्धादिष्वर्थेषु यथासङ्ख्यं खः स्यात् । अनुः-आयामे, सादृश्ये च । अनुपदं बद्धा-अनुपदीना-उपानत् । सर्वान्नानि भक्षयति-सर्वान्नीनः-भिक्षुः, आयानयः खलविशेषः तन्नेयः अयानयीनः शारः ॥ द्वितीया समर्थ अनुपद सर्वान्न और अयानय शब्द से यथाक्रम बद्धाभक्षयति और नेय अर्थ में ख प्रत्यय हो ॥ ९ ॥

## परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥

प० त्रम्[२], अ० ति (क्रि) । परोवरादिभ्यो द्वितीयासमर्थेभ्योऽनुभवतीत्यर्थे खः स्यात् । परांश्च अवरांश्च अनुभवति-परोवरीणः अवरस्योत्वं निपात्यते । परांश्च परतरांश्च

अनुभवति-परम्परीणः। प्रकृतेः परम्परभावो निपात्यते। पुत्रपौत्राननु भवति पुत्रपौत्रीणः॥ द्वितीया समर्थ परोवर परम्पर पुत्र पौत्र शब्द से अनुभवति इस अर्थ में ख प्रत्यय हो॥ १०॥

## अवारपारात्यन्तानुकामम्[२] गामी[१] ॥ ११ ॥

अवारपारअत्यन्तअनुकाम इत्येभ्यो द्वितीयासमर्थेभ्यो गामीत्यर्थे खः स्यात्। गमिष्यतीति-गामी। अवारपारं गामी-अवारपारीणः। (विपरीताच्च) पारावारीणः। (विगृहीतादपीष्यते)॥ अवारीणः। पारीणः। अत्यन्तगामी-अत्यन्तीनः। भृशंगन्तेत्यर्थः। अनुकामंगामी-अनुकामीनः यथेष्टं गन्तेत्यर्थः॥ गामी अर्थ में द्वितीया समर्थ अवारपार अत्यन्त और अनुकाम शब्द से ख प्रत्यय हो॥ ११॥

## समांसमां[२] विजायते[क्रि] ॥ १२ ॥

यलोपः अवशिष्टविभक्तेः, अलुक् च पूर्वपदे निपात्यते। समायां समायां विजायते-समांसमीना गौः। समांसमीना-या यैव प्रतिवर्षं प्रसूयते॥ विजायते (गर्भ धारण करने) अर्थ में द्वितीया समर्थ समां समां शब्द से ख प्रत्यय हो॥ १२॥

## अद्यश्वीनावष्टब्धे ॥ १३ ॥

अ० ना[१], अ० ब्धे। अद्यश्वीन इति निपात्यते अवष्टब्धे। अद्य,श्वो वा विजायते-अद्यश्वीना-वडवा। केचित्तु विजायते इति नानुवर्त्तयन्ति। अद्यश्वीनं मरणम्॥ अवष्टब्ध (आसन्नप्रसव) हो तो अद्य श्वस् शब्द से ख प्रत्ययान्त अद्यश्वीना शब्द निपातित है॥ १३॥

## आगवीनः[१] ॥ १४ ॥

आङ्पूर्वाद्गोः कर्म्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्य्यन्तं यः कर्म्म करोति सः आगवीनः॥ कर्मकारी वाच्य हो तो आङ्पूर्वक गोशब्द से ख प्रत्ययान्त आगवीन (गौओं का चरवाहा) शब्द निपातित है॥ १४॥

## अनुग्वलंगामी ॥ १५ ॥

अ० गु०(अ) अ० मी[१]। अनुगुशब्दादलंगामीत्यर्थे खः स्यात्। अनुगुगोः पश्चात् पर्य्याप्तं गच्छति-अनुगवीनः-गोपालः॥ अलंगामी अर्थ में अनुगु शब्द से ख प्रत्यय हो॥ १५॥

## अध्वनोयत्खौ ॥ १६ ॥

अ० नः[५] य० खौ[१]। अध्वन् शब्दाद् द्वितीयासमर्थादलंगामीत्यर्थे यत्खौ स्याताम्। अध्वानमलं गच्छति-अध्वन्यः। अध्वनीनः येचाऽभावकर्मणोः, आत्माऽध्वानौखे, इत्याभ्यांप्रकृतिभावः॥ अलंगामी इस अर्थ में द्वितीया समर्थ अध्वन् शब्द से यत् और ख प्रत्यय हो॥ १६॥

## अभ्यमित्राच्छच ॥१७॥

अ० त्[५], छः[१], च (अ)। अभ्यमित्रशब्दात् द्वितीयासमर्थादलंगामीत्यर्थे छः स्याद्यत्खौ। अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्राऽभिमुखं सुष्ठु गच्छतीत्यर्थः॥ अलङ्गामी इस अर्थ में द्वितीया समर्थ अभ्यमित्र (शत्रु) शब्द से छ, यत् और ख प्रत्यय हो॥१७॥

## गोष्ठात्[5] खञ्[1] भूतपूर्वे[7] ॥१८॥

गावस्तिष्ठन्त्यत्र गोष्ठम्। भूतपूर्वोपाधिकाद् गोष्ठशब्दात्स्वार्थे खञ् स्यात्। गोष्ठो भूतपूर्वः-गौष्ठीनः देशः ॥ भूतपूर्वोपाधिक गोष्ठ शब्द से खञ् प्रत्यय हो ॥१८॥

## अश्वस्यैकाहगमः ॥१९॥

अ० स्य[6], ए० मः[1]। अश्वशब्दात् षष्ठीसमर्थादेकाहगम इत्यर्थे खञ् स्यात्। एकाहेन गम्यते इति-एकाहगमः-आश्वीनः—अध्वा ॥ षष्ठीसमर्थ अश्व शब्द से एकाहगम इस अर्थ में खञ् प्रत्यय हो ॥१९॥

## शालीनकौपीने[1] अधृष्टाकार्ययोः[7] ॥२०॥

शालीनकौपीनशब्दौ यथासङ्ख्यमधृष्टेऽकार्ये चाभिधेये निपात्येते। शालाप्रवेशमर्हति-शालीनः—अधृष्टः। कूपपतनमर्हति—कौपीनं-पापम् ॥ यथाक्रम अधृष्ट और अकार्य्य वाच्य हो तो खञ् प्रत्ययान्त शालीन और कौपीन शब्द निपातित हैं ॥ २०॥

## व्रातेन[3] जीवति[क्रि०] ॥२१॥

व्रातेन जीवति—व्रातीनः ॥ तृतीयासमर्थ व्रात (समूह) शब्दसे जीवति अर्थ में खञ् प्रत्यय हो ॥ २१॥

## साप्तपदीनं[1] सख्यम्[1] ॥२२॥

सख्येऽभिधेये साप्तपदीनमिति निपात्यते। सप्तभिः पदैरवाप्यते साप्तपदीनम् ॥ सख्य ( मित्रता) वाच्य हो तो सप्तपद शब्द से खञ् प्रत्ययान्त साप्तपदीन शब्द निपातित है ॥२२॥

## हैयङ्गवीनं[1] सञ्ज्ञायाम्[7] ॥२३॥

संज्ञायां विषये हैयङ्गवीनमिति निपात्यते। हैयङ्गवीनम्-नवनीतम् ॥ संज्ञाविषय में हैयङ्गवीन शब्द निपातित है ॥ २३ ॥

## तस्य[6] पाकमूले[1] पील्वादिकर्णादिभ्यः[5] कुणब्जाहचौ[1] ॥ २४ ॥

पीलूनां वृक्षाणां फलानां वा पाकः-पीलुकुणः। कर्णस्य मूलम्-कर्णजाहम् ॥ षष्ठी समर्थ पील्वादि और कर्णादि शब्दों से यथाक्रम पाक और मूल अर्थ में कुणप् और जाहच् प्रत्यय हो ॥२४॥

## [5]पक्षात्तिः[1] ॥२५॥

षष्ठीसमर्थात्पक्षशब्दाद् मूलेऽभिधेये तिः स्यात्। पक्षस्य मूलम्-पक्षतिः प्रतिपद् ॥ षष्ठीसमर्थ पक्ष शब्द से मूलअर्थ में ति प्रत्यय हो ॥२५॥

## तेन वित्तश्चुञ्चुप्चणपौ ॥ २६॥

तेन[3], वित्तः[1], चु० पौ[1]। तृतीयासमर्थाद् वित्त इत्यर्थे चुञ्चुप् चणपौ स्याताम्। वित्तः प्रतीतो ज्ञात इत्यर्थः। विद्यया वित्तः-विद्याचुञ्चुः। विद्याचणः ॥ तृतीयासमर्थ शब्दसे वित्त अर्थमें चुञ्चुप् और चणप् प्रत्यय हो ॥ २६ ॥

## विनञ्भ्यां[5] नानाञौ[1] न[अ] सह[अ] ॥२७॥

असहार्थे पृथग्भावे वर्त्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ स्याताम्। विना। नाना। नञो नाञि आदि वृद्धौ रूपम्॥ असहार्थ में वर्त्तमान वि और नञ् शब्द से स्वार्थ में यथाक्रम ना और नाञ् प्रत्यय हो॥ २७॥

## वेः[५] शालच्छङ्कटचौ[१] ॥ २८ ॥

विशब्दात् शालच् शङ्कटच् इतीमौ स्याताम्। क्रियाविशिष्टसाधनवाचकात् स्वार्थे। विस्तृतम् विशालम्। विशङ्कटम्॥ वि उपसर्ग पूर्वक स्वार्थ में शालच् और शङ्कटच् प्रत्यय हो॥ २८॥

## सम्प्रोदश्च कटच् ॥२९॥

सम्प्रोदः[५], च(अ), कटच्[१]। सम्, प्र, उद् इत्येभ्यः कटच् स्यात्। सङ्कटम्। प्रकटम्। उत्कटम्। चाद् विकटम्॥ ( अलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम् )॥ अलाबूनां रजः–अलाबूकटः। तिलकटः। उमाकटः। भङ्गाकटः॥ ( गोष्ठजादयः स्थानादिषु पशुनामादिभ्य उपसङ्ख्यानम् ) ॥ गवां स्थानम्–गोगोष्ठम्॥ ( सङ्घाते कटच् )॥ अवीनां सङ्घातः–अविकटः॥ ( विस्तारे पटच् ) ॥ अविपटः॥ ( द्वित्वेगोयुगच् )॥ द्वावुष्ट्रौ उष्ट्रगोयुगम्॥ ( षट्त्वेषड्गवच् ) हस्तिषड्गवम्। ( स्नेहे तैलच् ) । तिलतैलम्। सर्षपतैलम्। ( भवने क्षेत्रे शाकटशाकिनौ ) ॥ इक्षुशाकटम्। इक्षुशाकिनम्॥ सम् प्र, उद् और वि शब्दसे कटच् प्रत्यय हो॥ २९॥

## अवात्कुटारच्च ॥ ३०॥

अवात्[५], कु० च्[१], च(अ)। चात् कटच्। अवाचीनः–अवकुटारः। अवकटः॥ अव शब्दसे कुटारच् और कटच् प्रत्यय हो॥३०॥

## नते[७] नासिकायाः[६] सञ्ज्ञायां [७]टीटञ्नाटज्भ्रटचः[१] ॥३१॥

नासिकायाः सम्बन्धिनि नतेऽभिधेये टीटच्, नाटच्, भ्रटच् इतीमे प्रत्ययाः स्युः सञ्ज्ञायां विषये। नमनम्—नतम्। नासिकायां नतम्—अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिका—अवटीटा। पुरुषोऽवटीटः॥ नासिका सम्बन्धि नत वाच्य हो तो संज्ञा विषय में अव शब्द से टीटच्, नाटच् और भ्रटच् प्रत्यय हो॥३१॥

## नेर्बिडज्बिरीसचौ ॥ ३२ ॥

नेः[५], बि०चौ[१]। निशब्दान्नासिकाया नतेऽभिधेये बिडच् बिरीसच् इतीमौ स्यातां संज्ञायां विषये। निबीडम्। निबिरीसम्। तद्योगान्नासिकापि। पुरुषोऽपि निबिडो निबिरीसः॥ नासिका सम्बन्धी नत वाच्य हो तो सञ्ज्ञा विषय में निशब्द से बिडच् और बिरीसच् प्रत्यय हो॥ ३२॥

## इनच्पिटच्चिकचि च ॥ ३३ ॥

इनच[१], पिटच्[१], चिक[१], चि[१], च(अ)। निशब्दान्नासिकाया नतेऽभिधेये इनच् पिटच् इतीमौ प्रत्ययौ स्यातां तत्सन्नियोगेन च निशब्दस्य यथाक्रमं चिक चि इत्येतावादेशौ स्याताम्। चिक्किनः। चिपिटः ( क प्रत्ययचिकादेशौ च वक्तव्यौ )॥ चिक्कः॥ (क्लिन्नस्य चिल्पिल् लश्चाऽस्य चक्षुषी)॥ क्लिन्ने चक्षुषी यस्य चिल्लः, पिल्लः॥

( चुल् च ) चुल्लः ॥ नासिका सम्बन्धी नत वाच्य हो तो सञ्ज्ञाविषय में निशब्द से इनच् और पिटच् प्रत्यय हो ॥ ३३ ॥

## उपाधिभ्यां त्यकन्नासन्नाऽऽरूढयोः ॥ ३४ ॥

उ०भ्याम्[५], त्यकन्[१], आ०योः[७] । संज्ञायां विषये उप अधि इत्याभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन् स्यात् । पर्वतस्याऽऽसन्नं स्थलम्-उपत्यका । आरूढं स्थलम्-अधित्यका ॥ यथाक्रम आसन्न और आरूढ अर्थ में वर्त्तमान उप और अधि शब्द से संज्ञा विषय में त्यकन् प्रत्यय हो ॥ ३४ ॥

## कर्मणि घटोऽठच् ॥ ३५ ॥

कर्मणि[७], घटः[१], अठच्[१] । कर्म्मशब्दात् सप्तमी समर्थाद् घट इत्यर्थेऽठच् प्रत्ययः स्यात् । घटते इति घटः-पचाद्यच् । कर्मणिघटते-कर्म्मठः पुरुषः ॥ सप्तमीसमर्थ कर्म्मन् शब्द से घट अर्थ में अठच् प्रत्यय हो ॥ ३५ ॥

## तदस्य संजातं तारकादिभ्य इतच् ॥ ३६ ॥

तद्[१], अस्य[६], सं०तम्[१], ता०भ्यः[५], इतच्[१] । संजातप्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः षष्ठ्यर्थे इतच् प्रत्ययः स्यात् । तारकाः सञ्जाता अस्य-तारकितं नभः ॥ संजात समानाधिकरण प्रथमा समर्थ तारकादि शब्दोंसे षष्ठीके अर्थमें इतच् प्रत्यय हो ॥

## प्रमाणे[७] द्वयसज् दघ्नञ् मात्रचः[१] ॥ ३७ ॥

प्रथमासमर्थात् षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच् इतीमे प्रत्ययाः स्युः,यत् तत् प्रथमा समर्थं प्रमाणं चेत् स्यात् । ऊरुः प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् , ऊरुमात्रम् । ( प्रमाणेलः ) ॥ शमः प्रमाणमस्य शमः । दिष्टिः, वितस्तिः ॥ ( द्विगोर्नित्यम् ) ॥ द्वौ शमौ प्रमाणमस्य-द्विशमः, त्रिशमः । द्विवितस्तिः ॥ ( डट्स्तोमेवाच्यः ) । पञ्चदशस्तोमः । पञ्चदशीरात्रिः ॥ ( शत्शतोर्डिनिः ) ॥ त्रिंशिनो मासाः । पञ्चदिशिनोऽर्द्धमासाः ॥ ( विंशतेश्च ) ॥ विंशिनः अङ्गिरसः ॥ ( प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशयेमात्रच्वाच्यः ) ॥ शममात्रम् , प्रस्थमात्रम् , पञ्चमात्रम् ॥ ( वत्वन्तात्स्वार्थेद्वयसज्मात्रचौ ॥ तावदेव तावद्द्वयसम् । तावन्मात्रम् । एतावद्द्वयसम्, एतावन्मात्रम् ॥प्रमाण समानाधिकरण प्रथमासमर्थ शब्दसे षष्ठ्यर्थमें द्वयसच् दघ्नच् और मात्रच् प्रत्ययहो ॥

## पुरुषहस्तिभ्यामण् च ॥ ३८ ॥

पु०म्[५], अण्[१], च(अ) । प्रथमासमर्थाभ्यां पुरुषहस्तिभ्यां प्रमाणोपाधिकाभ्यां षष्ठ्यर्थेऽण् स्याच्चाद् द्वयसजादयश्च । पुरुषः प्रमाणमस्य-पौरुषम् । पुरुषद्वयसम् । पुरुषदघ्नम् । पुरुषमात्रम् । हास्तिनम् । हस्तिद्वयसम् । हस्तिदघ्नम् । हस्तिमात्रम् ॥ प्रमाण समानाधिकरण प्रथमासमर्थ पुरुष और हस्ति ।शब्द से षष्ठ्यर्थ में अण् द्वयसच्, दघ्नच् और मात्रच् प्रत्यय हो ॥ ३८ ॥

## यत्तदेतेभ्यः[५] परिमाणे[७] वतुप्[१] ॥ ३९ ॥

प्रथमासमर्थेभ्यो यत्तदेतेभ्यः परिमाणोपाधिकेभ्यः षष्ठ्यर्थे वतुप् स्यात् । यत् परिमाणमस्य-यावान् । तावान् । एतावान् ॥ परिमाणोपाधिक प्रथमासमर्थ यद् तद् और एतद् शब्द से षष्ठ्यर्थ में वतुप् प्रत्यय हो ॥ ३९ ॥

## किमिदंभ्यां वोघः ॥ ४० ॥

किं०म्[५], वः[६], घः[१] । किमिदम्भ्यामुत्तरवतुपो वकारस्य घकारादेशः स्यात् । कियान् । इयान् ॥ (७ । १ । २) इति यादेशः । (४ । ६ । १४) इति दीर्घः । (७।१।७०) इति नुमागमः ॥ परिमाणोपाधिक प्रथमासमर्थ किम् और इदम् शब्द से वतुप् प्रत्यय हो और प्रत्यय के वकार को घकारादेश हो ॥ ४० ॥

## किमः[५] सङ्ख्यापरिमाणे[७] डति[१] च[अ] ॥ ४१ ॥

सङ्ख्यापरिमाणे वर्त्तमानात् किमः प्रथमासमर्थात् षष्ठ्यर्थे डतिः स्यात् । चाद् वतुप् तस्य च वस्य घः स्यात् । का सङ्ख्या येषां ते कति । कियन्तः ॥ सङ्ख्या के परिमाण में वर्त्तमान प्रथमासमर्थ किम् शब्द से षष्ठ्यर्थ में डति और वतुप् प्रत्यय हो और वतुप् के वकार को घकारादेश हो ॥ ४१ ॥

## सङ्ख्याया[५] अवयवे[७] तयप्[१] ॥ ४२ ॥

सङ्ख्याया अवयवे वर्त्तमानाया षष्ठ्यर्थे तयप् स्यात् । पञ्च अवयवा अस्य पञ्चतयं-दारु । चतुष्टयम् वस्त्रम् । चतुष्टयी ॥ अवयव में वर्त्तमान प्रथमासमर्थ सङ्ख्या वाचक शब्दों से षष्ठ्यर्थ में तयप् प्रत्यय हो ॥ ४२ ॥

## [५]द्वित्रिभ्यां [६]तयस्याऽयज्[१] वा[अ] ॥ ४३ ॥

द्वित्रिभ्यां परस्य तयस्य वाऽयजादेशः स्यात् । द्वाववयवावस्य-द्वयम् । द्वितयम् । त्रयम् । त्रितयम् । द्वि और त्रि शब्दसे विहित तयप् प्रत्ययको विकल्पसे अयच् आदेशहो॥

## उभादुदात्तो नित्यम् ॥ ४४ ॥

उ०त्[५], उ०त्त[१], नित्यम्[२] ॥उभशब्दात परस्य तयपो नित्यमयजादेशः स्यात् स चोदात्तः । उभयम्॥ उभ शब्दसे विहित तयप् प्रत्ययको नित्य उदात्त अयच् आदेशहो॥

## तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ४५ ॥

तद्[१];अ० न्[७], अ०म्[१],इति(अ),द० त्[५], डः[१] । सप्तम्यर्थे प्रथमासमर्थाद् दशान्तात् प्रातिपदिकाड्डः स्यात्, यत्तत् प्रथमासमर्थमधिकं चेत् स्यात् । एकादश अधिका अस्मिन् शते-एकादशं शतम् । एकादशं सहस्रम् । (शतसहस्रयोरेवेष्यते) ॥ नेह-एकादश अधिका अस्यां विंशतौ ॥ (प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते)॥ नेह-एकादश माषा अधिका अस्मिन् सुवर्णशते ॥ अधिक समानाधिकरण प्रथमासमर्थ दशान्तप्रातिपदिक से सप्तम्यर्थ में ड प्रत्यय हो ॥ ४५॥

## शदन्तविंशतेश्च ॥४६॥

श० तेः[५], च(अ) । शदन्तात् प्रातिपदिकात् विंशतेश्च डः स्यात्तदस्मिन्नधिकमित्यर्थे । त्रिंशदधिका अस्मिञ्छते-त्रिंशं शतम् । विंशतम् ॥ ( तदन्तादपीति वक्तव्यम् ) ॥ एकविंशं शतम् ॥ अधिक समानाधिकरण प्रथमासमर्थ शदन्त और विंशति प्रातिपदिक से सप्तम्यर्थ में ड प्रत्यय हो ॥ ४६ ॥

## सङ्ख्याया[५] गुणस्य[६] निमाने[७] मयट्[१] ॥४७॥

भागस्यमूल्ये वर्त्तमानात् प्रथमान्तात् सङ्ख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् ।

यवानां द्वौ भागौ निमानमस्योदश्वित्—भागस्य—द्विमयम्—उदश्विद्यवानाम् ॥ गुण (भाग) के निमान (मूल्य) में वर्त्तमान प्रथमासमर्थ सङ्ख्यावाचक प्रातिपदिक से षष्ठ्यर्थ में मयट् प्रत्यय हो ॥ ४७ ॥

## तस्य[6] पूरणे[7] डट्[1] ॥ ४८॥

षष्ठीसमर्थात् सङ्ख्यावाचिनः प्रातिपदिकात् पूरण इत्यर्थे डट् स्यात् । पूर्यतेऽनेनेति पूरणम् । एकादशानाम् पूरणः एकादशः । त्रयोदशः ॥ षष्ठीसमर्थ सङ्ख्यावाचक प्रातिपदिक से पूरण अर्थमें डट् प्रत्यय हो॥४८॥

## नान्तादसङ्ख्यादेर्मयट् ॥ ४६ ॥

ना० त्[5], अ० देः[5], मयट्[1] । नकारान्तात् सङ्ख्यावाचिनः प्रातिपतिकादसङ्ख्यादेः परस्य डटो मयडागमः स्यात् । पञ्चानां पूरणः-पञ्चमः। सप्तमः। दशमः ॥ सङ्ख्या जिसके पूर्व नहीं ऐसे नकारान्त सङ्ख्यावाचक प्रातिपदिक से परे डट् को मयट् का आगम हो ॥ ४६ ॥

## थट्[1] च[अ] छन्दसि[7] ॥ ५० ॥

नान्तादसङ्ख्यादेः परस्य डटस्थट् स्यात् मयट् च पर्णमयानि पञ्चथानि भवन्ति—पञ्चथः। पञ्चमः ॥ छन्दोविषय में असङ्ख्यादि नकारान्त सङ्ख्यावाचक प्रातिपदिक से परे डट् प्रत्यय को थट् और मयट् का आगम हो ॥ ५२ ॥

## षट्कतिकतिपयचतुरां[6] थुक्[1] ॥ ५१ ॥

एषां थुगागमः स्याड्डति । षण्णां पूरणः-षष्ठः। कतिथः। कतिपयथः चतुर्थः ॥ (चतुरश्छयतावाद्यक्षरलोपश्च) ॥ तुरीयः। तुर्यः ॥ डट् प्रत्यय परे हो तो षट्, कति, कतिपय और चतुर् शब्द को थुक् का आगम हो ॥ ५१ ॥

## बहुपूगगणसङ्घस्य[6] तिथुक्[1] ॥ ५२ ॥

एषां डटि तिथुगागमः स्यात्। बहूनां पूरणः-बहुतिथः। पूगतिथः। गणतिथः। सङ्घतिथः ॥ डट् प्रत्यय परे होतो बहु, पूग (समूह) गण और सङ्घ (समूह) शब्द को तिथुक् का आगम हो ॥ ५२ ॥

## वतोरिथुक् ॥ ५३ ॥

वतोः[5], इथुक्[1] । वतोर्डटीथुगागमः स्यात्। यावतां पूरणः यावतिथः। तावतिथः। एतावतिथः ॥ डट् प्रत्यय परे हो तो वत्वन्त सङ्ख्यावाचक प्रातिपदिक को इथुक् का आगम हो ॥ ५३ ॥

## द्वेस्तीयः ॥ ५४ ॥

द्वेः[5], तीयः[1]। पूरणेऽर्थे द्विशब्दात्तीयः प्रत्ययः स्यात्। द्वयोः पूरणः-द्वितीयः ॥ षष्ठी समर्थ द्वि शब्द से पूरण अर्थ में तीय प्रत्यय हो ॥ ५४ ॥

## त्रेः[6] सम्प्रसारणं[1] च[अ] ॥ ५५ ॥

पूरणेऽर्थे त्रिशब्दात्तीयप्रत्ययस्तत्सन्नियोगेन त्रेः सम्प्रसारणं च स्यात्। त्रयाणां पूरणः-तृतीयः ॥ षष्ठी समर्थ त्रि शब्द से पूरण अर्थ में तीय प्रत्यय और त्रि शब्द को सम्प्रसारण भी हो ॥ ५५ ॥

## विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५६ ॥

विं०भ्यः[५], तमट्[१], अ० म् (अ) । एभ्यो डटस्तमडागमो वा स्यात् । विंशतेः पूरणः- विंशतितमः । विंशः । एकविंशतितमः । एकविंशः । एकत्रिंशत्तमः । एकत्रिंशः ॥ विंशति आदि शब्दों से परे डट् प्रत्यय को विकल्प से तमट् आगम हो ॥ ५६ ॥

## नित्यं शतादिमासार्द्धमाससंवत्सराच्च ॥ ५७ ॥

नित्यम्[२], श० त्[५], च (अ) । शताद्यादिभ्यो डटो नित्यं तमडागमः स्यात् । शतस्य पूरणः शततमः । सहस्रतमः । मासस्य पूरणः-मासतमो दिवसः । अर्द्धमासतमः । संवत्सरतमः ॥ शतादि मास अर्द्धमास और संवत्सर शब्द से परे डट् प्रत्यय को नित्य तमट् आगम हो ॥५७॥

## षष्ठ्यादेश्चाऽसंख्यादेः[५] ॥ ५८ ॥

षष्ठ्यादेः संख्याशब्दादसंख्यादेर्डटो नित्यं तमडागमः स्यात् । षष्ठितमः । सप्ततितमः ॥ असंख्यादि षष्ठी आदि सङ्ख्या शब्दों से परे डट् प्रत्यय को तमट् आगम हो ॥ ५८ ॥

## मतौ[७] छः[१] सूक्तसाम्नोः[७] ॥ ५९ ॥

मत्वर्थे छः स्यात् सूक्ते सामनि चाभिधेये । अच्छावाक शब्दोऽस्मिन्नस्ति-अच्छावाकीयं सूक्तम् । वारवन्तीयं साम ॥ सूक्त और साम वाच्य हों तो प्रातिपदिक से मत्वर्थ में छ प्रत्यय हो ॥ ५९ ॥

## अध्यायानुवाकयोर्लुक् ॥ ६० ॥

अ० योः[७], लुक्[१] । मत्वर्थे उत्पन्नस्य छस्य वा लुक् स्यात्, अध्यायानुवाकयोरभिधेययोः । गर्दभाण्डः । गर्दभाण्डीयः । गर्दभाण्डशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः ॥ अध्याय और अनुवाक वाच्य हो तो प्रातिपदिक से मत्वर्थ में उत्पन्न छ प्रत्यय का विकल्प से लुक् हो ॥ ६० ॥

## विमुक्तादिभ्योऽण् ॥ ६१ ॥

वि० भ्यः[५], अण्[१] । मत्वर्थेऽण् स्यादध्यायानुवाकयोः । विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायोऽनुवाको वा, विमुक्तशब्दयुक्तोऽध्यायोऽनुवाको वेत्यर्थः ॥ अध्याय और अनुवाक वाच्य हो तो मत्वर्थ में विमुक्तादि प्रातिपदिकों से अण् प्रत्यय हो ॥ ६१ ॥

## गोषदादिभ्यो वुन् ॥ ६२ ॥

गो० भ्यः[५], वुन्[१] । गोषदादिभ्यो वुन् स्याद् मत्वर्थेऽध्यायानुवाकयोः । गोषद-शब्दोऽस्मिन्नस्ति गोषदकोऽध्यायोऽनुवाको वा ॥ अध्याय और अनुवाक वाच्य हो तो गोषदादि प्रातिपदिकों से मत्वर्थ में वुन् प्रत्यय हो ॥ ६२ ॥

## तत्र[७] कुशलः[१] पथः[५] ॥ ६३ ॥

सप्तमीसमर्थात् पथिन्शब्दात् कुशल इत्यर्थे वुन् स्यात् । पथि कुशलः-पथिकः ॥ सप्तमीसमर्थ पथिन् शब्द से कुशल अर्थ में वुन् प्रत्यय हो ॥ ६३ ॥

## आकर्षादिभ्यः[५] कन्[१] ॥ ६४ ॥

आकर्षादिभ्यः सप्तमी समर्थेभ्यः कुशल इत्यर्थे कन् स्यात्। आकर्षे कुशलः-आकर्षकः ॥ सप्तमी समर्थ आकर्षादि शब्दों से कुशल अर्थ में कन् प्रत्यय हो ॥ ६४ ॥

## धनहिरण्यात्[५] कामे[७] ॥ ६५ ॥

धनहिरण्यशब्दाभ्यां सप्तमीसमर्थाभ्यां काम इत्यर्थे कन् स्यात्। काम इच्छा। धने कामोधनकोदेवदत्तस्य। हिरण्यकोदेवदत्तस्य ॥ सप्तमी समर्थ धन और हिरण्य शब्द से काम अर्थ में कन् प्रत्यय हो ॥ ६५ ॥

## स्वाङ्गेभ्यः[५] प्रसिते[७] ॥ ६६ ॥

सप्तमीसमर्थेभ्यः स्वाङ्गवाचिशब्देभ्यः प्रसित इत्यर्थे कन् स्यात्। केशेषु प्रसितः-केशकः। केशरचनायां तत्पर इत्यर्थः। सप्तमी समर्थ स्वाङ्ग वाचक शब्दों से प्रसित अर्थ में कन् प्रत्यय हो ॥ ६६ ॥

## उदराट्ठगाद्यूने ॥ ६७ ॥

उ०त्[५], ठक्[१], आ०ने[७]। सप्तमीसमर्थादुदरशब्दात् प्रसित इत्यर्थे ठक् स्यादाद्यूने। बुभुक्षया अत्यन्तपीडिते उदरे प्रसितः-औदरिकः ॥ सप्तमीसमर्थ उदर शब्द से प्रसित अर्थ में आद्यून ( पेटू ) प्रत्यार्थ हो तो ठक् प्रत्यय हो ॥ ६७ ॥

## सस्येन[३] परिजातः[१] ॥ ६८ ॥

सस्य शब्दात् तृतीयासमर्थात्परिजात इत्यर्थे कन् स्यात्। सस्य शब्दः-गुणवाची न तु धान्यवाची। सस्येन गुणेन परिजातः सम्बद्धः-सस्यकः साधुः ॥ तृतीया समर्थ सस्य शब्द से परिजात इस अर्थ में कन् प्रत्यय हो ॥ ६८ ॥

## अंशं[२] हारी[१] ॥ ६९ ॥

द्वितीयासमर्थादंशशब्दाद्धारीत्यर्थे कन् स्यात्। अंशं हारी-अंशको दायादः। अंशकः पुत्रः ॥ द्वितीयासमर्थ अंश शब्द से हारी इस अर्थ में कन् प्रत्यय हो ॥ ६९ ॥

## तन्त्रादचिरापहृते ॥ ७० ॥

त०त्[५], अ०ते[७]। पञ्चमीसमर्थात्तन्त्रशब्दादचिरापहृत इत्यर्थे कन् स्यात्। तन्त्रादचिरापहृतः-तन्त्रकः पटः। प्रत्यग्र इत्यर्थः ॥ पञ्चमीसमर्थ तन्त्र शब्द से अचिरापहृत अर्थ में कन् प्रत्यय हो ॥ ७० ॥

## ब्राह्मणकोष्णिके[१] सञ्ज्ञायाम्[७] ॥ ७१ ॥

ब्राह्मणक उष्णिक इतीमौ कन् प्रत्ययान्तौ निपात्येते। आयुधजीविनो ब्राह्मणा यस्मिन् देशे सन्ति-स ब्राह्मणको देशः। अल्पमन्नं यस्यां सा-उष्णिका यवागूः ॥ सञ्ज्ञा विषय में कन् प्रत्ययान्त ब्राह्मणक और उष्णिक शब्द निपातित हैं ॥ ७१ ॥

## शीतोष्णाभ्यां[५] कारिणि[७] ॥ ७२ ॥

कारिण्यभिधेये शीतोष्णाभ्यां कन् स्यात्। शीतं करोतीति-शीतकः-अलसो जड उच्यते। उष्णं करोतीति-उष्णकः-शीघ्रकारी दक्ष उच्यते ॥ द्वितीयासमर्थ शीत और उष्ण शब्द से कारि अर्थ में कन् प्रत्यय हो ॥ ७२ ॥

## अधिकम्[१] ॥ ७३ ॥

अध्यारूढशब्दात् कन् उत्तरपदलोपश्च। अधिकम्॥ अध्यारूढ शब्द से कन् प्रत्ययान्त अधिक शब्द निपातित है॥ ७३॥

## अनुकाभिकाभीकः[1] कमिता[1] ॥ ७४ ॥

कमितेत्यर्थे अनुक अभिक अभीक इनीमे कन् प्रत्ययान्ता निपात्यन्ते। अनुकामयते अनुकः। अभिकामयते-अभिकः। अभीकः॥ कमिता अर्थ में कन् प्रत्ययान्त अनुक अभिक और अभीक शब्द निपातित हैं॥ ७४॥

## पार्श्वेनाऽन्विच्छति ॥ ७५ ॥

पा०न[3], अ०ति(क्रि)। तृतीयासमर्थात् पार्श्वशब्दादन्विच्छतीत्यर्थे कन् स्यात्। अनृजुरुपायः पार्श्वम्। तेनाऽर्थानन्विच्छति-पार्श्वकः-मायावी॥ तृतीयासमर्थ पार्श्व शब्द से अन्विच्छति इस अर्थ में कन् प्रत्यय हो॥ ७५॥

## अयःशूलदण्डाजिनाभ्यां[3] ठक्ठञौ[1] ॥ ७६ ॥

आभ्यां तृतीयासमर्थाभ्यामन्विच्छतीत्यर्थे ठक्ठञौ स्याताम्। तीक्ष्ण उपायः-अयःशूलम्। तेनान्विच्छति-आयःशूलिकः। साहसिक इत्यर्थः। दण्डाजिनम्-दम्भः। तेनान्विच्छति-दाण्डाजिनिकः। दाम्भिक इत्यर्थः॥ तृतीयासमर्थ अयःशूल और दण्डाजिन शब्दों से अन्विच्छति अर्थ में यथाक्रम ठक् और ठञ् प्रत्यय हो॥ ७६॥

## तावतिथं ग्रहणमिति लुग्वा ॥ ७७ ॥

ता०म्[1], ग्र०म्[1], इति(अ); लुक्[1], वा(अ)। पूरणप्रत्ययान्तात् प्रातिपदिकाद्ग्रहणोपाधिकात्स्वार्थे कन् स्यात् पूरणप्रत्ययस्य च लुग्वा। द्वितीयकम्। द्विकं वा॥ (तावतिथेन गृह्णाति कन् वक्तव्यो नित्यं च लुक्)॥ षष्ठेन रूपेण गृह्णाति-षट्को देवदत्तः। पञ्चकः॥ ग्रहणोपाधिक पूरण प्रत्ययान्त प्रातिपदिक से स्वार्थ में कन् प्रत्यय हो और पूरण प्रत्यय का विकल्प से लुक् हो॥ ७७॥

## स[1] एषां[6] ग्रामणीः[1] ॥ ७८ ॥

प्रथमासमर्थात् षष्ठ्यर्थे कन् स्यात् यत्तत् प्रथमासमर्थं ग्रामणीश्चेत्। देवदत्तो मुख्योऽस्य-देवदत्तकः। त्वत्कः। मत्कः। त्वमहं वा मुख्यः एषामिति विग्रहः। ग्रामणी (मुख्य) समानाधिकरण प्रथमासमर्थ प्रातिपदिक से षष्ठ्यर्थ में कन् प्रत्यय हो॥७८॥

## शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥

शृ०म्[1], अस्य[6], ब०म्[1], करभे[7]। शृङ्खलशब्दात् प्रथमासमर्थात् षष्ठ्यर्थे कन् स्यात्। शृङ्खलं बन्धनमस्य करभस्य-शृङ्खलकः। उष्ट्राणां बालकः करभ इत्युच्यते॥ करभ वाच्य हो तो बन्धन समानाधिकरण प्रथमासमर्थ शृङ्खल शब्द से षष्ठ्यर्थ में कन् प्रत्यय हो॥७९॥

## उत्क उन्मनाः ॥ ८० ॥

उत्कः[1], उ०नाः[1]। उत्क इति निपात्यते उन्मनाश्चेत् स्यात्। उद्गतं मनो यस्य स-उन्मनाः। उच्छब्दात् स्वार्थे कन्। उत्कः-उत्कण्ठितः॥ उन्मना वाच्य हो तो उद् शब्द से कन् प्रत्ययान्त उत्क शब्द निपातित है॥ ८०॥

## कालप्रयोजनाद्[5] रोगे[7] ॥ ८१ ॥

कालवचनात् प्रयोजनवचनाच्च कन् स्याद् रोगे । द्वितीयेऽहनि भवः द्वितीयकः ज्वरः । प्रयोजनं कारणम् रोगस्य फलं वा ॥ रोग वाच्य हो तो समर्थ विभक्तियुक्त काल ( दिनादि ) और प्रयोजन से कन् प्रत्यय हो ॥ ८१ ॥

## तदस्मिन्नन्नं प्रायेण सञ्ज्ञायाम् ॥ ८२ ॥

तद्[1], अस्मिन्[7], अन्नम्[1], प्रायेण (अ), स० म्[7] । प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत् प्रथमान्तमन्नं चेत् प्रायविषयं तत् । गुडापूपाः प्रायेणान्नमस्याम् पौर्णमास्याम्-गुडापूपिका-पौर्णमासी ॥ संज्ञावाच्य हो तो प्रायविषयक अन्नसमानाधिकरण प्रथमा समर्थ शब्द से सप्तम्यर्थ में कन् प्रत्यय हो ॥ ८२ ॥

## कुल्माषादञ् ॥ ८३ ॥

कु० त्[5], अञ्[1] । तदस्मिन्नन्नं प्रायेण सञ्ज्ञायामित्यर्थे । कुल्माषाः प्रायेणान्नमस्यां-कौल्माषी पौर्णमासी ॥ सञ्ज्ञा वाच्य हो तो प्राय विषयक अन्न समानाधिकरण प्रथमासमर्थ कुल्माष ( जौ आदि ) शब्द से सप्तम्यर्थ में अञ् प्रत्यय हो ॥ ८३ ॥

## श्रोत्रियंश्छन्दोऽधीते ॥ ८४ ॥

श्रो० न्[1], छ न्दः[2], अधीते (क्रि) । श्रोत्रियन्निति वा निपात्यतेऽधीत इत्यर्थे । श्रोत्रियो विप्रः । छान्दसः ॥ अधीते इस अर्थ में छन्दस् शब्द से घ प्रत्यय करके श्रोत्रियन् यह शब्द विकल्प से निपातन किया है ॥ ८४ ॥

## श्राद्धमनेनभुक्तमिनिठनौ ॥ ८५ ॥

श्राद्धम्[1], अनेन[3], भुक्तम्[1], इ० नौ[1] । श्राद्धी । श्राद्धिकः । श्राद्धभोजीत्यर्थः ॥ भुक्तोपाधिक श्राद्ध शब्द से अनेन (इसने) इस अर्थ में इनि और ठन् प्रत्यय हो ॥८५॥

## पूर्वादिनिः ॥ ८६ ॥

पू० त्[5], इनिः[1] । पूर्वं गतमनेन भुक्तं पीतं वा-पूर्वी । पूर्विणौ । पूर्विणः ॥ पूर्वशब्द से अनेन इस अर्थ में इनि प्रत्यय हो ॥ ८६ ॥

## सपूर्वाच्च ॥ ८७ ॥

स० त्[5], च(अ) । सपूर्वात् प्रातिपदिकात् पूर्वशब्दान्तादनेनेत्यर्थे इनिः स्यात् । पूर्वं कृतमनेन-कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् ॥ सपूर्व शब्द से अनेन इस अर्थ में इनि प्रत्यय हो ॥ ८७ ॥

## इष्टादिभ्यश्च ॥ ८८ ॥

इ० भ्यः[5], च (अ) । इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यर्थे इनिः स्यात् । इष्टमनेन-इष्टी । अधीतमनेन-अधीती ॥ इष्टादि शब्दों से अनेन इस अर्थमें इनि प्रत्यय हो ॥८८॥

## छन्दसि 'परिपन्थिपरिपरिणौ पर्यवस्थातरि' ॥ ८९ ॥

पर्यवस्थातरि वाच्ये परिपन्थिन् परिपरिन् इतीमौ शब्दौ छन्दसि निपात्येते-पर्यवस्थाता-प्रतिपक्षः सम्पन्न उच्यते ॥ पर्यवस्था वाच्य हो तो छन्दोविषय में इनि प्रत्यय न्त परिपन्थिन् और परि परिन् शब्द निपातित हैं ॥ ८९ ॥

## अनुपद्यन्वेष्टा ॥ ९० ॥

अ० दी[1], अ० ष्टा०[1] । अनुपदीति निपात्यतेऽन्वेष्टा चेत् स्यात् । पदस्य पश्चादनुपदम् । अनुपदी गवाम् ॥ अन्वेष्टा वाच्य हो तो इनि प्रत्ययान्त अनुपदी ( गौओं का अन्वेषणकर्त्ता ) शब्द निपातित है ॥ ९० ॥

## साक्षाद्[5] द्रष्टरि[7] सञ्ज्ञायाम्[7] ॥ ९१ ॥

साक्षाद् द्रष्टा-साक्षी ॥ द्रष्टा वाच्य हो तो साक्षात् शब्द से इनि प्रत्यय हो ॥९१॥

## क्षेत्रियच्[1] परक्षेत्रे[7] चिकित्स्यः[1] ॥ ९२ ॥

क्षेत्रियजिति निपात्यते परक्षेत्रे चिकित्स्य इत्यर्थे । क्षेत्रियः व्याधिः शरीरान्तरे । चिकित्स्यः । अप्रतिकार्य्य इत्यर्थः । सप्तमी समर्थ परक्षेत्र शब्द से चिकित्स्य इस अर्थ में घच् प्रत्यय करके क्षेत्रियच् शब्द निपातन किया है ॥ ९२ ॥

## इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥९३

इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते । इन्द्रस्य लिङ्गमिन्द्रियम् । इन्द्रेण दृष्टम्-इन्द्रियम् । इन्द्रेण सृष्टम्-इन्द्रियम् । इन्द्रेण जुष्टम्-इन्द्रियम् । इन्द्रेण दत्तम्-इन्द्रियम् ॥ सप्तमीसमर्थ इन्द्र शब्द से लिङ्ग अर्थ में घच् प्रत्ययान्त एवं तृतीयासमर्थ इन्द्र शब्द से दृष्ट, सृष्ट, जुष्ट, दत्त अर्थों में घच् प्रत्यय करके इन्द्रिय शब्द निपातित है ॥ ९३ ॥

## तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥

तद्[1], अस्य[6], अस्ति (क्रि०), अस्मिन्[7], इति (अ), मतुप्[1], । गावोऽस्य, अस्मिन् वा सन्ति-गोमान् ॥ वृक्षवान् पर्वतः ॥ भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥ १ ॥ अस्ति समानाधिकरण प्रथमासमर्थ शब्द से अस्य अस्ति अथवा अस्मिन् अस्ति इस अर्थ में मतुप् प्रत्यय हो ॥ ९४ ॥

## रसादिभ्यश्च ॥ ९५ ॥

र० भ्यः[5] च(अ) । रसवान् रूपवान् । अस्ति समानाधिकरण प्रथमासमर्थ रसादि शब्दों से अस्य अस्ति अथवा अस्मिन् अस्ति इस अर्थ में मतुप् प्रत्यय हो ॥ ९५ ॥

## प्राणिस्थादातो लजन्यतरस्याम् ॥ ९६ ॥

प्रा० त्[5], आतः[5], लच्[1] अ० म् (अ) । प्राणिस्थवाचिनः शब्दादाकारान्ताल्लज् वा स्यान्मत्वर्थे । चूडालः । चूडावान् ॥ प्राणिस्थवाचक आकारान्त शब्द से मत्वर्थ में विकल्प से लच् प्रत्यय हो ॥ ९६ ॥

## सिध्मादिभ्यश्च ॥ ९७ ॥

सि० भ्यः[5], च(अ) । लज्वा स्यात् । सिध्मलः । सिध्मवान् ॥ सिध्मादि प्रातिपदिकों से मत्वर्थ में विकल्प से लच् प्रत्यय हो ॥ ९७ ॥

## वत्सांसाभ्यां[5] कामबले[7] ॥ ९८ ॥

आभ्यां लज्वा स्याद्यथासङ्ख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः । यथाक्रम काम और बल अर्थ में वत्स और अंस शब्द से लच् प्रत्यय हो ॥ ९८ ॥

## फेनादिलच्च ॥ ९९ ॥

फेनात्[5], इलच्[1], च (अ) । चाल्लच् । अन्यतरस्यां ग्रहणं मतुप् समुच्चयार्थमनुवर्त्तते । फेनिलः । फेनलः । फेनवान् ॥ फेन प्रातिपदिक से मत्वर्थ में विकल्प से इलच् प्रत्यय हो ॥ ९९ ॥

## लोमादिपामादिपिच्छादिभ्यः[5] शनेलचः[1] ॥ १०० ॥

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्योगणेभ्यो मत्वर्थे यथासङ्ख्यं श न इलच् इतीमे स्युः । मतुप् च । लोमशः । लोमवान् । रोमशः । रोमवान् । पामनः । पामवान् । पिच्छिलः । पिच्छवान् ॥ लोमादि पामादि और पिच्छादि प्रातिपदिकों से मत्वर्थ में यथाक्रम श, न और इलच् प्रत्यय हो पक्षमें मतुप् भी हो ॥ १०० ॥

## [5]प्रज्ञाश्रद्धार्चाभ्यो णः[1] ॥ १०१ ॥

मतुप् सर्वत्र समुच्चीयते । प्राज्ञः । प्रज्ञावान् । श्राद्धः । श्रद्धावान् । आर्चः, अर्चावान् (वृत्तेश्च) । वार्त्तः । वृत्तिमान् ॥ प्रज्ञा श्रद्धा और अर्चा शब्दोंसे मत्वर्थमें ण प्रत्ययहो ॥

## तपःसहस्राभ्यां[5] विनीनी[1] ॥ १०२ ॥

आभ्यां विनि इनि प्रत्ययौ स्याताम् । तपोऽस्याऽस्मिन् वा विद्यते । तपस्वी । सहस्री ॥ तपस् और सहस्र शब्द से मत्वर्थ में विनि और इनि प्रत्यय हो ॥ १०२ ॥

## [1]अण् च[अ] ॥ १०३ ॥

तपः सहस्राभ्यामण् च स्यात् । तापसः । साहस्रः ॥ ( ज्योत्स्नादिभ्य उपसङ्ख्यानम् ) ॥ ज्योत्स्ना विद्यतेऽस्मिन् पक्षे-ज्यौत्स्नः पक्षः । तामिस्रः ॥ तपस् और सहस् शब्द से मत्वर्थ में अण् भी हो ॥ १०३ ॥

## सिकताशर्कराभ्यां[5] च[अ] ॥ १०४ ॥

आभ्यां मत्वर्थेऽण् स्यात् । सैकतो घटः । शार्करं मधु ॥ सिकता और शर्करा शब्द से मत्वर्थ में अण् प्रत्यय हो ॥१०४॥

## [7]देशे लुबिलचौ[1] च[अ] ॥१०५॥

चादण् , मतुप् च । सिकताः सन्त्यस्मिन्देशे—सिकतादेशः । सिकतिलः । सैकतः । सिकतावान् । शर्करादेशः । शर्करिलः । शार्करः । शर्करावान् ॥ देशवाच्य हो तो सिकता और शर्करा शब्दसे मत्वर्थमें इलच् अण् और मतुप् प्रत्यय हो और पक्षमें लुप् भी हो॥

## दन्त उन्नत उरच् ॥१०६॥

दन्ते, उन्नते, उरच्[1] । दन्तशब्दादुन्नतोपाधिकादुरच्स्यान्मत्वर्थे । उन्नता दन्ताः सन्त्यस्य—दन्तुरः ॥ उन्नतोपाधिक दन्त शब्द से मत्वर्थ में उरच् प्रत्यय हो ॥१०६॥

## ऊषसुषिमुष्कमधो रः ॥१०७॥

ऊ० धोः[5], रः[1] । एभ्यो रः स्यात् । ऊषरं क्षेत्रम् । सुषिरं काष्ठम् । मुष्करः पशुः । मधुरो गुडः ॥ ( रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम् ) । खरः । मुखरः । कुञ्जः—हस्तिहनुः—कुञ्जरः ॥ ( नगपांसुपाण्डुभ्यश्च ) ॥ नगरम् । पांसुरः । पाण्डुरः ॥

( कच्छ्वा ह्रस्वत्वं च ) ॥ कच्छुरः ॥ ऊष, सुषि, मुष्क और मधु शब्द से मत्वर्थ में र प्रत्यय हो ॥ १०७ ॥

### द्युद्रुभ्यां मः[१] ॥१०८॥

आभ्यां मः स्यात् । द्युमः । द्रुमः ॥ द्यु और द्रु शब्दसे मत्वर्थ में म प्रत्यय हो॥१०८॥

### केशाद्वोऽन्यतरस्याम्[४] ॥१०९॥

केशवः । केशी । केशिकः । केशवान् ॥ ( अन्येभ्योऽपि दृश्यते ) ॥ मणिवः । नागविशेषः । हिरण्यवः निधिविशेषः ॥ ( अर्णसो लोपश्च ) ॥ अर्णवः ॥ केश शब्द से मत्वर्थ में विकल्प से व प्रत्यय हो ॥१०९॥

### गाण्ड्यजगात्[५] सञ्ज्ञायाम्[७] ॥११०॥

गाण्डी अजग इत्याभ्यां सञ्ज्ञायां विषये वः स्यान्मत्वर्थे । गाण्डीवं धनुः । अजगवं धनुः । ह्रस्वमपीष्यते । गाण्डिवम् ॥ सञ्ज्ञाविषय होनेपर गाण्डी और अजग शब्द से मत्वर्थ में व प्रत्यय हो ॥११०॥

### काण्डाऽण्डादीरन्नीरचौ ॥१११॥

का० तु[४], ई० चौ[१] । काण्ड अण्ड इत्याभ्यां यथासङ्ख्यमीरन्नीरचौ स्याताम् । काण्डीरः । अण्डीरः ॥ मत्वर्थ में काण्ड और अण्ड शब्द से यथाक्रम ईरन् और ईरच् प्रत्यय हो ॥१११॥

### रजः कृष्यासुतिपरिषदो वलच् ॥११२॥

एभ्यो मत्वर्थे वलच् स्यात् । रजस्वला स्त्री । कृषीवलः ॥ ( वले इति दीर्घः ) ॥ आसुतीवलः—शौण्डिकः । परिषद्वलोराजा ॥ ( अन्येभ्योऽपि दृश्यते ) ॥ भ्रातृवलः । पुत्रवलः । शत्रुवलः । उत्साहवलः ॥ मत्वर्थ में रजस्, कृषि आसुति और परिषद् शब्द से वलच् प्रत्यय हो ॥११२॥

### दन्तशिखात्[५] सञ्ज्ञायाम्[७] ॥११३॥

आभ्यां सञ्ज्ञायां विषये मत्वर्थे वलच् स्यात् । दन्तावलः–हस्ती । 'वले' इति दीर्घः। शिखावलं—नगरम् ॥ सञ्ज्ञाविषय होने पर मत्वर्थ में दन्त और शिखा शब्द से वलच् प्रत्यय हो॥ ११३ ॥

### ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः[१] ॥

ज्योत्स्नादयः शब्दा मत्वर्थे निपात्यन्ते सञ्ज्ञायां विषये । ज्योत्स्ना—चन्द्रप्रभा । तमिस्रा रात्रिः । शृङ्गिणः । ऊर्जस्वी । ऊर्जस्वलः । गोमी । मलिनः । मलीमसः ॥ संज्ञा विषय होने पर मत्वर्थ में ज्योत्स्ना ( चांदनी रात्रि ) तमिस्रा ( अन्धेरी रात ) शृङ्गिण् ( सींगवाला )। ऊर्जस्विन्, ऊर्जस्वल ( बलवान् ) गोमिन् ( गौओं का स्वामी ) मलिन ( मलयुक्त ) और मलीमस ( मलिन ) शब्द निपातित हैं ॥११४॥

### अत इनिठनौ ॥११५॥

अतः[४], इ० नौ[१] । अकारान्तात् प्रातिपदिकादिनिठनौ स्याताम् । धनी । धनिकः ॥ अकारान्त प्रातिपदिक से मत्वर्थ में इनि और ठन् प्रत्यय हो ॥११५॥

## व्रीह्यादिभ्यश्च ॥११६॥

व्री० भ्यः^५, च(अ) । इनिठनौ स्याताम् मत्वर्थे । व्रीही । व्रीहिकः । व्रीहिमान् ॥ व्रीही आदि शब्दों से मत्वर्थ में इनि और ठन् प्रत्यय हों और पक्ष में मतुप् भी हो ॥

## तुन्दादिभ्य^५ इलच्^१ च^अ ॥११७॥

चादिनिठनौ मतुप् च । तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् । उदरिलः । उदरी उदरिकः । उदरवान् । ( स्वाङ्गाद्विवृद्धौ ) ॥ विवृद्धौ कर्णौ यस्य सः—कर्णिलः । कर्णी । कर्णिकः । कर्णवान् ॥ तुन्द ( तोंद ) आदि प्रातिपदिकों से मत्वर्थ में इलच्, इनि, ठन् और मतुप् प्रत्यय हो ॥११७॥

## एकगोपूर्वाट्ठञ् नित्यम् ॥११८॥

ए० त्^५, ठञ्^१, नित्यम्^२ । एकपूर्वाद् गोपूर्वाच्च मत्वर्थे नित्यं ठञ् स्यात् । एकशतमस्यास्तीति—ऐकशतिकः । ऐकसहस्रिकः । गौशतिकः । गौसहस्रिकः ॥ एक पूर्व और गो पूर्व प्रातिपदिक से मत्वर्थ में नित्य ठञ् प्रत्यय हो ॥११८॥

## शतसहस्रान्ताच्च निष्कात् ॥११९॥

श० त्^५, च(अ) नि०त्^५ । निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे । निष्कशतमस्यास्ति-नैष्कशतिकः । नैष्कसहस्रिकः ॥ निष्क ( १६ मासे परिमाण ) पूर्व शत और सहस्र शब्द से मत्वर्थ में ठञ् प्रत्यय हो ॥११९॥

## रूपादाहतप्रशंसयोर्यप् ॥१२०॥

रू० त्^५,आ० योः^७ यप्^१ । आहतप्रशंसाविशिष्टार्थे वर्त्तमानाद् रूपशब्दाद्यप्स्यान्मत्वर्थे । आहतं रूपमस्यास्तीति-रूप्यः कार्षापणः । रूप्यो दीनारः । प्रशस्तं रूपमस्यास्तीति-रूप्यः पुरुषः ॥ आहत (ताडन किया गया) और प्रशंसाविशिष्ट अर्थमें वर्त्तमान रूप शब्द से मत्वर्थमें यप् प्रत्यय हो ॥ १२० ॥

## अस्मायामेधास्रजो विनिः ॥१२१॥

अ० जः^५, विनिः^१ । असन्तात् प्रातिपदिकान् माया मेधास्रज् इत्येभ्यश्च विनिः स्यान्मत्वर्थे । यशस्वी । मायावी । मेधावी । स्रग्वी ॥ असन्त माया मेधा और स्रज् शब्द से मत्वर्थ में विनि प्रत्यय हो ॥१२१॥

## बहुलं^१ छन्दसि^७ ॥१२२॥

छन्दसि विषये बहुलं विनिः स्यान्मत्वर्थे । तेजस्वी न च भवति । वर्चस्वान् ॥ (आमयस्योपसङ्ख्यानं दीर्घश्च ) ॥ आमयावी ॥ ( शृङ्गवृन्दाभ्यामारकन् ) ॥ शृङ्गारकः । वृन्दारकः ॥ (फलबर्हाभ्यामिनच् ) ॥ फलिनः । बर्हिणः ॥ (हृदयाच्चालुरन्यतरस्याम् )॥ इनिठनौ, मतुप् च । हृदयालुः, हृदयी, हृदयिकः, हृदयवान् ॥ (शीतोष्णतृप्रेभ्यस्तदसहने) शीतं न सहते-शीतालुः । उष्णालुः । तृप्रालुः ॥ ( हिमाच्चेलुः ) ॥ हिमं न सहते-हिमेलुः॥ (बलादूलः ) । बलं न सहते बलूलः ॥ ( वातात् समूहे च ) ॥ वातं न सहते, वातानां समूहो वा-वातूलः ॥ ( तप् पर्वमरुद्भ्याम् ) ॥ पर्वतः । मरुत्तः ॥ छन्दोविषयमें मत्वर्थ होनेपर बाहुल्य से विनि प्रत्यय हो ॥१२२॥

## ऊर्णाया युस् ॥१२३॥

ऊ० याः[५], युस्[१]। सित्वात्पदत्वम्। ऊर्णास्य विद्यते-ऊर्णायुः॥ मत्वर्थमें ऊर्णा (ऊन) शब्दसे युस् प्रत्यय हो ॥१२३॥

## वाचोग्मिनिः ॥१२४॥

वाचः[५],ग्मिनिः। वाक्शब्दाद् ग्मिनिः स्यात् मत्वर्थे। वाग्मी॥ वाक् शब्दसे मत्वर्थ में ग्मिनि प्रत्यय हो ॥१२४॥

## आलजाटचौ[१] बहुभाषिणि[७] ॥१२५॥

(कुत्सित इति वक्तव्यम्)॥ कुत्सितं बहुभाषते वाचालः। वाचाटः॥ बहुभाषी शब्द वाच्य हो तो प्रथमासमर्थ वाक् शब्दसे मत्वर्थमें आलच् और आटच् प्रत्यय हो ॥१२५॥

## स्वामिन्नैश्वर्ये ॥१२६॥

स्वा० न्[१]। ऐ० र्ये[७]। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् स्यात्। स्वामी॥ ऐश्वर्य गम्यमान होनेपर स्व शब्द से आमिनच् प्रत्ययान्त स्वामीशब्द निपातित है॥

## अर्श आदिभ्योऽच् ॥१२७॥

अ० भ्यः[५], अच्[१]। अर्शांसि अस्य विद्यन्ते-अर्शसः॥ अर्शस् आदि प्रातिपदिकों से मत्वर्थमें अच् प्रत्यय हो ॥१२७॥

## द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥१२८॥

द्व०त्[५],प्रा० त्[५], इनिः[१]। द्वन्द्वः-समासः। उपतापः रोगः। गर्ह्यम्-निन्द्यम्। तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्यः इनिः स्यात् मत्वर्थे। कटकवलयिनी कुष्ठी काकतालुकी॥द्वन्द्व उपताप और गर्ह्यविषयक प्राणिस्थ अर्थवाचक शब्दोंसे मत्वर्थमें इनि प्रत्ययहो॥

## [५]वातातीसाराभ्यां कुक्[१] च[अ] ॥१२९॥

चादिनिः। वातकी। अतीसारकी। (रोगे चायमिष्यते)॥ नेह वातवती गुहा॥ वात और अतीसार शब्द से मत्वर्थ में इनि प्रत्यय और उक्त दोनों शब्दों को कुक् का आगम हो॥ १२९॥

## वयसि[७] पूरणात्[५] ॥ १३० ॥

वयसि द्योत्ये पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्यात्। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति—पञ्चमी उष्ट्रः॥ अवस्था द्योत्य होतो पूरण प्रत्ययान्त प्रातिपदिकसे मत्वर्थमें इनि प्रत्यय हो ॥१३०॥

## सुखादिभ्यश्च ॥ १३१॥

सु० भ्यः[५], च(अ)। सुखादिभ्यो मत्वर्थे इनिः स्यात्। सुखी। दुःखी। शीली। माली॥ सुखादि प्रातिपदिकोंसे मत्वर्थमें इनि प्रत्यय हो ॥१३१॥

## धर्म्मशीलवर्णान्ताच्च ॥१३२॥

ध० त्[५], च (अ)। मत्वर्थे धर्म्माद्यन्तादिनिः स्यात्। विप्राणां धर्मः-विप्रधर्म्मः। सोऽस्यास्तीति-विप्रधर्म्मी। ब्राह्मणशीली। ब्राह्मणवर्णी॥ धर्म्मान्त शीलान्त और वर्णान्त प्रातिपदिकसे मत्वर्थमें इनि प्रत्यय हो ॥१३२॥

## हस्ताज्जातौ ॥ १३३ ॥

ह० त्[५], जातौ[७] । इनिः स्यान्मत्वर्थे । हस्ती ।। यदि समुदायसे जाति वाच्य हो तो हस्त शब्द से मत्वर्थमें इनि प्रत्यय हो ॥१३३॥

## वर्णाद्[५] ब्रह्मचारिणि[७] ॥१३४॥

इनिः स्यान्मत्वर्थे । वर्णी । ब्रह्मचारीत्यर्थः ॥ यदि समुदायसे ब्रह्मचारी वाच्य हो तो मत्वर्थमें वर्णशब्दसे इनि प्रत्यय हो ॥१३४॥

## पुष्करादिभ्यो देशे ॥ १३५ ॥

पु० भ्यः[५], देशे[७] । इनिः स्यान्मत्वर्थे । पुष्कराणि विद्यन्तेऽस्यामस्या वा पुष्करिणी भूमिः । ( बाहूरुपूर्वपदाद्बलात् ) ।। बाहुबली ।। ऊरुबली ।। ( सर्वादेश्च ) ।। सर्वधनी । सर्वबीजी ।। ( अर्थाच्चासन्निहिते ) ।। अर्थी ।। ( तदन्ताच्च ) धान्यार्थी हिरण्यार्थी ॥ यदि समुदाय रूप से देश वाच्य हो तो पुष्कर आदि शब्दों से मत्वर्थमें इनि प्रत्यय हो॥

## बलादिभ्यो मतुबन्यतरस्याम् ॥१३६॥

ब० भ्यः[५], मतुप्[१], अ०म्(अ) । बलवान् । बली । उत्साहवान् । उत्साही ॥ बलादि प्रातिपदिकों से मत्वर्थमें विकल्प से मतुप् प्रत्यय हो ॥ १३६॥

## सञ्ज्ञायां[७] मन्माभ्याम्[५] ॥१३७॥

मन्नन्तात् मान्ताच्चेनिः स्यान्मत्वर्थे । प्रथमिनी । दामिनी । मोहिनी । सोहिनी ॥ मन्नन्त और मान्त प्रातिपदिक से मत्वर्थ में संज्ञा वाच्य हो तो इनि प्रत्यय हो ॥१३७॥

## कंशंभ्यां बभयुस्तितुतयसः ॥१३८॥

कं०म्[५], ब०सः[१] । कंशमितिमान्तौ । कमित्युदकसुखयोः शमिति सुखे । आभ्यां बादयः सप्त प्रत्ययाः स्युः । कम्बः । कम्भः । कंयुः । कन्तिः । कन्तुः । कन्तः । कंयः । शम्बः । शम्भः । शंयुः । शन्तिः । शन्तुः । शन्तः । शंयः । अनुस्वारस्य वैकल्पिकः परसवर्णः । यकार वकार परस्यानुनासिकौ यवौ ॥ कम् और शम् शब्द से मत्वर्थ में ब, भ, युस् , ति, तु, त और यस प्रत्यय हो ॥१३८॥

## तुन्दिवलिवटेर्भः ॥१३९॥

तु०टेः[५], भः[१] । तुन्दि वलि वटि इत्येभ्यो भः स्यान्मत्वर्थे । वृद्धा नाभिः-तुन्दिः । तुन्दिभः । वलिभः । वटिभः ॥ तुन्दि वलि और वटि शब्द से मत्वर्थ में भ प्रत्यय हो ॥

## अहंशुभमोर्युस् ॥१४०॥

अ०मोः[६], युस्[१] । अहमिति मान्तमव्ययमहङ्कारे । शुभमिति-शुभे । अहंयुः-अहङ्कारवान् । शुभंयुः-कल्याणवान् ॥ अहम् और शुभम् शब्दसे मत्वर्थमें युस् प्रत्यय हो ॥

इति पञ्चमाऽध्यायस्य द्वितीयः पादः ॥

# अथ पञ्चमाऽध्यायस्य तृतीयः पादः।

## प्राग्दिशो विभक्तिः ॥ १ ॥

प्राक्[1], दिशः[4], विभक्तिः[1]। दिक्छब्देभ्यः (५।३।२७) इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसञ्ज्ञकाः स्युः। स्वार्थिकाः प्रत्ययाः। समर्थानामिति प्रथमादिति च, निवृत्तम्। वेति त्वनुवर्त्तत एव ॥ दिक् श०इत्यादि सूत्रपर्यन्त विभक्ति का अधिकार है ॥

## किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥

कि०भ्यः[5], अ०भ्यः[4]। किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ॥ द्व्यादि शब्दोंको छोड़कर किम् सर्वनाम सञ्ज्ञक और बहु शब्दसे प्राग्दिशीय प्रत्ययहों ॥

## इदम इश् ॥ ३ ॥

इ०मः[6], इश्[1]। प्राग्दिशीये परे इदम इशादेशः स्यात्। इह। 'इदमो हः' प्राग् दिशीय प्रत्यय परे हों तो इदम शब्द को इश् आदेश हो ॥ ३ ॥

## 'एतेतौ रथोः'[7] ॥ ४ ॥

इदम शब्दस्य एत इत इत्यादेशौ स्यातां रेफादौ थकारादौ च प्राग्दिशीये परे। इदमार्हिल्। एतर्हि। इदमस्थमुः। इत्थम्। इदानीम् ॥ रेफादि और थकारादि प्राग् दिशीय प्रत्यय परे हों तो इदम् शब्द को एत और इत आदेश हो ॥ ४ ॥

## एतदोऽन् ॥ ५ ॥

एतदः[6], अन्[1]। योगविभागः कर्त्तव्यः। एतदः। एतेतौ स्यातां रथोः। अन् एतद इत्येव। अनेकाल्त्वात् सर्वादेशः। अतः। अत्र। एतर्हि। इत्थम् ॥ प्राग्दिशीय प्रत्यय परे हों तो एतद् शब्द को अन् आदेश हो और रेफादि तथा थकारादि प्रत्यय के परे इदम् को एत और इत् आदेश हो ॥ ५ ॥

## सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥

सर्वस्य[6], सः[1], अ०म्(अ), दि[7]। प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात्। सदा। सर्वदा (५।३।१५) इति दा ॥ प्राग्दिशीय दकारादि प्रत्यय परे हो तो सर्वशब्द को विकल्प से स आदेश हो ॥ ६ ॥

## पञ्चम्यास्तसिल् ॥ ७ ॥

प०म्याः[4], त०ल्[1]। पञ्चम्यन्तेभ्यः किमादिभ्यः तसिल्वा स्यात्। कस्मात् कुतः (७।२।१०४) इति किमः कुः। यतः। ततः। बहुतः ॥ पञ्चम्यन्त किम् सर्वनाम और बहुशब्द से तसिल् प्रत्यय हो ॥ ७ ॥

## तसेश्च ॥ ८ ॥

तसेः[6], च(अ)। किं सर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात्। कुत आगतः। बहुतः ॥ किं सर्वनाम और बहुशब्द से परे तसि प्रत्यय को तसिल् आदेश हो ॥ ८ ॥

## पर्यभिभ्यां[5] च[अ] ॥ ९ ॥

आभ्यां तसिल् स्यात्। (सर्वोभयार्थाऽभ्यामेव) परितः, सर्वतः-इत्यर्थः। अभितः-उभयत इत्यर्थः॥ परि और अभि शब्द से तसिल् प्रत्यय हो॥ ९॥

## सप्तम्यास्त्रल्॥ १०॥

स०म्याः[५], त्रल्[१]। सप्तम्यन्तेभ्यः किं सर्वनामबहुभ्यः त्रल् स्यात्। कुत्र। यत्र। तत्र बहुत्र॥ सप्तम्यन्त किम् सर्वनाम और बहुशब्द से त्रल् प्रत्यय हो॥ १०॥

## इदमो हः॥ ११॥

इ०मः[५], हः[१]। इदमः सप्तम्यन्ताद् हः स्यात्। अस्मिन्निति-इह 'इदम इश्'॥ सप्तम्यन्त इदम् शब्द से ह प्रत्यय हो॥ ११॥

## किमोऽत्॥ १२॥

किमः[५], अत्[१]। सप्तम्यन्तात् किमोऽद् वा स्यात् पक्षे त्रल्। कस्मिन्निति क्व। 'क्वाति' इति किमः क्वादेशः। कुत्र॥ सप्तम्यन्त किम् शब्दसे अत् और त्रल् प्रत्यय हो॥

## [अ]वा [१]ह [अ]च च्छन्दसि[७]॥ १३॥

कुह। क्व। कुत्र॥ छन्दोविषयमें विकल्प करके सप्तम्यन्त किम् शब्दसे ह प्रत्यय हो॥

## इतराभ्योऽपि दृश्यन्ते॥ १४॥

इ० भ्यः[५], अपि(अ), दृ० न्ते(क्रि)। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद् भवदादियोग एव। सभवान्। ततोभवान्। तत्रभवान्। तं भवन्तम्। ततोभवन्तम्। तत्र भवन्तम्॥ इतर अर्थात् सप्तमी पञ्चमी से भिन्न विभक्तिओं के स्थान में भी तसिलादि प्रत्यय दीखते हैं॥ १४॥

## सर्वैकान्यकिंयत्तदः[५] काले[७] दा[१]॥१५॥

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्। सर्वस्मिन् काले-सदा। सर्वदा। एकदा। अन्यदा। कदा 'किमः कः' इति कादेशः। यदा। तदा 'त्यदादीनामः' 'अतोगुणे'॥ सप्तम्यन्त सर्व,एक,अन्य,किम् ,यद् और तद् शब्दसे कालार्थ में दा प्रत्यय हो॥१५॥

## इदमोर्हिल्॥ १६॥

इ० म०[५], र्हिल्[१]। सप्तम्यन्तात् काले इदमो र्हिल् स्यात्। अस्मिन् काले-एतर्हि॥ कालार्थ में वर्त्तमान सप्तम्यन्त इदम् शब्द से र्हिल् प्रत्यय हो॥१६॥

## अधुना[अ]॥ १७॥

अधुनेति निपात्यते। इदमोऽश्भावो धुना च प्रत्ययः। अस्मिन् काले इति-अधुना॥ कालार्थ में वर्त्तमान सप्तम्यन्त इदम् शब्द के स्थान में अश् और धुना प्रत्यय करके अधुना यह शब्द निपातन किया है॥ १७॥

## [१]दानीं च[अ]॥ १८॥

सप्तम्यन्तात्काले इदमो वर्त्तमाद्दानीं स्यात्। अस्मिन् काले इदानीम् 'इदम इश्'॥ कालार्थ में वर्त्तमान सप्तम्यन्त इदम् शब्द से दानीम् प्रत्यय हो॥१८॥

## तदो दा च॥ १९॥

तदः[५], दा[१], च (अ)। तदः सप्तम्यन्तात्काले वर्त्तमानाद् दा स्याद्दानीं च। तस्मिन् काले–तदा। तदानीम् 'त्यदादीनामः' 'अतोगुणे'॥ कालार्थ में वर्त्तमान सप्तम्यन्त तद् शब्द से दा और दानीम् प्रत्यय हो॥ १९॥

## तयोर्दार्हिलौ चच्छन्दसि ॥ २०॥

तयोः[६], दा० लौ[१], च (अ), छ० सि[७]। इदंतदोर्यथा सङ्ख्यं स्याताम्। अस्मिन् काले–इदा। तस्मिन् काले–तर्हि॥ छन्दोविषय हो तो कालार्थ में वर्त्तमान इदम् और तद् शब्द से यथाक्रम दा और र्हिल् प्रत्यय हो॥ २०॥

## अनद्यतने र्हिलन्यतरस्याम् ॥ २१॥

अ० ने[७], । र्हिल्[१], अ० म्(अ)। किंसर्वनाम बहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल्वा स्यात्। कर्हि कदा। यर्हि यदा। तर्हि तदा। एतस्मिन् काले–एतर्हि॥ अनद्यतन कालार्थ में वर्त्तमान सप्तम्यन्त किम् सर्वनाम और बहुशब्द से विकल्प करके र्हिल् प्रत्यय हो॥ २१॥

## सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः[१] ॥ २२॥

इमे निपात्यन्ते। (समानस्य सभावो द्यस् चाहनि) समानेऽहनि–सद्यः। (पूर्वपूर्वतरयोः पर उदारी च संवत्सरे) पूर्वस्मिन् वत्सरे परुत्। पूर्वतरे वत्सरे परारि। (इदम इश् समसण् प्रत्ययश्च) अस्मिन् संवत्सरे ऐषमः। (परस्मादेद्यव्यहनि) परस्मिन्नहनि परेद्यवि। (इदमोऽश् भावो द्यश्च) अस्मिन्नहनि-अद्य। (पूर्वादिभ्योऽष्टभ्योऽहन्येद्यु) पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उभयोरह्नोरुभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः। (द्युश्चोभयाद्वक्तव्यः)॥ उभयद्युः॥ कालविशेषार्थ में वर्त्तमान सप्तम्यन्त समान आदि शब्दों से द्यस्, उस्, उदारी, समसण्, एद्यवि, द्य और एद्युस् प्रत्ययान्त सद्यः, परुत्, परारि, ऐषम, परेद्यवि, अद्य, पूर्वेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः, अपरेद्युः, अधरेद्युः, उभयेद्युः और उत्तरेद्युः ये शब्द निपातन किये गये हैं॥ २२॥

## प्रकारवचने[७] थाल्[१] ॥ २३॥

प्रकारवृत्तिभ्यः किमादिभ्यः स्वार्थे थाल् स्यात्। सामान्यस्य भेदकोविशेषः प्रकारः तेन प्रकारेण–तथा। सर्वथा। इतरथा। अन्यथा। बहुथा॥ प्रकार वचन किम् सर्वनाम और बहु शब्द से स्वार्थ में थाल् प्रत्यय हो॥ २३॥

## इदमस्थमुः ॥ २४॥

इदमः[५], थमुः[१]। (एतदोऽपि वाच्यः)। अनेन, एतेन वा प्रकारेण इत्थम्। 'एतेतौ-रथोः' इति प्रकृतेरिदमः इद्रादेशः॥ प्रकार वचन में इदम् शब्द से थमु प्रत्यय हो॥२४॥

## किमश्च ॥ २५॥

किमः[५], च (अ)। किं शब्दात् प्रकारवचने थमुः स्यात्। केन प्रकारेण कथम्। 'किमः कः'॥ प्रकार वचन में किम् शब्द से थमु प्रत्यय हो॥ २५॥

## [१]था हेतौ[७] च[अ] च्छन्दसि[७] ॥ २६ ॥

किमस्था स्याद्धेतौ प्रकारे च । केन हेतुना केन प्रकारेण वा इति कथा ॥ छन्दोविषय हो तो हेतु और प्रकार में वर्त्तमान किम् शब्द से था प्रत्यय हो ॥ २६ ॥

## [५]दिक्छब्देभ्यःसप्तमीपञ्चमीप्रथमाभ्यो[५] दिग्देशकाले [७]ष्वस्तातिः[१]

सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थे अस्तातिः स्यात् । पूर्वस्यां दिशि, पूर्वस्मिन् देशे काले वा पुरस्तात् । अधस्तात् । (५।३।३६) पञ्चमी पुरस्तादागतः । प्रथमा--पुरस्ताद्र रमणीयम् ॥ दिशादेश और काल अर्थ में वर्त्तमान सप्तम्यन्त और पञ्चम्यन्त प्रथमान्त दिशा वाचक शब्दों से अस्ताति प्रत्यय हो ॥२७॥

## दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥

द० म्[५], अ० च्[१] । दिग्देशकालेषु वर्त्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां दक्षिणोत्तराभ्यां स्वार्थेऽतसुच् स्यात् । दक्षिणतोवसति । दक्षिणत आगतः । दक्षिणतो रमणीयम् । उत्तरतो वसति । उत्तरत आगतः । उत्तरतो रमणीयम् ॥ दिक्देश और काल में वर्त्तमान सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त दक्षिण और उत्तर दिक् शब्द से स्वार्थ में अतसुच् प्रत्यय हो ॥ २८ ॥

## विभाषा[१] परावराभ्याम्[५] ॥ २६ ॥

आभ्यां वातसुच्, पक्षेऽस्तातिः । परतः । अवरतः । परस्तात् ॥ अवरस्तात् ॥ अस्ताति प्रत्ययके अर्थमें पर और अवर शब्दसे विकल्पसे अतसुच् प्रत्यय भी हो ॥२६॥

## अञ्चेर्लुक् ॥ ३० ॥

अञ्चेः[५], लुक्[१] । अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् । (लुक् तद्धित लुकि) प्राच्याम्, प्राच्याः, प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च ॥ अञ्चत्यन्त दिक् शब्दों से परे अस्ताति प्रत्यय का लुक् हो ॥ ३० ॥

## उपर्युपरिष्टात् ॥३१॥

उ०रि(अ),उ०त्(अ) । इमौ निपात्येते । उपरि,उपरिष्टाद्वा वसति, आगतः,रमणीयं वा ॥ ऊर्ध्व शब्दको उपभाव और रिल् तथा रिष्टातिल् प्रत्यय अस्तातिके अर्थमें निपातत हैं ॥

## पश्चात्[अ] ॥३२॥

अयं निपात्यते । अपरस्य पश्चभावः, आतिश्चप्रत्ययः अस्तातेर्विषये । अपरस्यां दिशि वसति—पश्चात् दिशिवसति । पश्चादागतः । पश्चाद्र रमणीयम् ॥ (दिक्पूर्वपदस्य च) । दक्षिणपश्चात् । उत्तरपश्चात् ॥ (अर्द्धोत्तरपदस्य पश्चभावः) । दक्षिणपश्चार्द्धः । उत्तरपश्चार्द्धः ॥ (अर्द्धे च) । पश्चार्द्धः ॥ अस्ताति प्रत्ययके अर्थमें पश्चात् शब्द निपातितहै॥

## पश्च[१] पश्चा[१] च[अ] छन्दसि[७] ॥३३॥

अवरस्य अस्तात्यर्थे निपातौ । पश्चसिंहः । पश्चासिंहः । पश्चात्सिंहः ॥ छन्दविषय हो तो अस्ताति के विषयमें पश्च और पश्चाशब्द निपातित हैं ॥ ३३ ॥

## उत्तराधरदक्षिणादातिः ॥३४॥

उ० दू[४], आतिः[१] । एभ्य आतिः स्यात् । उत्तरस्यां दिशि वसति—उत्तराद्वसति । अधरात् । दक्षिणात् । इलोपः ॥ अस्तातिके अर्थ में उत्तर अधर और दक्षिण शब्द से आति प्रत्यय हो ॥३४॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥३५॥

एनप्[१], अ०म्(अ), अ०रे[७], अ०म्याः[४] । उत्तरादिभ्य एनब् वा स्यादवध्यवधिमतोः सामीप्ये, पञ्चम्यन्तं विना । उत्तरस्यां दिशि वसति—उत्तरेण वसति । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः ॥ पञ्चमी विभक्ति को छोड़कर उत्तर, अधर और दक्षिण शब्द से अदूर अवधि होतो विकल्पसे एनप् प्रत्यय हो ॥३५॥

## दक्षिणादाच् ॥ ३६ ॥

दक्षिणात्[४], आच्[१] । अस्तातेर्विषये दक्षिणशब्दादाच् स्यात् । दक्षिणा वसति । दक्षिणा रमणीयम् ॥ अस्ताति के विषयमें अपञ्चम्यन्त दक्षिण आच् प्रत्यय हो ॥ ३६॥

## आहि[१] च[अ] दूरे[७] ॥३७॥

दक्षिणाद्दूरे आहि स्यात्, चादाच् । दक्षिणाहि । दक्षिणा ॥ अस्ताति के विषय में दक्षिण शब्दसे आहि और आच् प्रत्यय हो ॥ ३७॥

## उत्तराच्च ॥ ३८ ॥

उत्तरात्[४], च (अ) । उत्तरशब्दादाजाही प्रत्ययौ स्यानाम् । उत्तराहि, उत्तरा ॥ अस्ताति विषयमें उत्तरशब्दसे आच् और आहि प्रत्यय हो ॥ ३८ ॥

## पूर्वाधरावराणामसिपुरधवश्चैषाम् ॥ ३९ ॥

पू०म्[६] असि[१], पु०वः[१], च(अ) एषाम्[६] । अस्तात्यर्थे एभ्योऽसि प्रत्ययः स्यात्, तद्योगे चैषां क्रमात्-पुर्, अध्, अव् इत्यादेशः स्युः । पूर्वस्यां दिशि वसति-पुरोवसति । पुर आगतः । पुरोरमणीयम् । अधोवसति । अध आगतः । अधोरमणीयम् । अवोवव-वसति । अव आगतः । अवोरमणीयम् ॥ अस्ताति के विषय में पूर्व अधर और अवर शब्दसे असि प्रत्यय हो और उक्त शब्दोंके स्थानमें क्रमशः पुर्, अध् और अव् आदेशहो॥

## अस्ताति[७] च[अ] ॥ ४०॥

अस्तातौ परे पूर्वादीनां परादयः स्युः । पूर्वस्यां, पूर्वस्याः, पूर्वा वा, दिक् पुरः पुरस्तात् । अधः, अधस्तात् । अवः, अवस्तात् ॥ अस्ताति प्रत्यय परे होतो पूर्वादि शब्दोंको यथाक्रम पुर् अध् और अव् आदेश हों ॥ ४०॥

## [१]विभाषाऽवरस्य[६] ॥ ४१॥

अवरस्याऽस्तातौ परेऽव् वा स्यात् । अवस्तात्, अवरस्तात् ॥ अस्ताति प्रत्यय परे होतो अवर शब्दको विकल्पसे अव् आदेश हो ॥४१॥

## सङ्ख्याया विधार्थे धा ॥४२॥

स०याः[४], विधार्थे[७], धा[१]! क्रियाप्रकारार्थे वर्त्तमानात् सङ्ख्याशब्दात्स्वार्थे धा स्यात् एकधा भुङ्क्ते । द्विधा गच्छति । त्रिधा । चतुर्धा । पञ्चधा ॥ क्रियाके प्रकार अर्थमें वर्त्तमान सङ्ख्यावाचक शब्दों से स्वार्थमें धा प्रत्यय हो ॥ ४२ ॥

## अधिकरणविचाले[7] च[अ] ॥४३॥

द्रव्यस्य संख्यान्तरापादाने संख्याया धा स्यात् । एकंराशिं पञ्चधा कुरु । अष्टधा कुरु॥ अधिकरण विचाल गम्यमान होतो सङ्ख्या वाचक प्रातिपदिक से स्वार्थमें धाप्रत्यय हो॥

## एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥

एकात्[5], धः[6], ध्यमुञ्[1], अ०म्(अ) । एकशब्दात्परस्य धा प्रत्ययस्य ध्यमुञादेशो वा स्यात् । एकधा राशिं कुरु । ऐकध्यं कुरु ॥ एक शब्दसे परे अधिकरण विचाल और विधार्थमें विहित धा प्रत्ययको विकल्पसे ध्यमुञ् आदेश हो ॥४४॥

## द्वित्र्योश्च धमुञ् ॥४५॥

द्वित्र्योः[6], च(अ), धमुञ्[1] । आभ्यां धा इत्यत्र धमुञ्वादेशः स्यात् । द्वैधम् । द्विधा॥ त्रैधम् । त्रिधा ॥ ( धमुञन्तात्स्वार्थे डदर्शनम् ) पथि द्वैधानि तृणानि ॥ द्विं और त्रिशब्दसे अधिकरण विचाल और विधार्थमें विहित धा प्रत्ययको विकल्पसे धमुञ्हो ॥

## एधाच्च ॥ ४६॥

एधाच्[1], च । द्वित्र्योः सम्बन्धिनो धा प्रत्ययस्य एधाजादेशो वा स्यात्, चाद् धमुञ्। द्वेधा । द्वैधम् । द्विधा । त्रेधा । त्रैधम् । त्रिधा ॥ द्वि और त्रि शब्दसे विहित धाप्रत्यय को विकल्प से एधाच् आदेश हो और धमुञादेश भी हो ॥४६॥

## याप्ये[7] पाशप्[1] ॥ ४७ ॥

याप्यः—कुत्सितः । याप्येवर्त्तमानात्प्रातिपदिकात्स्वार्थे पाशप् स्यात् । कुत्सितो भिषक्-भिषक्पाशः । याप्य अर्थमें वर्त्तमान प्रातिपदिकसे स्वार्थ में पाशप् प्रत्यय हो ॥

## पूरणाद् भागे तीयादन् ॥ ४८ ॥

पू०द्[5], भागे[7], तीयात्[5], अन्[1] । पूरणप्रत्ययो यस्तीयस्तदन्तात्प्रातिपदिकाद् भागेऽन् स्यात् स्वार्थे । स्वरे विशेषः । द्वितीयो भागो द्वितीयः । तृतीयः ॥ ( तीयादीकक्स्वार्थे वा वाच्यः ) ॥ द्वैतीयीकः । द्वितीयः । तार्तीयीकः । तृतीयः ॥ भाग अर्थ में वर्त्तमान पूरण सञ्ज्ञक तीय प्रत्ययान्त प्रातिपदिक से स्वार्थ में अन् प्रत्यय हो ॥ ४८ ॥

## प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥

प्राक्[1], ए० भ्यः[5], अ० सि[7] । पूरणप्रत्ययान्ताद् भागेऽन् स्यात् पञ्चमः । दशमः ॥ एकादश से जो पूर्व सङ्ख्यावाचक पूरण प्रत्ययान्त शब्द उनसे परे भाग अर्थ में अन् प्रत्यय हो छन्दविषय को छोड़कर ॥४९॥

## षष्ठाष्टमाभ्यां[5] ञ[1] च[अ] ॥ ५० ॥

भागेऽभिधेये षष्ठाष्टमाभ्यां ञः स्याच्चादन् । षष्ठोभागः-षाष्ठः, षष्ठः । आष्टमः । अष्टमः ॥ भाग अभिधेय हो तो षष्ठ और अष्टम शब्द से परे ञ और अन् प्रत्यय हो ॥

## मानपश्वङ्गयोः[7] कन्लुकौ[1] च[अ] ॥ ५१ ॥

षष्ठाष्टमशब्दाभ्यां क्रमेण कन् लुकौ स्यातां माने पश्वङ्गे च वाच्ये । षष्ठको भागः मानं चेत् । अष्टमोभागः-पश्वङ्गं चेत् । ञस्य अनो वा लुक् । चकारात् यथाप्राप्तम् ।

षष्ठः । षाष्ठः । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र जातौ नित्यावि‌ति ज्ञापयति ॥ मान और पशुअङ्ग अभिधेय होतो षष्ठ और अष्टमशब्द से यथाक्रम कन् और अ अथवा अन् का लुक् हो ॥ ५१ ॥

## एकादाकिनिच्चासहाये ॥ ५२ ॥

ए०त्[५], आ०त्[१], अ०ये[७] । एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् स्यात्, चात् कन्लुकौ । एकाकी । एककः । एकः ॥ असहायवाचक एक शब्द से परे आकिनिच् और च से कन् पक्ष में कन् का लुक् भी हो ॥ ५२ ॥

## भूतपूर्वे[७] चरट्[१] ॥ ५३ ॥

पूर्वं भूत इति विगृह्य सुप्सुपेति समासः । भूतपूर्वत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे चरट् स्यात् । आढ्योभूतपूर्वः—आढ्यचरः । सुकुमारचरः ॥ भूत पूर्व विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में चरट् प्रत्यय हो ॥ ५३ ॥

## षष्ठ्या रूप्य च ॥ ५४ ॥

षष्ठ्याः[५], रूप्य[१], च(अ) । षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यः स्यात्, चाच्चरट् । यज्ञदत्तस्य भूतपूर्वो गौः—यज्ञदत्तरूप्यः । यज्ञदत्तचरः ॥ षष्ठ्यन्त प्रातिपदिक से भूतपूर्व अर्थ में रूप्य और चरट् प्रत्यय हो ॥ ५४ ॥

## अतिशायने[७] तमबिष्ठनौ[१] ॥ ५५ ॥

अतिशायनविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे तमबिष्ठनौ स्याताम् । अयमेषामतिशयेन आढ्यः—आढ्यतमः । सुकुमारतमः । अयमेषामतिशयेनपटुः—पटिष्ठः । लघिष्ठः 'टेः' इति ( ६।४।१५५ ) टिलोपः ॥ अतिशायनविशिष्टार्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में तमप् और इष्ठन् प्रत्यय हो ॥ ५५ ॥

## तिङश्च ॥ ५६ ॥

तिङः[५], च (अ) । तिङन्तादतिशये द्योत्ये तमप् स्यात् । सर्वे इमे पठन्तीति, अयमेषामतिशयेन पठति—पठतितमाम् 'तरप्तमपौ घः' इति घसंज्ञायाम् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११। इत्यामुः ॥ अतिशायनद्योत्य हो तो तिङन्त से भी तमप् प्रत्यय हो ॥ ५६ ॥

## द्विवचनविभज्योपपदे[७] तरबीयसुनौ[१] ॥ ५७ ॥

द्वयोरेकस्याऽतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादिमौ स्याताम् । अयमनयोरतिशयेन लघुः—लघुतरः, लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः—पटीयांसः । ईयसुनि नकार इत्' उकारउच्चारणार्थः 'उगित्वान्नुम्' 'सान्त' इति दीर्घः हल्ङ्यादिसंयोगान्तलोपौ जल्पतितराम् । पठतितराम् ॥ द्विवचनसे विभज्य उपपद हो तो अतिशायन अर्थ में सुबन्त और तिङन्त से तरप् और ईयसुन् प्रत्यय हो ॥ ५७ ॥

## अजादीगुणवचनादेव ॥ ५८ ॥

अ० दी[१], गु० त्[५], एव (अ) । इष्ठनीयसुनौ गुणवचनादेव स्याताम् । पटिष्ठः । लघिष्ठः । पटीयान् । लघीयान् ॥ इष्ठन् और ईयसुन् जो पूर्वं अजादी प्रत्यय कहे हैं वे गुण वचन से हो हों ॥ ५८ ॥

## तुश्छन्दसि ॥ ५९ ॥

तुः[५], छन्दसि[७] । तृन्तृजन्तादिष्ठन्नीयसुनौ स्याताम् । अतिशयेन कर्त्ता—करिष्ठः 'तुरिष्ठेमेयःसु' इति तृलोपः । दोहीयसी धेनुः ॥ तृन्नन्त प्रातिपदिक से छन्दो विषय में इष्ठन् और ईयसुन् प्रत्यय हो ॥ ५९ ॥

## प्रशस्यस्य[६] श्रः[१] ॥ ६० ॥

प्रशस्यशब्दस्य श्रादेशः स्यादजाद्योः । सर्वे—इमे प्रशस्या अयमेषामतिशयेन प्रशस्यः (श्रेष्ठः) 'प्रकृत्यैकाच्' इति प्रकृतिभावः । उभौ इमौ प्रशस्यौ अयमनयोरतिशयेन प्रशस्यः-श्रेयान् ॥ अजादी प्रत्यय परे हो तो प्रशस्य शब्द को श्र आदेश हो ॥ ६० ॥

## ज्य[१] च[अ] ॥ ६१ ॥

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । सर्वे—इमे प्रशस्या अयमतिशयेन प्रशस्यः—ज्येष्ठः । 'ज्य च' इति ज्यादेशः । द्वाविमौ प्रशस्यौ अयमतिशयेन प्रशस्यः—ज्यायान् । 'ज्यादादीयसः' इतीकारस्याकारः ॥ अजादि प्रत्यय परे हो तो प्रशस्य शब्द को ज्य आदेश हो ॥ ६१ ॥

## वृद्धस्य[६] च[अ] ॥ ६२ ॥

वृद्धशब्दस्य च ज्यादेशः स्यादजाद्योः । सर्वे—इमे वृद्धा अयमेषामतिशयेन वृद्धः—ज्येष्ठः । उभाविमौ वृद्धौ अयमनयोरति शयेन वृद्धः—ज्यायान् ॥ अजादि प्रत्यय परे हो तो वृद्ध शब्द को भी ज्या आदेश हो ॥ ६२ ॥

## अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥

अ० योः[६], ने० धौ[१] । अन्तिकबाढयोर्यथासङ्ख्यं नेद साध इतीमावादेशौ स्यातामजाद्योः । सर्वाणीमान्तिकानि इदमेषामतिशयेनाऽन्तिकम्-नेदिष्ठम् । उभे इमे अन्तिके, इदमनयोरतिशयेनान्तिकम्—नेदीयः॥ साधिष्ठः साधीयान् ॥ अयमनयोरति-शयेन बाढ इत्यर्थः । बाढो भृशः । 'भृशप्रतिज्ञयोर्बाढम्' । अजादि प्रत्यय परे हो तो अन्तिक ( पास ) और बाढ (प्रतिज्ञा) शब्द को यथाक्रम नेद और साध आदेश हों ॥

## युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥

यु० योः[६], कन्[१], अ० म् (अ) । एतयोः कनादेशो वा स्यादिष्ठेयसोः । सर्वे इमे युवानः, अयमेषामतिशयेन युवा—कनिष्ठः, यविष्ठः । द्वाविमौ युवानावयमनयोरतिशयेन युवा—कनीयान्, यवीयान् । सर्व इमेल्पाः, अयमतिशयेनाल्पः—कनिष्ठः, अल्पिष्ठः । द्वाविमावल्पौ, अयमतिशयेनाल्पः—कनीयान्, अल्पीयान् ॥ अजादि प्रत्यय परे हो तो युवन् और अल्प शब्द को कन् आदेश विकल्प से हो ॥६४॥

## विन्मतोर्लुक् ॥ ६५ ॥

वि०तोः[६], लुक्[१] । विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी-स्रजिष्ठः, स्रजीयान् । अतिशयेन त्वग्वान्—त्वचिष्ठः, त्वचीयान् । धनिष्ठः, धनीयान् ॥ अजादि प्रत्यय परे हो तो विन् और मतुप् प्रत्यय का लुक् हो ॥६५॥

## [७]प्रशंसायां रूपप्[१] ॥ ६६ ॥

प्रशंसायां विशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे रूपप् स्यात्। प्रशस्तो वैयाकरणः—वैयाकरणरूपः। प्रशस्तं पचति—पचतिरूपम् ॥ प्रशंसा विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में रूपप् प्रत्यय हो ॥ ६६ ॥

## ईषदसमाप्तौ[7] कल्पब्देश्यदेशीयरः[1] ॥ ६७ ॥

ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् कल्पब् देश्य देशीयर् इतीमे प्रत्ययाः स्युः। ईषदूनो विद्वान्—विद्वत्कल्पः। यशस्कल्पम्। विद्वद्देशीयः। पचतिकल्पम् ॥ ईषद् असमाप्ति विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से कल्पप् देश्य और देशीयर् प्रत्यय हो ॥ ६७ ॥

## विभाषा सुपो बहुच्पुरस्तात्तु ॥ ६८ ॥

वि० षा[1], सुप[5], ब० च्[1], पु० त् (अ), तु (अ)। ईषदसमाप्तिविशिष्टेऽर्थे सुबन्तात् बहुज्वा स्यात्, स च प्रागेव नतुपरतः। ईषदसमाप्तो लेखः—बहुलेखः। लेखकल्पः ॥ ईषद् असमाप्ति विशिष्ट अर्थमें वर्त्तमान सुबन्तसे पूर्व विकल्प से बहुच् प्रत्यय हो ॥६८॥

## प्रकारवचने[7] जातीयर्[1] ॥ ६९ ॥

प्रकारविशिष्टेऽर्थे वर्त्तमानात्प्रातिपदिकात् स्वार्थे जातीयर् स्यात्। प्रकारवतिचायं प्रत्ययः। एवंप्रकारः—एवंजातीयः। मृदुप्रकारः—मृदुजातीयः। प्रमाणजातीयः। प्रमेयजातीयः ॥ प्रकार ( सादृश्य ) वचन विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में जातीयर् प्रत्यय हो ॥ ६९ ॥

## प्रागिवात् कः ॥ ७० ॥

प्राक्[1], इवात्[5], कः[1]। (इवे प्रतिकृतौ) इत्यतः प्राक् काधिकारोऽस्ति। इवे प्रतिकृतौ। (५।३।९६) इस सूत्रसे पूर्व २ क प्रत्यय का अधिकार है॥ ७०॥

## अव्ययसर्वनाम्नामकच् प्राक् टेः॥७१॥

अ०म्[6], अ०च्[1], प्राक्(अ), टेः[5]। ( तिङश्चेत्यनुवर्त्तते ) अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच् स्यात्, स च प्राक् टेः, न परतः। उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नः। सर्वके। विश्वके। युष्मकाभिः। अस्मकाभिः। युष्मकासु। अस्मकासु। युवकयोः। आवकयोः इत्यत्र प्रातिपदिकस्य। त्वयका। मयका। त्वयकि। मयकीत्यत्र सुबन्तस्य। (अकच् प्रकरणे तूष्णीमः काम् ) ॥ आसितव्यं किल तूष्णीकाम् ॥ ( शीले को मलोपश्च ) तूष्णीं शीलः तूष्णीकः॥ तिङन्तात्–पठतकि। पचतकि। जल्पतकि। अव्यय और सर्वनाम संज्ञक प्रातिपदिक और तिङन्त से प्रागिवीय अर्थोंमें टि भाग से पूर्व अकच् प्रत्यय हो ॥ ७१॥

## कस्य[6] च[अ] दः[1] ॥७२॥

कान्ताव्ययस्य दकारोन्तादेशः स्याद्, अकच्च। धिक्—धकिद्। हिरुक् हिरकुत्। पृथक् पृथकत् ॥ प्रागिवीय अर्थों में विहित अकच् के योग में कान्त प्रातिपदिक को दकार आदेश हो ॥७२॥

## अज्ञाते[7] ॥ ७३ ॥

अज्ञातत्वोपाधिकेऽर्थे वर्त्तमानात् प्रातिपदिकात् तिङन्ताच्च विहितः प्रत्ययः स्यात्।

कस्यायमश्वः-अश्वकः । उच्चकैः । नीचकैः । सर्वके । पचतकि । जल्पतकि ॥ अज्ञात समानाधिकरण प्रातिपदिक और तिङन्तसे स्वार्थमें यथाविहित प्रत्यय हो ॥ ७३ ॥

## कुत्सिते[७] ॥७४॥

कुत्सितोपाधिकेऽर्थे वर्त्तमानात् स्वार्थे यथाविहितं प्रत्ययः स्यात् । कुत्सितोऽश्वः-अश्वकः । उष्ट्रकः ॥ कुत्सित (निन्दित) समानाधिकरण प्रातिपदिकसे स्वार्थमें यथाविहित प्रत्यय हो ॥ ७४ ॥

## सञ्ज्ञायां[७] कन्[१] ॥ ७५॥

सञ्ज्ञायां कुत्सिते कन् स्यात् । शूद्रकः । चूर्णकः ॥ संज्ञा गम्यमान हो तो कुत्सित समानाधिकरण प्रातिपदिकसे कन् प्रत्यय हो ॥ ७५॥

## अनुकम्पायाम्[७] ॥७६॥

अनुकम्पायां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययः स्यात् । पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः । स्वपितकि ॥ अनुकम्पा गम्यमान हो तो सुबन्त और तिङन्त से स्वार्थमें यथाविहित प्रत्यय हो ॥७६॥

## नीतौ[७] च[अ] तद्युक्तात्[५] ॥७७॥

सामदानादि रुपायो नीतिः । तस्यां च गम्यमानायामनुकम्पायुक्तात्कः स्यात् । हन्त ते धानकाः । हन्त ते तिलकाः ॥पहकि । अद्धकि । अद्धीति तिङन्तस्य टेः प्रागकच् ॥ नीति गम्यमान हो तो अनुकम्पामय शब्दसे क प्रत्यय हो ॥७७॥

## बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८॥

ब० चः[५], म० म्नः[५], ठच्[१], वा (अ) । अनुकम्पायां गम्यमानायां नीतौ च बह्वचः प्रातिपदिकान्मनुष्यनामधेयाद् वा ठच् स्यात् । देविकः । देवदत्तकः । यज्ञिकः । यज्ञदत्तकः ॥ अनुकम्पा और नीति गम्यमान हो तो मनुष्यनामवाचक बह्वच् प्रातिपदिकसे विकल्प करके ठच् प्रत्यय हो ॥७८॥

## घनिलचौ[१] च[अ] ॥७९॥

बह्वचो मनुष्यनाम्नो घन् इलच् इतीमौ स्याताम् । देवियः । देविलः । देविकः । देवदत्तकः ॥ मनुष्यनामवाचक बह्वच् प्रातिपदिक से घन् और इलच् प्रत्यय हो ॥७९॥

## प्राचामुपादेरडज्वुचौ च ॥८०॥

प्रा० मु०[६], उ० देः[५], अ० चौ[१], च(अ) । उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नोऽडच् वुच् इतीमौ स्याताम् । चाद्यथाप्राप्तम् । प्राचां ग्रहणं सम्मानार्थम् । अनुकम्पितः-उपेन्द्रदत्तः-उपडः, उपकः, उपिकः, उपियः, उपिलः, उपेन्द्रदत्तकः ॥ उपशब्द है आदि में जिसके ऐसे मनुष्यनामवाचक अनुकम्पायुक्त बह्वच् प्रातिपदिक से प्राग्देशीयाचार्यों के मत में अडच्, वुच्, घन्, इलच् ठच् और कन् प्रत्यय हो ॥८०॥

## जातिनाम्नः[५] कन्[१] ॥८१ ॥

जातिशब्दो यो मनुष्यनामधेयः तस्मात् कन् स्यादनुकम्पायां नीतौ च । व्याघ्रकः ।

सिंहकः । रासभकः ॥ अनुकम्पा और नीति अर्थमें मनुष्यनामधेय प्रातिपदिक से कन् प्रत्यय हो ।।८१।।

## अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

अ० स्य[६], उ० पः[१] च(अ) । अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन् तस्य चोत्तरपदलोपः । अनुकम्पितोव्याघ्राजिनः—व्याघ्रकः । सिंहकः ॥ अनुकम्पा गम्यमान हो तो मनुष्यनामवाचक अजिन शब्दान्त प्रातिपदिक से कन् प्रत्यय हो और उसके उत्तरपद का लोप हो ॥ ८२॥

## ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३॥

ठा० दौ[७], उ० म्[१], द्वि० त्[५], अचः[५] । अस्मिन् प्रकरणे—यः ठः अजादि प्रत्ययश्चतस्मिन् प्रत्ययेपरे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । अनुकम्पितो देवदत्तः—देविकः । देवियः । देविलः ॥ (चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः) ॥ अनुकम्पितो बृहस्पतिदत्तः—बृहस्पतिकः ॥ ( अनजादौ च वा लोपोवक्तव्यः ) ॥ देवदत्तकः । देवकः ॥ नीति और अनुकम्पा अर्थमें ठ और अजादि प्रत्यय परे होतो प्रकृति के द्वितीय अच्से परे शेष सब का लोप हो ॥ ८३ ॥

## शेवलसुपरिविशालवरुणार्यमादीनां[६] तृतीयात्[५] ॥ ८४ ॥

एतेषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । अनुकम्पितः शेवलदत्तः—शेवलिकः, शेवलियः, शेवलिलः । सुपरिकः, सुपरियः, सुपरिलः । विशालिकः, विशालियः, विशालिलः । वरुणिकः, वरुणियः, वरुणिलः । अर्यमिकः, अर्य्यमियः, अर्यमिलः ॥ ठ और अजादि प्रत्यय परे हो तो मनुष्य नाम वाचक शेवल, सुपरि, विशाल, वरुण और अर्य्यमन् शब्द के तृतीया अच् से परे शेषांश का लोप हो ॥ ८४॥

## अल्पे[७] ॥८५॥

अल्पत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययः स्यात् । अल्पं घृतम्—घृतकम् । तैलकम् । सर्वकम् । उच्चकैः । पचतकि ॥ अल्प द्योत्य हो तो प्रातिपदिक से यथाविहित प्रत्यय हो ॥८५॥

## ह्रस्वे[७] ॥८६॥

ह्रस्वत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययः स्यात् । ह्रस्वो वृक्षः—वृक्षकः ॥ ह्रस्व द्योत्य हो तो प्रातिपदिक से यथाविहित प्रत्यय हो ॥८६॥

## सञ्ज्ञायां[७] कन्[१] ॥८७॥

ह्रस्वहेतुका या सञ्ज्ञा तस्यां गम्यमानायां कन् स्यात् । वंशकः । वेणुकः । दण्डकः । ह्रस्व विषयक संज्ञागम्यमान हो तो प्रातिपदिक से कन् प्रत्यय हो ॥८७॥

## कुटीशमीशुण्डाभ्यो रः ॥८८॥

कु० भ्यः[५], रः[१] । स्पष्टम् । ह्रस्वा कुटी—कुटीरः । शमीरः । शुण्डारः ॥ स्वार्थ में कुटी ( कोठरी ) शमी ( छेंकुर ) और शुण्डा ( सूंड ) शब्द से र प्रत्यय हो ॥ ८८ ॥

## [३]कुत्वाडुपच्[१] ॥८९॥

ह्रस्वाकुतूः—कुतुपुः ॥ ह्रस्वार्थ द्योत्य हो तो कुतू (कुप्पा) शब्द से डुपच् प्रत्ययहो॥

## कासूगोणीभ्यां[५] ष्टरच्[१] ॥९०॥

कासूगोणीशब्दाभ्यां ह्रस्वत्वेद्योत्ये ष्टरच् स्यात् । ह्रस्वा कासूः—कासूतरी । गोणीतरी । कासूरायुधविशेषः ॥ ह्रस्वार्थ द्योत्य हो तो कासू और गोणी शब्द से ष्टरच् प्रत्यय हो ॥ ९० ॥

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥९१॥

व० भ्यः[५], च(अ), त०त्वे[७] । वत्स उक्षन् अश्व ऋषभ इत्येभ्यस्तनुत्वे द्योत्ये ष्टरच् स्यात् । वत्सतरः—द्वितीयंवयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः ॥ तनुत्व द्योत्य हो तो वत्स, उक्षन्, अश्व और ऋषभ शब्द से ष्टरच् प्रत्यय हो ॥ ९१ ॥

## किंयत्तदोनिर्द्धारणेद्वयोरेकस्य डतरच् ॥९२॥

कि० दः[५], नि० णे[७], द्वयोः[७], एकस्य[६], ड० च्[१] । किम् यत् तत् इत्येतेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् । अनयोः—कतरः—आर्य्यः । यतरः । ततरः । महाविभाषया कः, यः, सः ॥ दो में से एक का निर्द्धारण गम्यमान हो तो किम् यत् और तद् प्रातिपदिक से डतरच् प्रत्यय हो ॥९२॥

## वा बहूनां[६] जातिपरिप्रश्ने[७] डतमच्[१] ॥९३॥

बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् स्यात् । भवतां कतमः कठः । यतमः । ततमः । कः । यः । सः ॥ बहुतों में से एक का निर्द्धारण हो तो किम् यत् और तद् प्रातिपदिक से जाति परिप्रश्न अर्थ में विकल्प से डतमच् प्रत्यय हो ॥ ९३ ॥

## एकाच्च प्राचाम् ॥९४॥

एकात्[५], च(अ), प्राचाम्[६] । एकशब्दात् प्राचां मतेन डतरच् डतमच् इतीमौ स्याताम् । अनयोः—एकतरः—मैत्रः । एषाम्—एकतमः—चैत्रः ॥ प्राग्देशीय आचार्यों के मत में एक शब्द से स्वीय २ विषय में डतरच् और डतमच् प्रत्यय हो ॥९४॥

## अवक्षेपणे[७] कन्[१] ॥९५॥

अवक्षिप्यते येन तदवक्षेपणम् । तस्मिन् कन् स्यात् । व्याकरणेन गर्वितो व्याकरणकः। प्रागिवीयानां पूर्णोविधिः ॥ अवक्षेपण अर्थमें वर्त्तमान प्रातिपदिक से कन् प्रत्ययहो ॥

## इवे[७] प्रतिकृतौ[७] ॥९६॥

इवार्थे यत् प्रातिपदिकं तस्मात् कन् स्यात । अश्वइव प्रतिकृतिः—अश्वकः ॥ इवार्थ में जो प्रातिपदिक उससे प्रतिकृति ( तसवीर ) गम्यमान होनेपर कन् प्रत्यय हो ॥९६॥

## सञ्ज्ञायाम्[७] च[अ] ॥९७॥

इवार्थे कन् स्यात्समुदायश्चेत् सञ्ज्ञा । अश्वसदृशस्य सञ्ज्ञा—अश्वकः । उष्ट्रकः॥ इवार्थ में सञ्ज्ञा गम्यमान हो तो कन् प्रत्यय हो ॥९७॥

## लुम्मनुष्ये ॥९८॥

लुप्[१], म० ष्ये[७] । मनुष्ये वाच्ये सञ्ज्ञायां च विहितस्य कनो लुप् स्यात् । चञ्चा-

तृणमयः पुमान्। चञ्चेव मनुष्यः—चञ्चा ॥ मनुष्यवाच्य हो तो सञ्ज्ञा में जो विहित कन् उसका लुप् हो ॥ ९८ ॥

## जीविकार्थे चाऽपण्ये ॥९९॥

जी० र्थे॰, च(अ) अ०ण्ये॰ । जीविकार्थं यद्विक्रीयमाणं तस्मिन् वाच्ये कनो लुप् स्यात् । रामः । कृष्णः । शिवराजः । चित्रजीविनां जीविकार्थासु नरोत्तमप्रतिकृतिष्विदम् ॥ जीविकार्थ में अपण्य ( जो बेचा न जावे ) अभिधेय हो तो इवार्थ में विहित कन् प्रत्यय का लुप् हो । तात्पर्य्य यह है कि जैसे तमाशा दिखलाने वाले काष्ठनिर्मित यन्त्र को शिर पर रक्खे हुये घर २ तमाशा दिखलाते फिरते हैं परन्तु बेचते नहीं ऐसी प्रतिकृति में प्राप्त कन् प्रत्यय का लुप् होजाता है ॥९९॥

## देवपथादिभ्यश्च ॥१००॥

दे० भ्यः॰, च(अ) । कनो लुप् स्यात् । यथा—देवपथः । हंसपथः । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तो अ प्रत्ययः । 'नस्तद्धिते' इति टिलोपः ॥ देवपथादि शब्दों से परे विहित कन् प्रत्यय का लुप् हो ॥१००॥

## वस्तेर्ढञ् ॥१०१॥

वस्तेः॰, ढञ्॰ । इतः प्रभृति सामान्येन प्रत्ययाः । वस्तिशब्दादिवार्थे द्योत्ये ढञ् स्यात् । वस्तिरिव—वास्तेयम् 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति ढस्य एयादेशः । वास्तेयी । 'टिड्ढाणञिति ङीप्' वास्तेयी ॥ इवार्थ द्योत्य हो तो वस्ति ( वास ) शब्द से ढञ् प्रत्यय हो ॥ १०१ ॥

## शिलाया ढः ॥ १०२॥

शि० याः॰, ढः॰ । ( शिलायाः) इति योगविभागाड्ढञपीत्येके । शिलेव-शिलेयम् । शैलेयम् 'तद्धितेष्वचामादेः' इत्यादिना वृद्धिः ॥ इवार्थ द्योत्य हो तो शिला शब्द से ढ और ढञ् प्रत्यय हो ॥ १०२ ॥

## शाखादिभ्यो यः ॥ ११२ ॥

शा० भ्यः॰, यः॰ । शाखेव-शाख्यः । मुख्यः । जघनमिव-जघन्यः । अग्र्यः ॥ इवार्थ द्योत्य होतो शाखादि प्रादिपदिकों से य प्रत्यय हो ॥१०३॥

## द्रव्यं[1] च[अ] भव्ये[7] ॥ १०४ ॥

द्रुशब्दादिवार्थे यः प्रत्ययो निपात्यते । द्रव्यम्-अयं विप्रः । यप्रत्यये ओर्गुणः । अवादेशः ॥ भव्य ( कल्याण ) अभिधेय होने पर द्रु शब्द से इवार्थ में य प्रत्ययान्त द्रव्य शब्द निपातित है ॥१०४॥

## कुशाग्राच्छः ॥ १०५॥

कु० त्॰, छः॰ । कुशाग्रमिव-कुशाग्रीया बुद्धिः । छस्येयादेशः । टाप् प्रत्ययः ॥ इवार्थमें कुशाग्र शब्दसे छ प्रत्यय हो ॥ १०५ ॥

## समासाच्च तद्विषयात् ॥ १०६॥

स० त्॰, च (अ) त० त्॰ । इवार्थविषयात्समासाच्छः स्यात् । काकश्च तालश्च—

काकतालमिति द्वन्द्वे लक्षणया पततः काकस्य निपतता तालेन चित्रीयमाणसंयोग उच्यते । तत्तुल्यः काकतालीयः । अन्धकश्च वर्तका च-अन्धकवर्त्तकम् । अन्धकस्य वर्त्तकाया उपर्यतर्कितपादन्यास उच्यते । तत्तुल्यम् । अन्धकवर्त्तकीयम् ॥ इवार्थ विषय समासमें इवार्थ ही में छ प्रत्यय हो ॥१०६॥

## शर्करादिभ्योऽण् ॥ १०७ ॥

श० भ्यः[५], अण्[१] । शर्करेव—शार्करम् ॥ शर्करादि प्रातिपदिकों से इवार्थ में ठक् प्रत्यय हो ॥१०७॥

## अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥

अ० भ्यः[५], ठक्[१] । अङ्गुलीव-आङ्गुलिकः ॥ अङ्गुली आदि प्रादिपदिकों से इवार्थ में ठक् प्रत्यय हो ॥ १०८ ॥

## एकशालायाष्ठजन्यतरस्याम् ॥ १०९॥

ए० याः[५], ठच्[१], अ० म् (अ) । एक शालाशब्दादिवार्थे ठञ्वा पत्ते ठक् स्यात् । एकशालेव-एकशालिकः ठस्येकः । ऐकशालिकः । आद्यचो वृद्धिः ॥ एक शाला शब्द से इवार्थ में विकल्प से ठच् प्रत्यय हो ॥१०९॥

## "कर्कलोहितादीकक्" ॥ ११० ॥

कर्कलोहितशब्दाभ्यामिवार्थे ईकक् स्यात् । कर्कः शुक्लोऽश्वः-तेन सदृशः-कार्कीकः । लौहितीकः ॥ इवार्थमें कर्क और लोहित शब्दसे ईकक् प्रत्यय हो ॥ ११०॥

## प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥१११॥

प्र० त्[५], थाल्[१], छ० सि[७] । प्रत्न पूर्व विश्व इम इत्येभ्य इवार्थे थाल् स्याच्छन्दसि-विषये । तं प्रत्नथा पूर्वथा विश्वथेमथा ॥ इवार्थमें प्रत्न, पूर्व, विश्व, और इम प्रातिपदिकसे छन्दोविषय होनेपर थाल् प्रत्यय हो ॥१११॥

## पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥

पू० त्[५], ञ्यः[१], अ० त्[५] । इवार्थोनिवृत्तः । नानाजातीया । अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः । तद्वाचकात् स्वार्थे ञ्यः स्यात् । यथा-लौहितध्वज्यः' । लौहिताः ध्वजाः यस्य पूगस्य स एव लौहितध्वज्यः ॥ ग्रामणी वर्जित पूग वाचक प्रातिपदिक से स्वार्थमें ञ्य प्रत्यय हो ॥ ११२ ॥

## व्रातच्फञोरस्त्रियाम् ॥ ११३॥

व्रा० ञोः[६], अ० म्[७] । नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः-व्राताः । व्रातवाचिभ्य च्फञन्तेभ्यः प्रातिपदिकेभ्यश्च स्वार्थे ञ्यः स्यादस्त्रियाम् । कापोतपाक्यः । कापोतपाक्यौ । कपोतपाकाः । कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः ॥ व्रातवाचक और च्फञन्त प्रातिपदिकसे स्त्रीलिङ्ग को छोड़कर स्वार्थमें ञ्य प्रत्यय हो ॥११३॥

## आयुधजीविसङ्घाञ् ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ॥११४॥

आ० त्[५], ञ्यट्[१], वा० षु[७], अ० त्[५] । वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट् स्यात् टित्वाद् ङीप् । क्षौद्रक्यः । क्षौद्रक्यौ । क्षुद्रकाः मालव्यः ॥ ब्राह्मण

और राजन्यको छोड़कर वाहीक अर्थ गम्यमान होनेपर आयुध जीविसङ्घ वाचक प्राति-पदिकों से स्वार्थमें ञ्यट् प्रत्यय हो ॥११४॥

## वृकाट्टेण्यण् ॥ ११५ ॥

वृ० त्[५], टे० ण्[१] । आयुधजीविसङ्घवाचकात् । स्वार्थे टेण्यण् स्यात् । वार्केण्यः । वार्केण्यौ । वृकाः । वृकोनाम कश्चिदायुधजीविसंघः । स एव वार्केण्यः । आदि वृद्धिः । आयुध जीविसङ्घवाचक वृक शब्दसे स्वार्थमें टेण्यण् प्रत्यय हो ॥११५॥

## दामन्यादित्रिगर्त्तषष्ठाच्छः ॥ ११६ ॥

दा० त्[५], छः[१] । दामन्यादिभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् । त्रिगर्तः षष्ठो वर्गोयेषां ते त्रिगर्त्तषष्ठाः ॥ ( आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथ दाण्डकी । क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोथ जालकिः ॥ दामनयः–शस्त्र जीविसङ्घः । दामनीयः । दामनीयौ । दामनयः । त्रिगर्त्तः त्रिगर्तीयः कौण्डोपरथीयः, दाण्डकीयः ॥ आयुधजीवि सङ्घवाचक दामन्य दि और त्रिगर्त्त षष्ठ प्रातिपदिकोंसे स्वार्थमें छः प्रत्यय हो॥

## पर्श्वादियौधेयादिभ्योऽणञौ ॥११७॥

प० भ्यः[५], अ० औ[१] । पर्श्वादिभ्यः आयुधजीविसङ्घवाचिभ्यः स्वार्थे क्रमादणञौ स्याताम् । पार्शवः । पार्शवौ । पर्शवः । यौधेयः । यौधेयौ । यौधेयाः ॥ आयुधजीविसङ्घ वाचक पर्श्वादि और योधेयादि प्रातिपदिकोंसे स्वार्थमें अण् और अञ् प्रत्यय हो ॥११६॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्११८

अ० णः[५],यञ्[१] । अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् । अभिजितोऽपत्यम् आभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । गोत्रप्रत्ययस्यात्राणो ग्रहणम् ॥ अभिजित्, विदभृत्, शालावत्, शिखावत्, शमीवत्, ऊर्णावत, और श्रुमत् इन अणन्त प्रातिपदिकोंसे स्वार्थ में यञ् प्रत्यय हो ॥

## ञ्यादयस्तद्राजाः ॥ ११९ ॥

ञ्या० यः[१], त० जाः[१] । पूगाञ्ञ्य इत्यारभ्य उक्ताः प्रत्ययाः तद्राजसञ्ज्ञकाः स्युः । तथा चैवोदाहृतम् ॥ पूगाञ्ञ्याऽग्रामण पूर्वात् इस योग से लेकर जो प्रत्यय कहे हैं वे तद्राज सञ्ज्ञक हों ॥ ११९ ॥

इति पञ्चमाऽध्यायस्य तृतीयः पादः ॥

---

# अथ पञ्चमाऽध्यायस्य चतुर्थः पादः ।

## पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च ॥१॥

पा० स्य[६], स० देः[६], वी० म्[७], वुन्[१], लोपः[१], च (अ) । पादशतान्तस्य सङ्ख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् स्यात् । ततसन्नियोगेन चान्तस्य लोपः । लोप-वचनमनैमित्तिकार्थम् । अतो न स्थानिवत् (पादः पत्) तद्धितार्थ इतिसमासः द्वौ द्वौ पादौ ददाति–द्विपदिकां ददाति । द्वे द्वे शते ददाति द्विशतिकां ददाति ॥ वीप्सा द्योत्य

हो तो सङ्ख्यादि पादान्त और शतान्त प्रातिपादिक से स्त्रीलिङ्ग में वुन् प्रत्यय हो और उसके संयोग से पाद और शतके अन्त का लोप हो ॥ १ ॥

## दण्डव्यवसर्गयोश्च ॥ २ ॥

वृ० योः[७], च (अ)। दण्डः दमनम्। व्यवसर्गः-दानम्। दण्डव्यवसर्गयोर्गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य सङ्ख्यादेर्वुन् स्यात्, अन्तलोपश्च। अवीप्सार्थमिदम्। द्वौ पादौ दण्डितः-द्विपदिकाम् दण्डितः। द्वौ पादौ व्यवसृजति-द्विपदिकां व्यवसृजति। द्विशतिकां दण्डितः। द्विशतिकां व्यवसृजति ॥ दण्ड और व्यवसर्ग गम्यमान हो तो सङ्ख्यादिपदान्त और शतान्त प्रातिपदिकसे वुन् प्रत्यय हो और अन्त्य का लोपहो

## स्थूलादिभ्यः[५] प्रकारवचने[७] कन्[१] ॥ ३ ॥

स्थूलादिभ्यः प्रकारवचने द्योत्ये कन् स्यात्। प्रकारो विशेषः। स्थूलप्रकारः-स्थूलकः। अणुकः॥ (चञ्चद् बृहतोरुपसङ्ख्यानम्)॥ चञ्चत्प्रकारः-चञ्चत्कः। बृहत्कः॥ (सुरायाः अहौ)॥ सुरावर्णोऽहिः-सुरकः॥ प्रकारवचन द्योत्य हो तो स्थूलादि प्रातिपदिकों से कन् प्रत्यय हो ॥ ३ ॥

## अनत्यन्तगतौ[७] क्तात्[१] ॥ ४ ॥

अत्यन्तगतिरशेषेण सम्बन्धः। तदभावोऽनत्यन्तगतिः। अनत्यन्तगतौ गम्ये क्तान्तात्। कन् स्यात्। भिन्नकः। छिन्नकः॥ अनत्यन्त गति गम्यमान हो तो क्तान्त प्रातिपदिक से कन् प्रत्यय हो॥ ४ ॥

## न[अ] सामिवचने[७] ॥ ५ ॥

सामिपर्याये उपपदे क्तान्तान्न कन्। सामिकृतम्। अर्द्धकृतम्। सामिं (अर्द्ध) वचन उपपद हो तो क्तान्त प्रातिपदिक से कन् प्रत्यय न हो ॥ ५ ॥

## बृहत्या आच्छादने ॥ ६ ॥

वृ० त्याः[५], आ० ने[७]। आच्छादने वर्त्तमानात् बृहतीशब्दात्स्वार्थे कन् स्यात्। द्वौ प्रावारोत्तरासङ्गौसमौ-बृहतिकः॥ आच्छादन अर्थ में वर्त्तमान बृहती प्रातिपादिक से कन् प्रत्यय हो ॥ ६ ॥

## अषडक्षाशितङ्ग्वलंकर्मालम्पुरुषाध्युत्तरपदात् खः ॥ ७ ॥

अ० त्[५], खः[१]। अषडक्ष आशितङ्गु अलङ्कर्म, अलम्पुरुष इत्येतेभ्योऽध्युत्तरपदाच्च स्वार्थे खः स्यात्। अषडक्षीणः मन्त्रः। द्वाभ्यामेव कृत इत्यर्थः। मन्त्रणं मन्त्रः। रहसि राजतदमात्यादिभिः युक्तिभिः क्रियमाणं निर्धारणम्। अविद्यमानानि षडक्षीणि श्रोत्रेन्द्रियाणि यस्मिन्निति बहुव्रीहिः। आशिता गावोऽस्मिन्निति—आशीतंगवीनम् अरण्यम्। निपातनात् पूर्वस्य मुम्। अलंकर्मणे अलङ्कर्मीणः। अलम्पुरुषीणः ईश्वराधीनः। नित्योऽयं खः॥ अषडक्ष, आशितङ्गु, अलङ्कर्म, अलम्पुरुष और अधिउत्तरपद प्रातिपदिक से स्वार्थ में ख प्रत्यय हो ॥ ७ ॥

## विभाषाञ्चेरदिक्स्त्रियाम् ॥ ८ ॥

वि० षा[१], अञ्चेः[५], अ० म्[७]। अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात् खोवा स्यात् स्वार्थे। प्राक्, प्राचीनम्-भवनम्। प्रत्यक्, प्रतीचीनम्। अवाक्, अवाचीनम्॥

अञ्चत्यन्त प्रातिपदिकसे दिशा स्त्रीलिङ्गको छोड़कर स्वार्थ में विकल्प से ख प्रत्यय हो॥

## जात्यन्ताच्छबन्धुनि ॥ ९ ॥

जा० त्^५, छः^१, ब० नि^७। ब्राह्मणजातीयाः। क्षत्रियजातीयाः। बन्धु अर्थ में वर्त्त-मान जात्यन्त प्रातिपदिक से स्वार्थ में छ प्रत्यय हो ॥ ९ ॥

## स्थानान्ताद् विभाषा सस्थानेनेति चेत् ॥ १० ॥

स्था०द्^५, विभाषा^१, स०न^१, इति (अ), चेत् (अ)। स्थानान्तात्प्रातिपदिकाच्छ वा स्यात्। सस्थानेनतुल्येन चेत् स्थानान्तमर्थवदित्यर्थः। पित्रा तुल्यः-पितृस्थानीयः। पितृस्थानः। मातृस्थानीया। मातृस्थाना। राजस्थानीयः। राजस्थानः। स्थानं पूज्य-त्वादि पदम्। पितृस्थानमिव स्थानं यस्येति बहुव्रीहिः ॥ स्थानान्त प्रातिपदिक से विकल्प करके छ प्रत्यय हो यदि दोनों की सदृशता हो तो ॥ १० ॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥

कि० त्^५, आमु०^१, अ० र्षे^७। किमः एदन्तात् तिङोऽव्ययाच्च,-यो घस्तदन्तादामुः। स्यान्न तु द्रव्यप्रकर्षे। किंतमाम्। किंतराम्। प्राह्णेतमाम् पचतितमाम्। उच्चैस्तमाम्॥ किम् एकारान्तनिपात तिङन्त और अव्यय शब्दों से विहित जो घ संज्ञक प्रत्यय तदन्त प्रातिपदिकों से अद्रव्य प्रकर्ष में आमु प्रत्यय हो ॥ १० ॥

## अमु चच्छन्दसि ॥ १२ ॥

अमु^१, च (अ), छन्दसि^७। किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमुरामुश्चस्याच्छन्दसि विषये। प्रतरम्। प्रतरां नय ॥ किम्, एकारान्त, तिङन्त और अव्यय शब्दों से विहित जो घसंज्ञक प्रत्यय तदन्त प्रातिपदिक से अद्रव्य प्रकर्ष तथा छन्द विषय में अमु और आमु प्रत्यय हो ॥ १२ ॥

## अनुगादिनष्ठक् ॥ १३ ॥

अ० नः^५, ठक्^१। अनुगदतीति अनुगादीसएवआनुगादिकः॥ स्वार्थ में अनुगादिन् शब्द से ठक् प्रत्यय हो ॥ १३ ॥

## णचः स्त्रियामञ् ॥१४॥

णचः^५, स्त्रियाम्^७, अञ्^१। कर्मव्यतिहारे स्त्रियां णच् विहितस्तदन्तात् स्वार्थेऽञ् स्यात् स्त्रियाम्। व्यावक्रोशी। व्यावहासी ॥ णच् प्रत्ययान्त प्रातिपदिक से स्वार्थ में स्त्रीलिङ्ग विषयक अञ् प्रत्यय हो ॥१४॥

## अणिनुणः ॥१५॥

अण्^१, इनुणः^५। अभिविधौ भाव इनुण् विहितस्तदन्तात्स्वार्थेऽण् स्यात्। सांराविणम्। सांकूटिनंवर्त्तते ॥ इनुण् प्रत्ययान्त शब्द से स्वार्थ में अण् प्रत्यय हो ॥१५॥

## "विसारिणो मत्स्ये" ॥१६॥

मत्स्येवाच्ये विसारिन् शब्दात् स्वार्थेऽण् स्यात्। वैसारिणो मत्स्यः 'तद्धितेष्वचा-मादेः' इत्यादचो वृद्धिः 'इनण्यनपत्ये' इति प्रकृतिभावाद् 'नस्तद्धिते' इति टिलोपो न ॥ मत्स्य (मछली) वाच्य हो तो विसारिन् शब्दसे स्वार्थ में अण् प्रत्यय हो ॥१६॥

## संख्यायाः[५] क्रियाभ्यावृत्तिगणने[७] कृत्वसुच्[१] ॥१७॥

क्रियाभ्यावृत्तिगणने संख्याशब्दात स्वार्थे कृत्वसुच् स्यात । पञ्चवारान् भुङ्क्ते—पञ्चकृत्वो भुङ्क्ते । सप्तकृत्वः । अष्टकृत्वः। दशकृत्वः ॥ क्रियाभ्यावृत्ति (बार २ गिनने) अर्थ में संख्या वाचक शब्दों से स्वार्थ में कृत्वसुच् प्रत्यय हो ॥१७॥

## द्वित्रिचतुर्भ्यः सुच्॥१८॥

द्वि० भ्यः[५], सुच्[१] । क्रियाभ्यावृत्तिगणने द्वित्रि चतुर् इत्येभ्यः संख्याशब्देभ्यः सुच् स्यात् । यथा द्विःपठति । त्रिः स्नाति । चतुः पिबति । चतुर् शब्दात सुचि उचावितौ चतुर्स् इति स्थिते 'रात्सस्य' इति सकारलोपे रस्य विसर्गत्वे चतुरिति ॥ क्रियाभ्यावृत्तिगणन अर्थमें वर्त्तमान द्वि, त्रि और चतुर् संख्या वाचक शब्दों से सुच् प्रत्यय हो॥

## एकस्य सकृच्च ॥१९॥

एकस्य[६], सकृत्(अ), च (अ) । क्रियागणने एकशब्दस्य सकृदित्ययमादेशः स्यात् सुच्प्रत्ययः । सकृद् ददाति । सकृदधीते । सुचः सर्वस्य लोपः ॥ क्रियागणन अर्थ में एक शब्द से सुच् प्रत्यय और एक शब्द को सकृत् आदेश भी हो ॥ १९ ॥

## विभाषा बहोर्धाऽविप्रकृष्टकाले ॥२०॥

वि०षा[१], बहोः[५], धा[१], अ०ले[७] । क्रियाभ्यावृत्तिगणने बहुशब्दाद् विप्रकृष्टकाले वा धा स्यात् । बहुधा दिवस्य भुङ्क्ते । बहुकृत्वो दिवसस्य भुङ्क्ते ॥ अविप्रकृष्ट (आसन्न) काल क्रियाभ्यावृत्ति गणन अर्थमें बहु शब्द से विकल्प करके धा प्रत्यय हो॥

## तत्[१] प्रकृतवचने[७] मयट्[१] ॥२१॥

प्राचुर्येण प्रस्तुतम् प्रकृतम् । तस्य वचनम्–प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये—प्रकृतमन्नम्—अन्नमयम् । आनन्दमयं ब्रह्म । जलमयी भूमिः ॥ प्रकृतवचन अर्थ में वर्त्तमान प्रथमासमर्थ प्रातिपदिक से स्वार्थ में मयट् प्रत्यय हो ॥२१॥

## समूहवच्च बहुषु ॥२२॥

स० त् (अ), च (अ), ब० षु[७] । बहुषु प्रकृतेषूच्यमानेषु समूहवत् प्रत्ययाः स्युः । चान्मयट् । मोदकाः प्राचुर्येण प्रस्तुताः–मौदकिकम् । मोदकमयम् । शाष्कुलिकम् । शष्कुलीमयम् ॥ बहुन प्रकृत वचन वाच्य हों तो प्रथमासमर्थ प्रातिपदिक से समूहवत् प्रत्यय हो, पक्ष में मयट् भी हो ॥ २२ ॥

## अनन्तावसथेतिहभेषजाञ्ञ्यः ॥२३॥

अ० त्[५], ञ्यः[१] । अनन्तादिभ्यः स्वार्थे ञ्यः स्यात् । अनन्त एव–आनन्त्यम् । आवसथ एव-आवसथ्यम् । इति ह-ऐतिह्यम् । निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्त्तते । भैषजमेव-भैषज्यम् ॥ अनन्त ( जिसका अन्त न हो ) आवसथ ( निवासस्थान ) इति ह (इस प्रकारसे सुनाजाता है) और भेषज (औषध) शब्द से स्वार्थ में ञ्य प्रत्यय हो ॥

## देवतान्तात्तादर्थ्ये यत् ॥ २४॥

दे० त्[५], ता०[७] र्थ्ये, यत्[१] । तदर्थ एव तादर्थ्यम्, स्वार्थे ष्यञ् । तादर्थ्ये देवताशब्दान्तात् प्रातिपदिकाच्चतुर्थीसमर्थात् यत् स्यात् । अग्निदेवतायै इदम्–अग्निदेव-

४५

त्यम् । वायुदेवत्यम् ॥ चतुर्थी समर्थ देवता शब्दान्त प्रातिपदिक से तादर्थ्य में यत् प्रत्यय हो ॥ २४ ॥

## पादार्घाभ्यां[५] च[अ] ॥२५॥

तादर्थ्ये वाच्ये पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां यत् स्यात् । पादार्थमुदकम्-पाद्यम् । अर्घ्यम् ॥ ( नवस्य नू आदेशः, त्नप्तनप्खाश्च प्रत्यया वक्तव्याः ) । नूत्नम् । नूतनम् । नवीनम् । ( नश्च पुराणे प्रात् ) ॥ पुराणार्थे वर्त्तमानात्प्रशब्दान्नो वाच्यः चात् पूर्वोक्ताः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥ (भागरूपनामभ्यो धेयः) ॥ भागधेयम् । रूपधेयम् । नामधेयम् ॥ ( आग्नीध्रसाधारणादञ् ) ॥ आग्नीध्रम् । साधारणम् । स्त्रियाम् ङीप्-आग्नीध्री । साधारणी ॥ चतुर्थी समर्थ पाद और अर्घ (पानार्थ जल) शब्द से तादर्थ्य वाच्य हो तो स्वार्थ में यत् प्रत्यय हो ॥ २५ ॥

## अतिथेर्ञ्यः ॥२६॥

अ० ते[५], ञ्यः[१] । तादर्थ्ये वाच्ये अतिथिशब्दाञ् ञ्य स्यात् । अतिथये इदम्-आतिथ्यम् ॥ तादर्थ्य वाच्य हो तो चतुर्थी समर्थ अतिथि शब्द से ञ्य प्रत्यय हो ॥२६॥

## [५]देवात्तल्[१] ॥२७॥

देवशब्दात् स्वार्थे तल् स्यात् । देव एव देवता॥ देवशब्द से स्वार्थमें तल् प्रत्ययहो॥

## अवेः[५] कः[१] ॥२८॥

अविशब्दात् स्वार्थे कः स्यात् । अविरेव-अविकः । अवि ( भेड ) शब्द से स्वार्थमें क प्रत्यय हो ॥ २८ ॥

## यावादिभ्यः[५] कन्[१] ॥२९॥

याव इत्येवमादिभ्यः स्वार्थे कन् स्यात् । याव एव-यावकः । मणिकः ॥ याव ( लाक्षा ) आदि शब्दों से स्वार्थ में कन् प्रत्यय हो ॥ २९ ॥

## लोहितान्मणौ ॥३०॥

लो[५] त, मणौ[७] । मणौ वर्त्तमानाल्लोहितशब्दात्स्वार्थे कन् स्यात् । लोहितोमणिः-लोहितकः ॥ मणि अर्थ वर्त्तमान लोहित शब्द से स्वार्थ में कन् प्रत्यय हो ॥ ३० ॥

## वर्णे चाऽनित्ये ॥३१॥

वर्णे[७], च अ, अ०, त्ये[७] । अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात् स्वार्थे कन् स्यात् । लोहितकः कोपेन । (लोहितालिङ्गबाधनं वा) लोहितिका । लोहिनिका कोपेन ॥ अनित्य वर्ण अर्थ में वर्त्तमान लोहित शब्द से स्वार्थ में कन् प्रत्यय हो ॥ ३१ ॥

## रक्ते ॥३२॥

लाक्षादिनारक्ते यो लोहितशब्दः तस्मात् कन् स्यात् । (लिङ्गबाधनं वेत्येव ) लोहितिका, लोहिनिका-शाटी ॥ रक्त अर्थ में वर्त्तमान लोहित शब्द से कन् प्रत्यय हो ॥३२॥

## कालाच्च ॥ ३३॥

का० त्[५], च (अ) च । कालशब्दादनित्ये वर्त्तमानाद्रक्ते च कन् स्यात् । कालकम्-मुखं वैलक्ष्येण । कालकः पटः । कालिका-शाटी ॥ अनित्य और रक्त अर्थ में वर्त्तमान काल ( काला ) शब्द से कन् प्रत्यय हो ॥ ३३ ॥

## विनयादिभ्यष्ठक् ॥३४॥

वि०भ्यः[५],ठक्[१] । विनयइत्येवमादिभ्यः स्वार्थे ठक् स्यात् । विनय एव–वैनयिकः । सामयिकः ॥ विनय आदि प्रातिपदिकों से स्वार्थ में ठक् प्रत्यय हो ॥३४॥

## वाचो ऽव्याहृतार्थायाम् ॥ ३६॥

वाचः[५], व्या० म्[७] । सन्दिष्टार्थायां वाचि वर्त्तमानाद् वाक् शब्दात्स्वार्थे ठक् स्यात् । सन्देशवाग् वाचिकं स्यात् ॥ सन्देशार्थ में वर्त्तमान वाक् शब्द से स्वार्थ में ठक् प्रत्यय हो ॥ ३५ ॥

## तद्युक्तात्कर्मणोऽण् ॥ ३६ ॥

त०त्[५], क०णः[५],अण्[१]। व्याहृतार्थया वाचा यत्कर्म युक्तं तदभिधायिनः कर्मशब्दात् स्वार्थेऽण् स्यात् । कर्म्मैव कार्मणम् । वाचिकंश्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणमित्युच्यते ॥ (अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसङ्ख्यानम् )॥ कुलालएव कौलालः । वारुडः । नैषादः । कार्मारः । चाण्डालः । मैत्रः । आमित्रः॥ सन्देशार्थ वाणीसे युक्त जो कर्म शब्द है उससे स्वार्थमें अण् प्रत्यय हो ॥३६॥

## ओषधेरजातौ ॥ ३७॥

ओ० धेः[५], अ० तौ[७] । अजातौ वर्त्तमानादोषधिशब्दात्स्वार्थेऽण् स्यात् । औषधं पिबति । औषधं ददाति । जाति अर्थ न हो तो ओषधि शब्दसे स्वार्थमें अण् प्रत्यय हो॥

## प्रज्ञादिभ्यश्च ॥ ३८ ॥

प्र० भ्यः[५], च (अ) प्रजानातीति प्रज्ञः । प्रज्ञ इत्येवमादिभ्यः स्वार्थेऽण् स्यात् प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री ॥ प्रज्ञ आदि प्रातिपदिकों से स्वार्थ में अण् प्रत्यय हो ॥ ३८ ॥

## मृदस्तिकन् ॥ ३९ ॥

मृदः[१], तिकन्[१] । मृच्छब्दात्स्वार्थे तिकन् स्यात् । मृदेव–मृत्तिका ॥ मृत् शब्द से स्वार्थ में तिकन् प्रत्यय हो ॥ ३९ ॥

## [१]सस्नौप्रशंसायाम्[७] ॥ ४० ॥

प्रशंसायां वर्त्तमानान् मृच्छब्दात् स स्न इतीमौ स्याताम् । प्रशस्ता मृद्–मृत्सा । मृत्स्ना ॥ प्रशंसा अर्थ में वर्त्तमान मृत शब्द से स्वार्थ में स और स्न प्रत्यय हो ॥४०॥

## [५]वृकज्येष्ठाभ्यांतिल्तातिलौ[१] च[अ] छन्दसि[७] ॥ ४१ ॥

स्वार्थे स्याताम् । वृकतिः । ज्येष्ठतातिः ॥ प्रशंसार्थ में वृक और ज्येष्ठ शब्द से छन्दोविषय होने पर यथाक्रम तिल् और तातिल् प्रत्यय हो ॥ ४१ ॥

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥

ब० त्[५], शस्[१],का० त्[५],अ० म् (अ) । बह्वर्थादल्पार्थाच्च कारकवाचिनः शब्दाच्छस् वा स्यात् । बहूनि ददाति बहुशो ददाति । अल्पं ददाति–अल्पशो ददाति ॥ कारक वाचक बहु अर्थ और अल्प अर्थ शब्दों से विकल्प करके शस् प्रत्यय हो ॥ ४२ ॥

## संख्यैकवचनाच्च वीप्सायाम् ॥ ४३॥

स० त्[4], वी० म्[7] । वीप्सायां द्योत्यायां सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यः एकवचनाच्च शस् वा स्यात् । द्वौ द्वौ मोदकौ ददाति–द्विशः । त्रिशः । माषं माषं ददाति–माषशः । प्रस्थशः । पादशः ॥ वीप्सा द्योत्य होतो सङ्ख्यावाचक प्रातिपदिक और एक वचन से विकल्प करके शस् प्रत्यय हो ॥ ४३ ॥

## प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥

प्र० गे[७], प० म्याः[४], तसिः[१] । प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् । अभिमन्युरर्जुनतः प्रति ॥ ( आद्यादिभ्य उपसङ्ख्यानम् ) ॥ आदौ–आदितः । मध्यतः । अन्ततः । पृष्ठतः पार्श्वतः । आकृतिगणोऽयम् । स्वरेण–स्वरतः । वर्णतः ॥ कर्मप्रवचनीय प्रति के योग में पञ्चम्यन्त प्रातिपदिक से तसि प्रत्यय हो ॥ ४४ ॥

## अपादानेचाहीयरुहोः ॥ ४५ ॥

अ० ने[७], च (अ) अ० होः । अपादाने या पञ्चमी तदन्तात् तसिः स्यात् । ग्रामादायाति–ग्रामतः ॥ हीय और रुह को छोड़ कर अपादान में जो पञ्चमी विधान की गई है, तदन्त से तसि प्रत्यय हो ॥ ४५ ॥

## अतिग्रहाव्यथनक्षेपेष्वकर्त्तरितृतीयायाः ॥ ४६॥

अ० षु[७], अ० रि[७], तृ० याः[४] । अकर्त्तरि तृतीयान्ताद् वा तसिः स्यात् । अतिक्रम्य ग्रहः—अतिग्रहः । चारित्रेण अतिगृह्यते । चारित्रतोऽतिगृह्यते । चरित्रेणान्यानतिक्रम्य वर्त्तत इत्यर्थः । अव्यथनम्–अचलनम् । वृत्तेन–नव्यथते–वृत्ततो–नव्यथते । वृत्तेन न चलतीत्यर्थः । क्षेपो निन्दा । वृत्तेन क्षिप्तः । वृत्ततः–क्षिप्तः, वृत्तेन निन्दितइत्यर्थः ॥ अति गृह, अव्यथन और क्षेप अर्थ में जो तृतीया तदन्त प्रातिपदिक से विकल्प करके तसि प्रत्यय हो यदि उक्त तृतीया कर्त्ता में न हो तो ॥ ४६ ॥

## हीयमानपापयोगाच्च ॥ ४७ ॥

ही०त्[४] । च(अ) । हीयमानपापयुक्तादकर्त्तरि तृतीयान्ताद् वा तसिः स्यात् । वृत्तेन हीयते–वृत्ततोहीयते । वृत्तेन पापः–वृत्ततः पापः ॥ हीयमान और पाप के योग में जो तृतीया तदन्त प्रातिपदिक से विकल्प करके तसि प्रत्यय हो यदि उक्त तृतीया कर्त्ता में न हो तो ॥४७॥

## षष्ठ्या[५] व्याश्रये[७] ॥ ४८॥

नानापक्षसमाश्रयो व्याश्रयः । व्याश्रये गम्ये षष्ठ्यन्ताद्वा तसिः स्यात् देवाअर्जुनतोऽभवन् । अर्जुनस्य पक्षे इत्यर्थः ॥ व्याश्रय गम्यमान हो तो षष्ठ्यन्त प्रातिपदिक से विकल्प करके तसि प्रत्यय हो ॥ ४८॥

## रोगाच्चापनयने ॥४९॥

रो०त्[५], च(अ) अ[७] ये । रोगोव्याधिः । चिकित्सायां गम्यमानायां रोगवाचिनः षष्ठ्यन्ताद्वा तसिः स्यात् । प्रवाहिकातः कुरु । प्रतीकारमस्य कुर्वित्यर्थः ॥ अपनयन ( चिकित्सा ) गम्यमान हो तो रोग वाचक षष्ठ्यन्त प्रातिपदिक से विकल्प करके तसि प्रत्यय हो ॥४९॥

## कृभ्वस्तियोगे[७] सम्पद्यकर्त्तरि[७] च्विः[१] ॥५०॥

( अभूततद्भाव इति वाच्यम् ) ॥ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद् विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे। अकृष्णः कृष्णः सम्पद्यते तं करोति कृष्णी करोति। अशुक्लः शुक्लः सम्पद्यते तं करोति—शुक्ली करोति। शुक्ली भवति। शुक्ली स्यात् 'अस्य च्वौ' इत्यवर्णस्य ईत्वम् ॥ सम्पूर्वक पद धातु के कर्त्ता अर्थ में वर्त्तमान प्रातिपदिकसे कृ, भू और अस्ति धातु के प्रयोग में च्वि प्रत्यय हो ॥५०॥

## अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्च ॥५१॥

अ० म्[६], लोपः[१], च (अ)। एषां लोपः स्यात् च्विश्च प्रत्ययः। अनरुः अरुः सम्पद्यते तं करोतिः—अरूकरोति। अरू भवति। अरू स्यात् 'च्वौच' इति दीर्घः। मनस् अनुन्मनाः-उन्मनाः सम्पद्यते तं करोति उन्मनीकरोति। उन्मनी भवति उन्मनी। स्यात्। चक्षुस्। अनुच्चक्षुः उच्चक्षुः सम्पद्यते तं करोति उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षू स्यात्। चेतस्। विचेती करोति। विचेती भवति। विचेती स्यात्। रहस्। विरही करोति। विरही भवति। विरही स्यात्। रहः विजनप्रदेशः,विशिष्टं रहः विरहः। अविरहः विरहः संपद्यते तं करोति विरहीकरोति। विरहीभवति। विरही स्यात्। रजस्। अविरजाः विरजाः सम्पद्यते तं करोति। विरजीकरोति। विरजी भवति। विरजी स्यात्। अरुस् (रक्तखदिर) मनस् (मन) चक्षुस् (नेत्र) चेतस् (चित्त) रहस् (एकान्त) और रजस् (धूली) शब्द से विकल्प करके च्वि प्रत्यय हो और उक्त शब्दों के अन्त्य का लोप भी हो ॥५१॥

## विभाषा[१] साति:[१] कार्त्स्न्ये[७] ॥ ५२॥

च्विविषये सातिर्वा स्यात् साकल्ये। कृत्स्नं शस्त्रमग्निः सम्पद्यते अग्निसाद् भवति शस्त्रम्, अग्नी भवति शस्त्रम्। उदकसाद् भवति लवणम्, उदकीभवति लवणम् ॥ कार्त्स्न्य (सर्व) गम्यमान हो तो च्व्यर्थमें विकल्प से साति प्रत्यय हो ॥ ५२॥

## अभिविधौ[७] सम्पदा[३] च[अ] ॥ ५३ ॥

अभिविधिरभिव्याप्तिः। अभिविधौ गम्ये च्विविषये सातिर्वा स्यात्। सम्पदा योगे, चात् कृ भ्वस्तिभिश्च। अग्निसात् सम्पद्यते- अग्निसाद् भवति शस्त्रम्, अग्नी भवति। जलसात् सम्पद्यते जलीभवति-लवणम् ॥ अभिविधि गम्यमान हो तो च्व्यर्थ में और सम्पदा तथा कृ, भू और अस्ति के योगमें विकल्पसे साति प्रत्यय हो ॥५३॥

## तदधीनवचने[७] ॥५४॥

सातिः स्यात् कृभ्वस्तिभिः, सम्पदा च योगे। राजसात् करोति। राजसाद् भवति। राजसात् सम्पद्यते। राजाधीनं करोतीत्यर्थः ॥ तदधीन वचन गम्यमान हो तो कृ, भू और अस्ति तथा सम्पदा के योग में साति प्रत्यय हो ॥५४॥

## देये[७] त्रा[१] च[अ] ॥५५॥

तदधीने देये त्रा स्यात् सातिश्च कृभ्वस्तियोगे। विप्राधीनं देयं करोति—विप्रत्रा करोति। विप्रत्रा भवति। विप्रत्रा स्यात्। विप्रत्रा सम्पद्यते ॥ दातव्य तदधीन वचन गम्यमान हो तो कृ भू और अस्ति के योग में त्रा और साति प्रत्यय हो ॥ ५५ ॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्॥५६॥

दे० भ्यः[४], द्वि० गोः[६], ब०म् (अ)। एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा बहुलं स्यात्। देवान् गच्छति-देवत्रा गच्छति। देवेषु वसति देवत्रा वसति मनुष्यान् गच्छति-मनुष्यत्रा गच्छति। मनुष्येषु वसति-मनुष्यत्रा वसति। पुरुषान् गच्छति-पुरुषत्रा गच्छति। पुरुषेषु गच्छति-पुरुषत्रा गच्छति। पुरून् गच्छति-पुरुत्रा गच्छति। पुरुषु वसति-पुरुत्रा वसति। मर्त्यान्, मर्त्येषु वसति-मर्त्यत्रा वसति। बहुलोक्तेरन्यत्रापि बहुत्रा जीवतो मनः॥ द्वितीयान्त और सप्तम्यन्त देव, मनुष्य, पुरुष, पुरु (बहुत) और मर्त्य (नर) प्रातिपदिकसे बहुल करके त्रा प्रत्यय हो॥५६॥

## अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौडाच्॥५७॥

अ० त्[४], द्व्य० त्[४], अ० तौ[७], डाच्[१]। द्व्यजेव अवरं न्यूनम्, नतु ततो न्यूनम्। अनेकाजिति यावत् तादृशमर्धं यस्य तस्मादव्यक्तानुकरणादनितिपराड् डाच् स्यात् कृभ्वस्ति योगे। (डाचि विवक्षिते द्वे बहुलम्)॥ नित्यमाम्रेडिते डाचीति वाच्यम्)॥ डाच् परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटा करोति। पटपटा भवति। पटपटा स्यात्॥ जिस ध्वनिमें अकारादि वर्ण पृथक् २ स्पष्ट नहीं जाने जाते उसे अव्यक्त कहते हैं। इति शब्द जिस से परे नहो और जिस के एक अर्ध भाग में दो अच् हों ऐसे अव्यक्तानुकरण प्रातिपदिक से कृ भू और अस्ति (अस्) धातु के योग में डाच् प्रत्यय हो॥५७॥

## कृञो द्वितीयतृतीयशम्बबीजात् कृषौ॥५८॥

कृञः[४], द्वि० त्[४], कृषौ[७]। कर्षणेऽर्थे द्वितीयादिभ्यो डाच् स्यात् कृञ एवयोगे। द्वितीयम्, तृतीयम्—कर्षणं करोति-द्वितीया करोति, तृतीयाकरोति। शम्बशब्दः प्रतिलोमे। अति लोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति-शंबा करोति। बीजेन सह कर्षति-बीजा करोति॥ कृषि (खेती) अभिधेय होतो कृञ्के ही योग में द्वितीय, तृतीय औरशम्ब (ति छा) और बीज शब्दसे डाच् प्रत्यय हो॥५८॥

## सङ्ख्यायाश्चगुणान्तायाः॥५९॥

स०याः[४], च(अ), गु०याः[४]। कृषौ कृञो योगे डाच् स्यात्। द्विगुणं विलेखनं करोति क्षेत्रस्य, द्विगुणाकरोति क्षेत्रम्॥ कृषि अभिधेय हो तो गुणशब्दान्त सङ्ख्यावाचक प्रातिपदिक से कृञ् के योग में डाच् प्रत्यय हो॥५९॥

## समयाच्च यापनायाम्॥६०॥

स०त्[४], च(अ), या०म्[७]। कृञो योगे डाच् स्यात्। समया करोति। कालं यापयतीत्यर्थः॥ यापना (निरर्थक खोना, गम्यमान होतो कृञ् योग में समय प्रातिपदिक से डाच् प्रत्यय हो॥६०॥

## सपत्रनिष्पत्रादतिव्यथने॥६१॥

स०त्[४], अ०ने[७]। आभ्यामतिव्यथने डाच् स्यात् कृञो योगे। सपत्रा करोति मृगं व्याधः। सपत्रं शरमस्यशरीरे प्रवेशयतीत्यर्थः। निष्पत्रा करोति। शरीराच्छरमपरपार्श्वे निष्कासयतीत्यर्थः॥ अतिव्यथन (अतिपीडन) गम्यमान होतो कृञ् के योग में सपत्र और निष्पत्र शब्द से डाच् प्रत्यय हो॥६१॥

## निष्कुलान्निष्कोषणे ॥ ६२ ॥

नि०त्[५], नि०णे[७] । निष्कोषणम्-अन्तरवयवानां बहिर्निष्कासनम् । निष्कुला करोति दाडिमम् । निष्कुष्णातीत्यर्थः ॥ निष्कोषण ( भीतर के अवयवों को बाहर निकालना ) अर्थ में वर्त्तमान निष्कुल शब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६२ ॥

## सुखप्रियादानुलोम्ये ॥६३॥

सु०त्[५], आ०म्ये[७] । आभ्यामानुलोम्ये वर्त्तमानाभ्यां कृञोयोगे डाच् स्यात् । सुखा करोति, प्रियाकरोति गुरुम् । अनुकूलाचरणेनाऽऽनन्दयतीत्यर्थः ॥ आनुलोम्य अनुकूलता अर्थ में वर्त्तमान सुख और प्रिय शब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६३ ॥

## दुःखात्[५] प्रातिलोम्ये ॥ ६४ ॥

प्रातिलोम्ये दुःखशब्दाड् डाच् स्यात् कृञोयोगे । प्रातिलोम्यम् प्रतिकूलत्वम् । दुःखा करोति भृत्यः । स्वामिनं पीडयतीत्यर्थः ॥ प्रातिलोम्य गम्यमान होतो दुःखशब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६४ ॥

## शूलात्[५] पाके[७] ॥ ६५॥

शूलशब्दात् पाकविषये डाच् स्यात् कृञोयोगे । शूलाकरोति-मांसम् । शूलेन पचतीत्यर्थः ॥ पाक गम्यमान होतो शूल शब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६५ ॥

## सत्यादशपथे ॥ ६६ ॥

स०त्[५], अ०थे[७] । अशपथे सत्यशब्दाड् डाच् स्यात् कृञो योगे । सत्या करोति भाण्डं वणिक् । मयैतत् क्रेतव्यमिति तथ्यं करोति ॥ अशपथ अर्थ में वर्त्तमान सत्य शब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६६ ॥

## मद्रात्[५] परिवापणे[७] ॥ ६७ ॥

मद्रशब्दात् परिवापणे डाच् स्यात् कृञो योगे । मङ्गलशब्दः मङ्गलार्थः । परिवापणम्-मुण्डनम् । मङ्गलं मुण्डनं करोति-मद्रा करोति । ( भद्राच्चेति-वाच्यम् ) । भद्रा करोति । अर्थः प्राग्वत् ॥ परिवापण अर्थ में वर्त्तमान मद्र शब्द से कृञ् के योग में डाच् प्रत्यय हो ॥ ६७ ॥

## समासान्ताः[१] ॥ ६८ ॥

अधिकारोऽयमापादपरिसमाप्तेः ॥ इस पाद की समाप्ति तक समासान्त प्रत्ययों का अधिकार है ॥ ६८ ॥

## न[अ] पूजनात्[५] ॥ ६९ ॥

पूजनार्थात् परेभ्यः समासान्ताः न स्युः । सुशोभनो राजा सुराजा । अतिराजा पूज्यो राजेति ॥ पूजनवाचक शब्दों से परे समासान्त प्रत्यय न हों ॥ यह नियम सु, अति के लिये है ॥ ६९ ॥

## किमः[५] क्षेपे[७] ॥ ७० ॥

क्षेपे यः किं शब्दस्तस्मात् परं यत् तदन्तात् समासान्ता न स्युः । कुत्सितो-राजा किंराजा । किंसखा योऽभिद्रुह्यति । किं गौर्यो न वहति 'किमः क्षेपे'—इति समासः ॥

क्षेप (निन्दा) अर्थमें जो किं शब्द उससे परे जो शब्द तिससे समासान्त प्रत्यय नहीं ॥

## नञस्तत्पुरुषात् ॥७१॥

नञः[५], त०त्[५] । समासान्तो न स्यात् । अराजा । असखा ॥ नञ् तत्पुरुष से परे समासान्त प्रत्यय न हो ॥ ७१ ॥

## पथो विभाषा ॥ ७२ ॥

पथः[१], वि०षा[१] । नञ् पूर्वात् पथो वा समासान्तः स्यात् । अपथम् । अपन्थाः । 'ऋक् पूः'-इत्यप्रत्यये सति । 'नस्तद्धिते'-इति टिलोपः 'पथः संख्याव्ययादेः'-इति नपुंसकत्वम् ॥ नञ् से परे जो पथिन् शब्द तदन्त तत्पुरुषसे समासान्त प्रत्यय विकल्पसे हो ॥

## बहुव्रीहौ सङ्ख्येये डजबहुगणात् ॥ ७३ ॥

ब०ह्रौ[७], स०ये[७], डच्[१], अ०त्(अ) । सङ्ख्येये यो बहुव्रीहिस्ततः डच् स्यात् । उपदशाः । उपविंशाः । द्वित्राः । पञ्चषाः ॥ (संख्यायास्तत्पुरुषस्य वाच्यः) ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि-वर्षाणि चैत्रस्य । निर्गतास्त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः खड्गः ॥ बहुगणको छोड़कर संख्येयमें जो बहुव्रीहि तदन्त शब्दसे समासान्त डच् प्रत्यय हो ॥

## ऋक्पूरब्धूः पथामानक्षे ॥७४॥

ऋ०म्[१], अ[१], अ०क्षे[७]। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात्, अक्षेया धूस्तदन्तस्य तु न । अर्द्धर्चः । धर्मस्य पूः-धर्म्मपुरम् । द्वीपम् । 'द्व्यन्तरुपसर्गे भ्योऽप ईत्' इत्यपस्य ईपम 'आदेः परस्य' । राजधुरा । जलपथः ॥ अक्षवर्जित ऋक्, पुर्, अप्, धुर् और पथिन् शब्दान्त समास से अ प्रत्यय हो ॥ ७४ ॥

## अच् प्रत्यन्ववपूर्वात्सामलोम्नः ॥७५॥

अच्[१], प्र०त्[५], सा०म्नः[५] । इदं पूर्वात् सामलोमान्तात् समासादच् स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥ (कृष्णोदक्पाण्डुसङ्ख्यापूर्वाया भूमेरजिष्यते) ॥ कृष्णभूमः । उदक्भूमः । पाण्डुभूमः । द्विभूमः-प्रासादः ॥ (सङ्ख्याया नदी गोदावरीभ्यां च) ॥ पञ्चनदम् । सप्तगोदावरम् ॥ प्रति, अनु और अवपूर्वक साम और लोम शब्दान्त समास से अच् प्रत्यय हो ॥ ७५ ॥

## अक्ष्णोऽदर्शनात् ॥७६॥

अक्ष्णः[५], अ० त्[५] । अदर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् स्यात् । गवामक्षीव-गवाक्षः ॥ दर्शन से भिन्न अर्थ में जो अक्षि (आंख) शब्द तदन्त प्रातिपदिक से अच् प्रत्यय हो ॥ ७६ ॥

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाऽक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाऽहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः[१] ॥ ७७॥

इमे पञ्चविंशतिः अजन्ता निपात्यन्ते । आद्यस्त्रयो बहुव्रीहयः । अविद्यमानानि

चत्वारि यस्य-असावचतुरः । विगतानि चत्वारि यस्य स विचतुरः । शोभनानि चत्वारि यस्य-असौ सुचतुरः । एकादश द्वन्द्वाः । स्त्रीच पुमांश्च-स्त्रीपुंसौ । धेनुश्चाऽनड्वांश्च-धेन्वनडुहौ । ऋक् च सामच-ऋक्सामे । वाक् च मनश्च-वाङ्मनसे अक्षि च भ्रुवौ च-अक्षिभ्रुवम् । दाराश्च गावश्च-दारगवम् । ऊरू च अष्ठीवन्तौ च-ऊर्वष्ठीवम् । पादौ च अष्ठीवन्तौ च-पदष्ठीवम् । नक्तं च दिवा च-नक्तंदिवम् । रात्रौ च दिवा च -रात्रिन्दिवम् । अहनि च दिवा च -अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयः निश्श्रेयसम् । पुरुषस्यायुः-पुरुषायुषम् । द्वे आयुषी समाहृते—द्व्यायुषम् । त्र्यायुषम् । ऋक्च यजुश्च-ऋग्यजुषम् । उत्तरशब्दान्तास्त्रयः कर्मधारयः । जातोक्षः । जातश्चासावुक्षा महोक्षः । वृद्धोक्षः । शुनः समीपम् उपशुनम, टिलोपाभावः, सम्प्रसारणश्च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ॥ ( उपुपाभ्यां चतुरोजिष्यते ) । त्रिचतुराः, चतुर्णां समीपे उपचतुराः ॥ अचतुर, विचतुर, सुचतुर, स्त्रीपुंस ( स्त्री पुरुष ) धेन्वनडुह ( गाय बैल ) ऋक्, साम, वाङ्मनस ( मनवाणी ) अक्षिभ्रुव ( आंख भौंह ) दारगव ( स्त्री गौ ) ऊर्वष्ठीव ( जानु जङ्घा ) पदष्ठीव ( पैर और जानु ) नक्तंदिव ( रात्रिदिन ) रात्रिंदिव, अहर्दिव ( दिन २ में ) सरजस ( सर्व ) निश्श्रेयस, पुरुषायुष, द्व्यायुष, त्र्यायुष, ऋग्यजुष, जातोक्ष, ( युवा साँढ ) महोक्ष ( बड़ा बैल ) वृद्धोक्ष ( बूढ़ा बैल ) उपशुन और गोष्ठश्व शब्द समास में अच् प्रत्ययान्त निपातित हैं ॥७७॥

## ब्रह्महस्तिभ्यां[५] वर्च्चसः[५] ॥ ७८ ॥

आभ्यां परो यो वर्चशब्दस्तदन्तात्समासादच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् । ( पल्यराजभ्यां चेति वाच्यम् ) ॥ पल्यवर्चसम् । राजवर्चसम् ॥ ब्रह्म और हस्ति शब्द से परे जो वर्चस् शब्द तदन्त से समासान्त अच् प्रत्यय हो ॥७८॥

## अवसमन्धेभ्यस्तमसः ॥७९॥

अ० भ्यः[५], तमसः[५] । अव सम् अन्ध इत्येभ्यो यः परस्तमश्शब्दस्तदन्तात्समासादच् स्यात् । अवतमसम् । सन्तमसम् । अन्धतमसम् । महत्तम इत्यर्थः ॥ अव, सम् और अन्ध शब्द से परे जो तमस् शब्द तदन्त से समासान्त अच् प्रत्यय हो ॥७९॥

## श्वसोवसीयः श्रेयसः ॥ ८० ॥

श्वसः[५], व० सः[५] । श्वसः परौ यौ वसीयःश्रेयःशब्दौ तदन्तात्समासादच् स्यात् श्वोवसीयसम्, श्वश्रेयसं ते भूयात् ॥ श्वस् से परे जो वसीयस् और श्रेयस् शब्द तदन्त समास से अच् प्रत्यय हो ॥८०॥

## अन्ववतप्ताद्रहसः ॥८१॥

अ० त्[५], र० सः[५] । अनु अव तप्त इत्येभ्यः परो यो रहश्शब्दस्तदन्तात् समासादच् स्यात् । अनुरहसम् । अवरहसम् । तप्तरहसम ॥ अनु, अव और तप्त शब्द से परे जो रहस ( एकान्त ) शब्द तदन्त समास से अच् प्रत्यय हो ॥८१॥

## प्रतेरुरसः सप्तमीस्थात् ॥८२॥

प्रतेः[५], उरसः[५], स० त्[५] । सप्तम्यर्थे वर्त्तमानात् प्रतेः परे य उरः शब्दस्तदन्तात्समासादच् स्यात । उरसि प्रति—प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ॥ प्रति उपसर्ग

परे जो सप्तमीस्थ उरस् शब्द तदन्त समास से अच् प्रत्यय हो ॥८२॥

## अनुगवमायामे ॥८३॥

अ० मू[१], आ० मे[७]। दीर्घत्वेऽनुगवमिदं निपात्यते। अनुगवं यानम्॥ (यस्य चायामः) इति समासः॥ दीर्घता वाच्य हो तो अनुगव यह शब्द अच् प्रत्ययान्त निपातित है॥ ८३॥

## द्विस्तावा[१] त्रिस्तावा[१] वेदिः[१] ॥८४॥

अच् प्रत्ययष्टिलोपः समासश्च निपात्यते। यावती प्रकृतौ वेदिः ततोद्विगुणा, त्रिगुणा वा—अश्वमेधादौ। तत्रेदं निपातनम्। वेदिवाचक द्विस्तावा और त्रिस्तावा शब्द अच् प्रत्ययान्त निपातित हैं॥८४॥

## उपसर्गादध्वनः ॥८५॥

उ० तू[५], अ०नः[५]। उपसर्गात् परोयोऽध्वन् शब्दस्तदन्तात्समासादच् स्यात्। प्रगतोऽध्वानम्—प्राध्वोरथः। प्राध्वम्—शकटम्॥ उपसर्ग से परे जो अध्वन् (मार्ग) शब्द तदन्त से समासान्त अच् प्रत्यय हो॥८५॥

## तत्पुरुषस्यांगुलेः सङ्ख्याऽव्ययादेः ॥८६॥

त० स्य[६], अ० लेः[५], स० देः[५]। सङ्ख्याव्ययादेः अङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अंगुली प्रमाणमस्य द्व्याङ्गुलं दारु। निर्गतमङ्गुलिभ्यः—निरङ्गुलम्॥ सङ्ख्यादि तथा अव्ययादि अंगुलि शब्दान्त तत्पुरुष से समासान्त अच् प्रत्यय हो॥ ८६॥

## अहस्सर्वैकदेशसङ्ख्यातपुण्याच्चरात्रेः ॥८७॥

अ० तू[५], च (अ) रात्रेः[५]। एभ्यो रात्रेरच् स्यात्, चात् संख्याऽव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥ अहश्च रात्रिश्च—अहोरात्रः। सर्वा रात्रिः—सर्वरात्रः। पूर्वं रात्रेः। पूर्वरात्रः। संख्याता रात्रिः—संख्यातरात्रः। पुण्या रात्रिः—पुण्यरात्रः। द्वयो रात्र्योः—समाहारः—द्विरात्रः। अतिक्रान्तो रात्रिम्—अतिरात्रः। 'यस्येति च' इतीकारलोपः। 'रात्राह्नाहाः पुंसि च' इति पुंस्त्वम्॥ अहः (दिन) सर्व एकदेश संख्यात पुण्य शब्द से संख्यादि तथा अव्ययादि से परे रात्रि शब्दान्त तत्पुरुष से अच् प्रत्यय हो॥८७॥

## अह्नोह्न एतेभ्यः ॥८८॥

अह्नः[६], अह्नः[१], एतेभ्यः[५]। सर्वादिभ्यः परस्याहन्शब्दस्याऽह्नादेशः स्यात्समासान्ते परे। द्वयोरह्नोर्भवः—द्व्यह्नः। त्र्यह्नः। अहरतिक्रान्तः—अत्यह्नः। सर्वाह्नः। पूर्वाह्णः। अपराह्णः॥ समासान्त अच् प्रत्यय परे हो तो सर्वादि शब्दों से परे अहन् शब्द को अह्न आदेश हो॥ ८८॥

## न[अ] सङ्ख्यादेः[६] समाहारे[७] ॥८९॥

समाहारे वर्त्तमानस्याह्नः शब्दस्य सङ्ख्यादेरह्नादेशो न स्यात्। द्वयोरह्नोः समाहारः-द्व्यहः। त्र्यहः॥ समाहार अर्थ में वर्त्तमान संख्यादि तत्पुरुष के अहन् शब्द को अह्न आदेश न हो॥ ८९॥

## उत्तमैकाभ्यां[५] च[अ] ॥९०॥

आभ्यामह्नादेशो न स्यात्। पुण्याहः। एकाहः॥ उत्तम (पवित्र) और एक शब्द से परे अहन् शब्द को अह्न आदेश न हो॥ ९०॥

## राजाहस्सखिभ्यष्टच् ॥९१॥

रा० भ्यः[५], टच्[१]। इदमन्तात्तत्पुरुषाट्टच् स्यात्। महाराजः। परमाहः। राज्ञः सखा—राजसखः॥ राजन् अहन् और सखिशब्दान्त प्रातिपदिक से टच् प्रत्यय हो॥

## गोरतद्धितलुकि ॥९२॥

गोः[५], अ० कि[७]। गोशब्दान्तात् तत्पुरुषाट्टच् स्यात्समासान्तो न तद्धितलुकि। पञ्चगवधनः॥ तद्धितलुक्विषयक समासवर्जित गोशब्दान्त तत्पुरुष से टच् प्रत्यय हो॥

## अग्राख्यायामुरसः ॥९३॥

अ० म्[७], उ० सः[५]। अग्राख्यायामुरः शब्दान्तात्तत्पुरुषाट्टच् स्यात्। अग्रम्—प्रधानम्। अश्वानामुर इव—अश्वोरसम्। मुख्योऽश्व इत्यर्थः॥ अग्राख्या में वर्त्तमान उरस् शब्दान्त तत्पुरुष से टच् प्रत्यय हो॥ ९३॥

## अनोऽश्मायस्सरसां जातिसञ्ज्ञयोः ॥९४॥

अ० म्[६], जा० योः[७]। अनस्, अश्मन् अयस् सरस् इत्येवमन्तात्तत्पुरुषाट्टच् स्यात्, जातौ, सञ्ज्ञायां च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसम्। इति जातिः। महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसम्। इति सञ्ज्ञा। अमृतः अश्मेति विग्रहः॥ जाति और सञ्ज्ञाविषय में अनस् (शकट) अश्मन् (पत्थर) अयस् (लोहा) और सरस् (तालाब) शब्दान्त तत्पुरुष से टच् प्रत्यय हो॥ ९४॥

## ग्रामकौटाभ्यां[५] च[अ] तक्ष्णः[५] ॥९५॥

ग्रामकौटाभ्यां परो यस्तक्षन् शब्दस्तदन्तात्तत्पुरुषाट्टच् स्यात्। ग्रामस्य तक्षा—ग्रामतक्षः। बहूनां साधारण इत्यर्थः। कुट्यां भवः कौटः—स्वतन्त्रः। स चासौ तक्षाच—कौटतक्षः। स्वतन्त्र कर्मजीवी न कस्यचित् प्रतिबद्ध इत्यर्थः॥ ग्राम और कौट से परे तक्षन् (बढ़ई) शब्दान्त तत्पुरुष से टच् प्रत्यय हो॥९५॥

## अतेः[५] शुनः[५] ॥९६॥

अतिशब्दात्परो यः श्वन् शब्दस्तदन्ताच्चत्पुरुषात् टच् स्यात्। अतिक्रान्तः श्वानम्—अतिश्वोवराहः। जववानित्यर्थः। अतिश्वः सेवकः। सुष्ठुस्वामिभक्त इत्यर्थः। अतिश्वी सेवा। अतिनीचेत्यर्थः॥ अति शब्द से परे जो श्वन् शब्द तदन्त तत्पुरुष से टच् प्रत्यय हो॥ ९६॥

## उपमानादप्राणिषु ॥९८॥

उ०त्[५], अ०षु[७]। अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात्। आकर्षः श्वेव—आकर्षश्वः॥ अप्राणी में वर्त्तमान जो उपमान वाचक श्वन् शब्द तदन्त तत्पुरुष से समासान्त टच् प्रत्यय हो॥ ९७॥

## उत्तरमृगपूर्वाच्च सक्थ्नः ॥९८॥

उ०त्[५], च(अ), सक्थ्नः[५]। उत्तर मृग पूर्व इत्येभ्यः परो यः सक्थिशब्दश्चादुपमा-

नाश्च तदन्तात् तत्पुरुषाट्टच् स्यात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि-फलकसक्थम् ॥ उत्तर मृग पूर्व और उपमानवाचकसे परे जो सक्थिन् ( ऊरु ) शब्द तदन्त तत्पुरुष से परे टच् प्रत्यय हो ॥ ९८ ॥

## नावोद्विगोः ॥९९॥

नावः[५], द्विगोः[५] । नौशब्दान्तात् द्विगोष्टच् स्यात् । द्वाभ्यां नौभ्यामागतम्-द्विनावरूप्यम् । द्विनावमयम् ॥ नौ ( नाव ) शब्दान्त द्विगु से समासान्त टच् प्रत्यय हो ॥९९॥

## अर्द्धाच्च ॥१००॥

अर्द्धात्[५], च(अ) । अर्द्धान्तावष्टच् स्यात् । नावोऽर्धम् अर्धनावम् क्लीबत्वं लोकतः ॥ अर्द्ध शब्द से परे जो नौ शब्द तदन्त तत्पुरुष से समासान्त टच् प्रत्यय हो ॥ १०० ॥

## खार्याः[५] प्राचाम्[७] ॥१०१॥

द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम् । द्विखारि । अर्द्धखारम् । अर्धखारि । द्वयोः खार्योः समाहार इति विग्रहे द्विगुः । टच् 'यस्येति च' 'स नपुंसकम्' इति नपुंसकत्वम् टजभावपक्षे 'स नपुंसकम्' 'ह्रस्वोनपुंसके प्रातिपदिकस्य' ॥ प्राग्देशियों के मत में अर्ध तथा द्विगुसंज्ञक खारी शब्दान्त से परे समासान्त टच् प्रत्यय हो ॥१०१॥

## द्वित्रिभ्यामञ्जलेः ॥१०२॥

द्वि०म्[५], अञ्जलेः[५] । द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् । द्वावञ्जली समाहृतौ-द्व्यञ्जलम् । त्र्यञ्जलम् ॥ द्वि और त्रिशब्द से परे जो अञ्जलि शब्द तदन्त तत्पुरुष से समासान्त टच् प्रत्यय हो ॥ १०२ ॥

## अनसन्तान्नपुंसकाच्छन्दसि ॥१०३॥

अ०त्[५],न०त्[५], छन्दसि[७] । अन्नन्तादसन्ताच्च नपुंसकात्तत्पुरुषाच्छन्दसि टच् स्यात् । ब्रह्मसामं भवति । देवच्छन्दसानि ॥ छन्द विषय में अन्नन्त और असन्त नपुंसकलिङ्ग तत्पुरुष से टच् प्रत्यय हो ॥ १०३ ॥

## ब्रह्मणोजानपदाख्यायाम् ॥१०४॥

ब्रह्मणः[५], जा०म्[७] । ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात् समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा-सुराष्ट्रब्रह्मः ॥ जनपद की आख्या गम्यमान हो तो ब्रह्मन् शब्दान्त तत्पुरुष से समासान्त टच् प्रत्यय हो ॥ १०४ ॥

## कुमहद्भ्यामन्यतरस्याम् ॥१०५॥

कु०म्[५], अ०म्(अ) । तत्पुरुषे समासे आभ्यां ब्रह्मणो वा टच् स्यात् । कुत्सितो-ब्रह्मा-कुब्रह्मः । महाब्रह्मः । ब्राह्मणवाचको ब्रह्मन्शब्दः ॥ कु और महत् शब्द से परे जो ब्रह्मन् शब्द तदन्त तत्पुरुष से समासान्त टच् प्रत्यय विकल्प से हो ॥ १०५ ॥

## द्वन्द्वाच्चुदषहान्तात् समाहारे ॥ १०६ ॥

द्व० त्[५], चु० त्[५], स०[७] रे । समाहारे चवर्गान्ताद् दषहान्ताच्च द्वन्द्वाट् टच् स्यात् । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् ।

छत्रोपानहम् ॥ समाहार में चवर्गान्त, दकारान्त, षकारान्त और हकारान्त द्वन्द्व से समासान्त टच् प्रत्यय हो ॥ १०६ ॥

## अव्ययीभावे[७] शरत्प्रभृतिभ्यः[५] ॥ १०७ ॥

अव्ययीभावे शरदादिभ्यष्टच् स्यात्समासान्तः। शरदः समीपम्-उपशरदम्। प्रतिशरदम्। उपविपाशम्। प्रतिविपाशम् ॥ अव्ययीभाव समास में शरत् आदि प्रातिपदिकों से समासान्त टच् प्रत्यय हो ॥ १०७ ॥

## अनश्च ॥ १०८ ॥

अनः[५], च (अ)। अन्नन्तादव्ययीभावाट्टच् स्यात् समासान्तः। उपराजम्। अध्यात्मम्। प्रत्यात्मम् ॥ अन्नन्त अव्ययीभाव से समासान्त टच् प्रत्यय हो ॥ १०८ ॥

## नपुंसकादन्यतरस्याम् ॥ १०९ ॥

न० त्[५], अ० म् (अ)। अन्नन्तं यत् क्लीबं तदन्तादव्ययीभाव टज्वा स्यात्। उपचर्मम्। उपचर्म ॥ अन्नन्त नपुंसक अव्ययीभाव से विकल्प करके समासान्त टच् प्रत्यय हो ॥ १०९ ॥

## नदीपौर्णमास्याग्रहायणीभ्यः ॥ ११० ॥

एभ्यो वा टच् स्यात्। नद्याः समीपम्-उपनदम्। उपनदि। उपपौर्णमासम्। उपपौर्णमासि। उपाग्रहायणम्। उपाग्रहायणि ॥ नदी, पौर्णमासी और आग्रहायणी (मार्गशीर्ष की पूर्णिमा) शब्दान्त अव्ययीभाव से समासान्त विकल्पसे टच् प्रत्यय हो ॥

## झयः[५] ॥ १११ ॥

झयन्तादव्ययीभावाट् टच् वा स्यात्। उपसमिधम्। उपसमित्। झयन्त अव्ययीभाव से विकल्प करके समासान्त टच् प्रत्यय हो ॥ १११ ॥

## गिरेश्च सेनकस्य ॥ ११२ ॥

गिरेः[५], च (अ), से० स्य[६]। गिर्यन्तादव्ययीभावाट्टज्वा स्यात्। सेनकग्रहणं पूजार्थम्। गिरेः समीपमुपगिरम्। उपगिरि। अव्ययादाप्सुपः ॥ सेनकजी के मत में गिरि शब्दान्त अव्ययीभाव से समासान्त टच् प्रत्यय हो ॥ ११२ ॥

## [७]बहुव्रीहौ सक्थ्यक्ष्णोः[६] [५]स्वाङ्गात् षच्[१] ॥ ११३ ॥

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच् स्यात्। दीर्घे सक्थिनी यस्य-असौ दीर्घसक्थः। विशाले अक्षिणी यस्य सः विशालाक्षः। 'नस्तद्धिते' इति टिलोपः। 'षः प्रत्ययस्य' ॥ स्वाङ्ग वाचक सक्थि (ऊरु) और अक्षि शब्दान्त बहुव्रीहि समास से षच् प्रत्यय हो ॥ ११३ ॥

## अङ्गुलेर्दारुणि ॥ ११४ ॥

अ० लेः[५], दारुणि[७]। दार्वर्थेऽङ्गुल्यन्ताद् बहुव्रीहेः षच् स्यात्। पञ्चाङ्गुलयो यस्य तत् पञ्चाङ्गुलं दारु-अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते ॥ दारु अर्थ में अङ्गुलि शब्दान्त बहुव्रीहि से समासान्त षच् प्रत्यय हो ॥ ११४ ॥

## द्वित्रिभ्यां[५] षः[१] मूर्ध्नः[५] ॥ ११५ ॥

बहुव्रीहावाभ्यां मूर्ध्नः षः स्यात् । द्विमूर्द्धः । त्रिमूर्धः ॥ द्वि और त्रि शब्द से परे जो मूर्द्धन ( मस्तक ) तदन्त बहुव्रीहि से समासान्त ष प्रत्यय हो ॥ ११५ ॥

## [१]अप्पूरणीप्रमाण्योः[६] ॥ ११६ ॥

पूरणार्थप्रत्यान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः-कल्याणी पञ्चमा-रात्रयः । स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः । बहुव्रीहौसमासे पञ्चमी शब्दे पूरणार्थं प्रत्ययान्ते परे कल्याणी शब्दस्य पुंस्त्वनिषेधः, अप्समासान्तस्तद्धितः, टाप् 'यस्येति च' इतीकारलोपः ॥ पूरणप्रत्ययान्त और प्रमाण्यन्त बहुव्रीहि से समासान्त अप् प्रत्यय हो ॥ ११६ ॥

## अन्तर्बहिर्भ्यां[५] च[अ] लोम्नः[५] ॥ ११७ ॥

बहुव्रीहावाभ्यां लोम्नोऽप् स्यात् । अन्तर्गतानि लोमान्यस्याऽन्तर्लोमः प्रावारः । बहिर्लोमः पटः ॥ बहुव्रीहि समास में अन्तर् ( भीतर ) और बहिस् शब्द से परे जो लोमन् उससे समासान्त अप् प्रत्यय हो ॥ ११७ ॥

## अञ् नासिकायाः सञ्ज्ञायां नसं चाऽस्थूलात् ॥ ११८ ॥

अच्[१], ना० याः[५], स० म्[७], नसम्[१], च (अ) अ० त्[५] । नासिकान्ताद् बहुव्रीहेरच् स्यात् । नासिकाशब्दश्च नसमापद्यते, न तु स्थूलपूर्वात् । द्रुरिव नासिका यस्य स द्रुणसः खरणसः ॥ ( खुरखराभ्यां नस् वक्तव्यः ) ॥ खुरणाः । खरणाः । पक्षे-( अजपीष्यते ) ॥ खुरणसः । 'पूर्वपदात्संज्ञायामगः' इति नस्य णत्वम् ॥ स्थूल शब्द से परे न हो तो संज्ञागम्यमान होने पर नासिका शब्दान्त बहुव्रीहि से समासान्त अच् प्रत्यय और नासिका शब्द को नस आदेश हो ॥ ११८ ॥

## उपसर्गाच्च ॥ ११९ ॥

उ० त्[५], च (अ) । उपसर्गात् परो यो नासिकाशब्दस्तदन्ताद् बहुव्रीहेरच् स्यात् । नासिकाया नसादेशश्च । असंज्ञार्थमिदं वचः । उन्नता नासिका यस्याऽसावुन्नसः ॥ ( वेर्ग्रोवक्तव्यः ) ॥ विगता नासिका, यस्य-विग्रः ॥ उपसर्ग से परे नासिका तदन्त बहुव्रीहि से समासान्त अच् प्रत्यय और नासिका शब्द को नस आदेश हो ॥ ११९ ॥

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाऽजपदप्रोष्ठपदाः ॥१२०॥

इमे बहुव्रीहयोऽच् प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य-सुप्रातः 'अव्ययानां भमात्रे टिलोपः' शोभनं श्वोऽस्य-सुश्वः । शोभनं दिवा यस्य-सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य-चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजस्येव पादावस्य-अजपदः । प्रोष्ठो गौः तस्येव पादावस्य-प्रोष्ठपदः ॥ बहुव्रीहि समास में सुप्रात, सुश्व, सुदिव, शारिकुक्ष, चतुरश्र, एणीपद, अजपद और प्रोष्ठपद अच् प्रत्ययान्त निपातित हैं ॥ १२० ॥

## नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ १२१ ॥

न० भ्यः[५], ह० थ्योः[६], अ० म (अ) । नञ् दुस् सु इत्येभ्यः परौ यौ हलि सक्थिशब्दौ तदन्ताद् बहुव्रीहेर्वाच् स्यात् । अविद्यमानो हलिरस्य-अहलः 'यस्येति च' । अहलिः । दुर्हलः । दुर्हलिः । सुहलः । सुहलिः । अविद्यमानं सक्थि यस्य-असक्थः ।

असक्थिः । दुःसक्थः । दुःसक्थिः । सुःसक्थः ।सुसक्थिः। हलिशक्त्योरिनि पाठान्तरम् । अशक्तः । अशक्तिः ॥ नञ्, दुस् और सु से परे जो हलि (हल) और सक्थि शब्द तदन्त बहुव्रीहि से विकल्प से अच् प्रत्यय हो ॥ १२१ ॥

## नित्यमसिच् प्रजामेधयोः ॥ १२२ ॥

नि०म्[२], असिच्, प्र०योः[७] । नञ् दुस् सु इत्येभ्यः परौ यौ प्रजामेधशब्दौ तदन्ताद् बहुव्रीहेर्नित्यमसिच् स्यात् । अविद्यमाना प्रजा यस्यासौ अप्रजाः । दुर्गता प्रजा यस्य-दुष्प्रजाः । शोभना प्रजा यस्य सुप्रजाः । अविद्यमाना मेधा यस्य स अमेधाः । दुर्मेधः । सुमेधाः ॥ नञ् दुस् और सु से परे प्रजा और मेधा शब्दान्त बहुव्रीहि से समासान्त नित्य असिच् प्रत्यय हो ॥ १२२ ॥

## [१]बहुप्रजाश्छन्दसि[७] ॥ १२३ ॥

बहुप्रजा इति छन्दसि निपात्यते । बहुप्रजा निर्ऋतिमाविवेश ॥ बहुप्रजा शब्द छन्द विषय में असिच् प्रत्ययान्त निपातित है ॥ १२३ ॥

## धर्म्मादनिच् केवलात् ॥ १२४ ॥

ध० त्[५], अनिच्[१], के० त्[५] । केवलात् पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद् बहुव्रीहेरनिच् स्यात् । कल्याणो धर्म्मो यस्यासौ—कल्याणधर्म्मा । प्रियधर्मा । 'यस्येति च' इत्यकारलोपः । 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति नान्तोपधादीर्घः 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः ॥ केवल (एक) पूर्वपद से ही परे जो धर्म शब्द तदन्त बहुव्रीहि से समासान्त अनिच् प्रत्यय हो ॥ १२४ ॥

## जम्भा[१] सुहरिततृणसोमेभ्यः[५] ॥ १२५॥

जम्भेति कृतसमासान्तं निपात्यते । जम्भो भक्ष्ये दन्ते च । शोभनो जम्भो यस्यासौ-सुजम्भा । हरितजम्भा । तृणं भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा-तृणजम्भा । सोमशब्दः स इव शुभ्रा जम्भाः दन्ता यस्य सोमजम्भा ॥ सु, हरित, तृण और सोम शब्द से परे जम्भा शब्द कृत समासान्त निपातित है ॥१२५॥

## [१]दक्षिणेर्मा लुब्धयोगे[७] ॥१२६

लुब्धयोगे बहुव्रीहौ समासे दक्षिणेर्मेति कृतसमासान्तो निपात्यते । लुब्धो व्याधः । दक्षिणे ईर्मं यस्य दक्षिणेर्मा मृगः । ईर्मं व्रणमुच्यते । व्याधेन कृतव्रण इत्यर्थः ॥ कृतसमासान्त दक्षिणेर्मा यह लुब्ध योग तथा बहुव्रीहि समास में निपातित है ॥ १२६ ॥

## इच्[१] कर्म्मव्यतिहारे[७] ॥१२७॥

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात् समासान्तः । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्—केशाकेशि । दण्डादण्डि । मुसलामुसलि ॥ कर्म्मव्यतिहार में जो बहुव्रीहि तदन्तसे समासान्त इच् प्रत्यय हो ॥१२७॥

## द्विदण्ड्यादिभ्यश्च ॥ १२८ ॥

द्वि० भ्यः[५], च(अ) । द्विदण्डयादयः शब्दा इच्प्रत्ययान्ता निपात्यन्ते । तादर्थ्ये चतुर्थ्येषा द्वौ दण्डौ यस्मिन् प्रहरणे तद्–द्विदण्डि-प्रहरणम् । द्विमुसलि ॥ द्विदण्ड आदि शब्द इच् प्रत्ययान्त निपातित हैं ॥ १२८ ॥

## प्रसंभ्यां जानुनोर्ज्ञुः ॥ १२९ ॥

बहुव्रीहावाभ्यां परयोः जानुशब्दयोः ज्ञुरादेशः स्यात्। प्रकृष्टे जानुनी यस्य सः–प्रज्ञुः सञ्ज्ञुः ॥ प्र, सम् उपसर्ग पूर्वक जानु शब्द को बहुव्रीहि समासान्त ज्ञु आदेश हो॥१२९॥

## ऊर्ध्वाद्[५] विभाषा[४] ॥ १३० ॥

ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य वा ज्ञुरादेशः स्यात्। ऊर्ध्वे जानुनी यस्यासौ-ऊर्ध्वज्ञुः। ऊर्ध्वजानुः ॥ बहुव्रीहि समासमें ऊर्ध्व शब्दसे परे जानु शब्दको समासान्त विकल्पसे ज्ञु आदेश हो ॥१३०॥

## ऊधसोऽनङ् ॥ १३१ ॥

ऊ० सः[६], अनङ्[१], । ऊधोन्तस्य बहुव्रीहेरनङादेशः स्यात् समासान्तः। घट इव ऊधो यस्या असौ–घटोघ्नी धेनुः 'ङिच्च' इत्यन्त्यादेशः ॥ बहुव्रीहि समासमें ऊधस् शब्द को समासान्त अनङ् आदेश हो ॥१३१॥

## धनुषश्च ॥ १३१ ॥

धनुषः[६] च(अ)। धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शृङ्गस्येदं शार्ङ्गम् 'तस्येदम्' इत्यण्। शार्ङ्गं धनुरस्य सः–शार्ङ्गधन्वा। गाण्डीवधन्वा। गाण्डिग्रन्थिः 'कृदिकारान्तादिति ङीषि कृते गाण्डी सा विद्यते यस्य ।'गाण्ड्यजगात् संज्ञायाम्' इति वः ॥ धनुशदान्त बहुव्रीहि को समासान्त अनङादेश हो ॥ १३२ ॥

## वा[४] सञ्ज्ञायाम्[६] ॥ १३३ ॥

धनुरन्तस्य बहुव्रीहेरनङादेशो वा स्यात् सञ्ज्ञायां विषये। शतधन्वा। शतधनुः ॥ सञ्ज्ञाविषयमें धनुष् शब्दान्त बहुव्रीहि को अनङ् आदेश विकल्प से हो ॥ १३३ ॥

## जायाया निङ् ॥ १३४ ॥

जा०याः[६], निङ्[१]। जायान्तस्य बहुव्रीहेः निङादेशः स्यात्। युवतिर्जाया यस्यासौ युवजानिः। वृद्धजानिः। 'यस्येति च' इति इलोपे 'लोपोव्योर्वलि' इति त लोपः ॥ जा( स्त्री ) है अन्तमें जिसके ऐसे बहुव्रीहि को समासान्त निङ् आदेश हो ॥१३४॥

## गन्धस्येदुत्पूति सुसुरभिभ्यः ॥ १३४ ॥

ग० स्य[६], इत्[१], उ० भ्यः[५]। एभ्यो गन्धस्य इकारान्तादेशः स्यात् समासान्तो बहुव्रीहौ। उद्गतो गन्धो यस्य उद्गन्धिः। पूति गन्धिः। सुगन्धिः। सुरभिगन्धिः ॥ बहुव्रीहि समास में उत्, पूति (दुर्गन्ध) सु और सुरभि शब्द से परे गन्ध शब्द को समासान्त इकारान्तादेश हो ॥१३५॥

## अल्पाख्यायाम्[७] ॥ १३६ ॥

अल्पाख्यायां यो गन्धशब्दस्तस्येकारादेशः स्यात्समासान्तो बहुव्रीहौ। घृतस्य गन्धः लेशो यस्मिन् तत्-घृतगन्धि भोजनम्। अल्पं यस्मिन् भोजने क्षीरम् तत्-क्षीरगन्धि भोजनम् ॥अल्पाख्या गम्यमानहो तो बहुव्रीहि समासमें गन्ध शब्द को इकारान्तादेशहो॥

## उपमानाच्च ॥ १३७ ॥

उ० त्[५], च(अ)। उपमानात्परो यो गन्धशब्दस्तस्येकारादेशः स्यात्समासान्तो बहु-

व्रीहौ । पद्मस्येव गन्धोऽस्य—पद्मगन्धिः ॥ बहुव्रीहि समास में उपमान वाचक से परे समासान्त गन्धशब्दको इकारादेश हो ॥ १३७ ॥

## पादस्य लोपोऽहस्त्यादिभ्यः ॥ १३८ ॥

पा० स्य[६], लोपः[१], अ० भ्यः[५] । बहुव्रीहौ हस्त्यादिवर्जितादुपमानात् परस्य पाद-शब्दस्य लोपः स्यात् । स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादौ यस्य—व्याघ्रपाद् । सिंहपात् । अलोऽन्त्यस्य इति दकारस्य अकारलोपे 'खरि च' इति दस्य तत्वम् ॥ बहु-व्रीहिसमासमें हस्ति आदि वर्जित उपमान वाचकसे परे समासान्तपादशब्दका लोप हो॥

## कुम्भपदीषु[७] च[अ] ॥ १३९ ॥

कुम्भपद्यादिषु पादस्य लोपो ङीष् च निपात्यते । ( पादः पत् ) कुम्भपदी ॥ कुम्भ-पदी गणमें पाद शब्द का लोप और ङीप् प्रत्यय निपातित है ॥ १३९ ॥

## सङ्ख्यासुपूर्वस्य[६] ॥ १४० ॥

सङ्ख्यापूर्वस्य सुपूर्वस्य च पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ । द्वौ पादौ यस्य—द्विपात् । त्रिपात् । शोभनौ पादौ यस्य—सुपात् ॥ बहुव्रीहि समास में सङ्ख्या और सु है पूर्व जिसके ऐसे समासान्त पादके अन्त्यका लोप हो ॥ १४० ॥

## वयसि[७] दन्तस्य[६] दतृ[१] ॥ १४१ ॥

वयसि गम्ये सङ्ख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्यात् । द्वौ दन्तौ यस्य—द्विदन् । त्रिदन् । चतुर्दन् । षड् दन्ताः यस्य षोडन् । शोभना दन्ता यस्य समस्ता जाताः-सुदन् । सुदती ॥ वयस् गम्यमान होतो बहुव्रीही समास में संख्या और सुपूर्वक दन्त शब्दको समासन्त दतृ आदेश हो ॥१४१॥

## छन्दसि[७] च[अ] ॥ १४२ ॥

बहुव्रीहौ छन्दसि च दन्तस्य दतृ इत्यादेशः स्यात् । पत्रदन् तमालभेत् ॥ बहुव्रीहि समासमें छन्दोविषय होतो समासान्त दन्त शब्दको दतृ आदेश हो ॥१४२॥

## स्त्रियां[७] सञ्ज्ञायां[७] ॥ १४३ ॥

बहुव्रीहौ दन्तस्य दतृ स्यात् समासान्तः । अयोदती । फालदती ॥ स्त्रीलिङ्गमें संज्ञा गम्यमान होतो बहुव्रीहि समासमें समासान्त दन्त शब्दको दतृ आदेश हो ॥ १४३॥

## विभाषा[१] श्यावारोकाभ्याम्[५] ॥ १४४ ॥

श्याव अरोक इत्याभ्यां परस्य दन्तस्य दतृ वादेशः स्यात्समासान्ते बहुव्रीहौ । श्याव-दन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः ॥ बहुव्रीहि समास में श्याव (काला) और अरोक (दीप्तिरहित) शब्दसे परे समासान्त दन्त शब्द को विकल्पसे दतृ आदेशहो १४४

## अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥

अ० भ्यः[५], च (अ) । एभ्यो दन्तस्य दतृ वा स्यात् समासान्तो बहुव्रीहौ । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शुद्धदन् । शुद्धदन्तः । शुभ्रदन् । शुभ्रदन्तः । वृषदन् । वृषदन्तः । वराहदन् । वराहदन्तः ॥ बहुव्रीहि समास में अग्रान्त ( अग्र है अन्त में जिस के ) शुद्ध, शुभ्र, वृष और वराह शब्द से परे समासान्त दन्त शब्द को विकल्प से दतृ आदेश हो ॥ १४५ ॥

## ककुदस्याऽवस्थायां लोपः ॥ १४६ ॥

क० स्य[६], अ० म्[७], लोपः[१]। ककुदशब्दान्तस्य बहुव्रीहेर्लोपः स्यात् समासान्तोऽवस्थायां गम्ये। असञ्जातं ककुदं यस्य-असञ्जातककुत्। बाल इत्यर्थः। पूर्णककुत्। मध्यम वया इत्यर्थः। उन्नतककुत्। वृद्धवया इत्यर्थः॥ बहुव्रीहि समास में अवस्था गम्यमान हो तो ककुद शब्दान्त का लोप हो॥ १४६॥

## त्रिककुत्[१] पर्वते[७] ॥ १४७ ॥

पर्वते त्रिककुकुदिति निपात्यते। त्रीणि ककुदानि यस्यासौ त्रिककुत्। संज्ञैषा पर्वतविशेषस्य॥ बहुव्रीहि समास में पर्वत विशेष वाच्य हो तो समासान्त त्रिककुत् यह शब्द निपातित है॥ १४७॥

## उद्विभ्यां[५] काकुदस्य[६] ॥ १४८ ॥

बहुव्रीहावुद्विभ्यां परस्य काकुदस्य लोपः स्यात्। उद्गतं काकुदं यस्य-उत्काकुत्। विकाकुत्। काकुदं तालूच्यते॥ बहुव्रीहि समास में उद् और वि उपसर्ग पूर्वक काकुद शब्द के अन्त्य का लोप हो॥ १४८॥

## पूर्णाद्[५] विभाषा[१] ॥ १४६ ॥

बहुव्रीहौ पूर्णात् परस्य काकुदस्य वा लोपः स्यात्। पूर्णं काकुदं यस्य पूर्णकाकुत्। पूर्णकाकुदः॥ बहुव्रीहि समासमें पूर्ण शब्दसे काकुद शब्दके अन्त्यका विकल्पसे लोपहो

## सुहृद्दुर्हृदौ[१] मित्राऽमित्रयोः[७] ॥ १५० ॥

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृद्-मित्रम्। दुर्हृत् अमित्रः॥ बहुव्रीहि समास में मित्र और अमित्र (शत्रु) वाच्य हो तो सुहृत् और दुर्हृत् शब्द निपातित हैं॥

## उरः प्रभृतिभ्यः[५] कप्[१] ॥ १५१ ॥

उरः प्रभृत्यन्ताद् बहुव्रीहेः कप् स्यात्। व्यूढमुरं यस्यासौ-व्यूढोरस्कः। प्रियसर्पिकः। अवमुक्ते उपानहौ येनाऽसौ अवमुक्तोपानत्कः॥ उरस् आदि शब्दों से बहुव्रीहि समास में कप् प्रत्यय हो॥ १५१॥

## इनः[५] स्त्रियाम्[७] ॥ १५२ ॥

स्त्रियामिन्नन्ताद् बहुव्रीहेः कप् स्यात्। बहवो दण्डिनो यस्यां शालायामसौ-बहुदण्डिका शाला। बहुस्वामिका नगरी॥ स्त्रीलिङ्ग में इन्नन्त बहुव्रीहि से समासांत कप् प्रत्यय हो॥ १५२॥

## नद्यृतश्च ॥ १५३ ॥

न० तः[५], च (अ)। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात्। बह्वयः कुमार्यो यस्मिन् देशे असौ बहुकुमारीकोदेशः यहुकर्तृकः॥ नद्यन्त और ऋकारान्त बहुव्रीहि से समासान्त कप् प्रत्यय हो॥ १५३॥

## शेषाद्[५] विभाषा[१] ॥ १५४ ॥

अनुक्तसमासान्ताच्छेषाधिकारस्थाद् बहुव्रीहेः कब्वा स्यात्। महायशस्कः। महायशाः॥ शेष बहुव्रीहि से समासान्त विकल्प से कप् प्रत्यय हो॥ १५४॥

### न[3] संज्ञायाम्[7] ॥ १५५ ॥

संज्ञायां विषये कप् न स्यात् । विश्वेदेवा यस्य विश्वेदेवः विश्वयशाः ॥ बहुव्रीहि समास में संज्ञागम्यमान हो तो कप् प्रत्यय न हो ॥ १५५ ॥

### ईयसश्च ॥ १५६ ॥

ई०सः[4],च (अ)। ईयसन्तोत्तरपदान्न कप् स्यात् । बहवः श्रेयांसो यस्य बहुश्रेयान् । बह्व्यः श्रेयस्यो यस्यासौ-बहुश्रेयसी ॥ ईयस् प्रत्ययान्त बहुव्रीहिसे समासान्त कप् प्रत्यय न हो ॥

### वन्दिते[7] भ्रातुः[5] ॥ १५७ ॥

पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्याऽसौ-प्रशस्त-भ्राता ॥ पूजित अर्थमें जो भ्रातृशब्द तदन्त बहुव्रीहि से समासान्त कप् प्रत्यय न हो ॥

### ऋतश्छन्दसि ॥ १५८ ॥

ऋतः[4], छ० सि[7] । ऋदन्ताद् बहुव्रीहेः कप् न स्यात् । हता माता यस्याऽसौ-हत-माता । हतपिता ॥ छन्दविषय में ऋकारांत बहुव्रीहि से समासान्त कप् प्रत्यय न हो ॥

### [6]नाडीतन्त्र्योः स्वाङ्गे[7] ॥ १५९ ॥

स्वाङ्गे यौ नाडीतन्त्री शब्दौ तदन्तान्न कप् स्यात् । बह्व्यो नाड्यो यस्याऽसौ-बहु-नाडिः-कायः । गोस्त्रियोरुपसर्जनस्य इति ह्रस्वत्वम् । बहुतन्त्रीर्ग्रीवा ॥ स्वाङ्गवाचक नाडी और तन्त्री शब्दान्त बहुव्रीहि से समासान्त कप् प्रत्यय न हो ॥ १५९ ॥

### निष्प्रवाणिश्च ॥ १६० ॥

नि०णिः[1], च(अ) । निष्प्रवाणिरिति नदीलक्षणस्य कप्भावोऽत्र निपात्यते । प्रपूर्वाद् वयतेर्ल्युट् प्रवाणी–तन्तुवायशलाका । निर्गता प्रवाणी यस्य पटस्य असौ–निष्प्रवाणिः पटः । समाप्तवानः प्रत्यग्रो नवक उच्यते ॥ बहुव्रीहि समास में निष्प्रवाणि शब्द निपातित है ॥ १६० ॥

इति जीवारामाऽध्याय कृतायां पाणिनि सूत्रवृत्तौ पञ्चमाऽध्यायस्य
चतुर्थःपादः समाप्तश्चायमध्यायः ॥

---

# अथ षष्ठाऽध्यायस्य प्रथमः पादः ।

### एकाचो द्वे प्रथमस्य ॥१॥

एकाचः[6], द्वे[1], प्र० स्य[6] । अधिकारोऽयम् ॥ हलादि धातु के प्रथम एकाच् अव-यव को द्वित्व हो ( यह अधिकार है ) ॥१॥

### [6]अजादेर्द्वितीयस्य[6] ॥२॥

अच् आदिर्यस्य धातोस्तदवयवस्य द्वितीयैकाचो द्वे स्याताम् । अटिटिषति । अशिशिषति ॥ अजादि धातु के द्वितीय एकाच् अवयव को द्वित्व हो ॥२॥

### [3]न न्द्राः[1] संयोगादयः[1] ॥३॥

अचः पराः संयोगादयो नदराद्विर्न स्युः । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति॥ संयोग के आदि न, द और रेफ जो द्वितीयाथवाएकाच् अवयवस्थ हैं उनको द्वित्व नहीं॥

## पूर्वोऽभ्यासः ॥४॥

पूर्वः[१], अभ्यासः[१], । अत्र ये द्वे विहिते तयोः पूर्वोऽवयवोऽभ्यास सञ्ज्ञकः स्यात् । पपाच । पिपक्षति । पापच्यते । जुहोति । अपीपचत् ॥ द्वित्व किये हुए दो अवयवों का पूर्व भाग अभ्यास संज्ञक हो ॥४॥

## [१]उभेऽभ्यस्तम्[१] ॥५॥

ये द्वे विहिते उभे समुदिते अभ्यस्तसञ्ज्ञे स्याताम् । ददति । ददत् ॥ द्वित्व किये हुये दोनों अभ्यस्तसंज्ञक हों ॥५॥

## जक्षित्यादयः[१] षट्[१] ॥६॥

जक्षिः षड्धातवश्चान्येऽभ्यस्तसंज्ञकाः स्युः । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति । दीध्यते । वेव्यते ॥ जक्ष और इससे आगे छ धातु अभ्यस्तसंज्ञक हों ॥

## तुजादीनां दीर्घोऽभ्यासस्य ॥७॥

तु०म्[६], दीर्घः[१], अ० स्य[६] । स्पष्टम् । तूतुजानः । मामहानः । स दाधार पृथिवीम् ॥ तुजादि ( जिनको दीर्घ विधान नहीं किया गया है परन्तु दीर्घ प्रयोग प्राप्त होते हैं उनको तुजादि समझना चाहिये ) धातुओं के अभ्यास को दीर्घ हो ॥७॥

## लिटि धातोरनभ्यासस्य ॥८॥

लिटि[७], धातोः[६], अ० स्य[६] । लिटि परेऽनभ्यास धात्ववयवस्यप्रथमस्यैकाचः द्वे स्याताम्, आदिभूताद्यः परस्य तु द्वितीयस्य । पपाठ । प्रोर्णुनाव ॥ ( द्वित्वे छन्दसि वेति वाच्यम् ) ॥ यो जागार तमृचः कामयन्ते । दानिप्रयाणीति ॥ लिट् लकार परे हो तो अनभ्यास धातु के प्रथम और अजादि धातु के द्वितीय एकाच् अवयव को द्वित्व हो॥

## सन्यङोः[६] ॥९॥

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचोद्वे स्याताम् अजादेस्तु द्वितीयस्य । पिपठिषति । उन्दिदिषति । पापठ्यते । अटाटयते ॥ सन्नन्त और यङन्त धातु के प्रथम और अजादि धातु के द्वितीय एकाच् अवयव को द्वित्व हो ॥९॥

## श्लौ[७] ॥१०॥

श्लौपरे धातोर्द्वे स्याताम् । जुहोति । बिभेति ॥ श्लु परे हो तो धातु को द्वित्व हो ॥

## चङि[७] ११

चङि परेऽनभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचो द्वे स्याताम्, अजादेस्तु द्वितीयस्य । अपीपठत् । आशिशत् ॥ चङ् प्रत्यय परे हो तो अनभ्यास धातु के प्रथम और अजादि धातु के द्वितीय एकाच् अवयव को द्वित्व हो ॥११॥

## दाश्वान् साह्वान् मीढ्वांश्च ॥१२॥

दाश्वान्[१], साह्वान्[१], मीढ्वान्[१], च(अ) । इमे निपात्यन्ते । दाश्वानिति दाशृ दाने इत्येस्य धातोः क्वसावद्द्विर्वचनमनिट्त्वं च निपात्यते । दाश्वांसो दाशुषः सुतमिति ।

साह्वानिति षहमर्षण इत्येतस्य परस्मैपदमुपधादीर्घत्वमद्विर्वचनमनिट्त्वं च निपातनात् साह्वान् बलाहकः। मीढ्वानिति मिह सेचने इत्येतस्माद् द्वित्वमनिट्त्वमुपधादीर्घत्वं ढत्वं च निपातनात्। मीढ्वस्तोकाय तनयाय॥ (कृञादीनां के द्वे वक्तव्यम्)॥ क्रियतेऽनेनेति—चक्रम्। चिक्लिदम्। कृञः क्लिदेश्च घञर्थे कविधानमिति कः प्रत्ययः॥ चरि चलि पतिवदीनां द्वित्वमच्याक् चाभ्यासस्य)॥ चरादीनां धातूनामपि प्रत्यये परे द्वे भवतः। आभ्यासस्यागागमो भवति। आगागमविधानसामर्थ्याच्च हलादिशेषो नो भवति। चराचरः। चलाचलः। पतापतः। वदावदः। (वेतिवाच्यम्) तेन—चरः पुरुषः। चलोरथः। चलं यानम्। वदो मनुष्यः। (हन्तेर्घत्वं च) हन्तेरचिपरे द्वे भवतोऽभ्यासस्य च हकारस्य द्वित्वमाक् चागमो भवति। परस्याऽभ्यासाच्चेति कुत्वम्। घनाघनः क्षोभणश्चर्षणीनाम्॥ (पाटेर्णि लुक्चोक्च दीर्घश्चाभ्यासस्य)॥ पाटेरचि परे द्वे भवतो णि लुक् च। अभ्यासस्य चोगागमो दीर्घश्च भवति। पाटूपटः॥ दाश्वान्, साह्वान् और मीढ्वान् ये शब्द निपातित हैं॥१२॥

## ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥१३॥

ष्यङः[6], स० म्[1], पु० त्योः[7], त० षे[7]। ष्यङन्तस्य सम्प्रसारणं स्यात् पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे। कौमुदगन्ध्यायाः पुत्रः—कौमुदगन्धीपुत्रः। कौमुदगन्धी पतिः। 'सम्प्रसारणस्य' इति दीर्घता॥ तत्पुरुष समास में पुत्र और पति शब्द उत्तरपद परे हों तो ष्यङ् को सम्प्रसारण हो॥१३॥

## बन्धुनि[7] बहुव्रीहौ[7] ॥१४॥

बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद् बहुव्रीहौ। कारीषगन्ध्या बन्धुर्यस्येति कारीषगन्धीबन्धुः॥ (मातज्मातृकमातृषु वा)॥ कारीषगन्धी मातः, कारीषगन्ध्या मातः। कारीषगन्धीमातृकः, कारीषगन्ध्या मातृकः। कारीषगन्धीमाता। कारीषगन्ध्या माता। अस्मादेवनिपातनात्॥ (मातृशब्दस्य मातजादेशः कश्चित्कल्पश्च)॥ बहुव्रीहि समास में बन्धु शब्द परे हो तो ष्यङ् को सम्प्रसारण हो॥१४॥

## वचिस्वपियजादीनां[6] किति[7] ॥१५॥

वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति। उक्तः उक्तवान्। सुप्तः। सुप्तवान्। इष्टः इष्टवान्। हुतः। हुतवान्॥ कित् प्रत्यय परे होतो वचि, स्वपि और यजादि गणपठित धातुओं को सम्प्रसारण हो॥१५॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां[6] ङिति[7] च[म]

किति ङिति चैषां सम्प्रसारणं स्यात्। गृहीतः। गृहीतवान्। गृह्णाति। जरीगृह्यते। ज्या। जीनः। जीनवान्। ल्वादिभ्य इति निष्ठा तस्य नत्वम्। जिनाति। जेजीयते। वयि। लिटिपरे वेञो वयिरादेशस्तस्यङिदभावात् किदेवोदाह्रियते। ऊयतुः। ऊयुः। व्यध। विद्धः। विद्धवान्। विध्यति। वेविध्यते। वशः। उशितः। उशितवान्। ङिति। उष्टः। उशन्ति। व्यच। विचितः। विचितवान्। विचति। वेविच्यते। वृश्चेः। वृक्णः। वृक्णवान्। वृश्चति। वरीवृश्च्यते। प्रच्छ। पृष्टः। पृष्टवान्। पृच्छति। परीपृच्छ्यते। भ्रस्ज। भृष्टः। भृष्टवान्। भृज्जति। बरीभृज्यते॥ कित् और ङित् प्रत्ययपरे होतो ग्रहि आदि धातुओं को सम्प्रसारण हो॥१६॥

## लिटचभ्यासस्योभयेषाम् ॥१७॥

लिटि परे वच्यादीनां गृह्यादीनां चाऽभ्यासस्य सम्प्रसारणं स्यात् । उवाच । उवचिथ । स्वप्-सुष्वाप । सुष्वपिथ । यज-इयाज । इयजिथ । टुवप्-उवाप । उवपिथ । ग्रहादीनाम् । जग्राह । जग्रहिथ इत्यादि । लिट् लकार परे होतो वच्यादि और ग्रह्यादि धातुओं के अभ्यासको सम्प्रसारणहो ॥ १७ ॥

## स्वापेश्चङि ॥१८॥

स्वापेः[६], चङि[७] । णयन्तस्य स्वापेश्चङि परे सम्प्रसारणं स्यात् । असूषुपत् । असूषुपताम् । असूषुपन् ॥ चङ् प्रत्यय परे होतो णिजन्त स्वप धातुको सम्प्रसारण हो ॥ १८॥

## स्वपिस्यमिव्येञां[६] यङि[७] ॥१९॥

एषां सम्प्रसारणं स्याद् यङिपरे । सोषुप्यते । सेसिम्यते । वेवीयते ॥ यङ् परे हो तो स्वपि (ञिस्वप्,शये) स्यमि(स्यमु) और व्येञ् (व्येञ् संवरणे) धातुको सम्प्रसारणहो॥

## न[अ] वशः[६] ॥२०॥

यङिपरे वशेर्धातोः सम्प्रसारणं न स्यात् । वावश्यते । वावश्येते । वावश्यन्ते॥ यङ् प्रत्यय परे हो तो वश्य धातु को सम्प्रसारण न हो ॥ २०॥

## चायः[६] की[१] ॥२१॥

यङि परे चायः कीत्यादेशः स्यात् । चेकीयते । चेकीयेते । चेकीयन्ते ॥ यङ् परे हो तो चायृ धातु को की आदेश हो ॥२१॥

## स्फायः[६] स्फी[१] निष्ठायाम्[७] ॥२२॥

निष्ठायां परे स्फायः स्फीत्ययमादेशः स्यात् । स्फीतः । स्फीतवान् ॥ निष्ठा प्रत्ययपरे होतो स्फायी धातुको स्फी आदेश हो ॥ २२ ॥

## स्त्यः[६] प्रपूर्वस्य[६] ॥२३ ॥

स्त्यः प्रपूर्वस्य निष्ठायां परे सम्प्रसारणं स्यात् । प्रस्तीतः । प्रस्तीमः । प्रस्तीतवान् । प्रस्तीमवान् । सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घे प्रस्ती त इति जाते 'प्रस्त्योऽन्यतरस्याम्' इति तस्य मः ॥ निष्ठा प्रत्यय परे हो तो प्रपूर्वक स्त्या (स्त्यैष्ट्यै शब्द सङ्घातयोः) धातु को सम्प्रसारण हो ॥ २३॥

## द्रवमूर्तिस्पर्शयोः[७] श्यः[६] ॥२४॥

द्रवस्य मूर्त्तौ-काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् । शीनम् घृतम्। अस्पर्शे किम् ? शीतो वायुः । शैङः-क्ते आत्वे पूर्वरूपे शि त इति जाते 'श्योऽस्पर्शे इति तस्य नत्वे 'हलः' इति दीर्घेना ॥ निष्ठा प्रत्यय परे होतो द्रवमूर्त्ति और स्पर्श अर्थ में वर्त्तमान श्यैङ् धातु को सम्प्रसारण हो ॥ २४ ॥

## प्रतेश्च ॥ २५ ॥

प्रतेः[६], च(अ) । प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यान्निष्ठायाम् परतः । प्रतिशीनः । प्रतिशीनवान् ॥ प्रतिपूर्वक श्यैङ् धातु को सम्प्रसारण हो निष्ठा प्रत्यय परे होतो ॥ २५॥

## [1]विभाषाऽभ्यवपूर्वस्य[6] ॥ २६ ॥

अभि अव इत्येवं पूर्वस्य श्यः सम्प्रसारणं वा स्यान्निष्ठायाम्परतः । अभिश्यानम्- अभिशीनं घृतम् । अवश्यानः, अवशीनो वृश्चिकः 'श्योऽस्पर्शे' इति निष्ठा तस्य नत्वम् ॥ निष्ठाप्रत्ययपरे होतो अभि और अवपूर्वक श्यैङ् धातुको विकल्पसे सम्प्रसारणहो ॥२६॥

## शृतं[1] पाके[7] ॥ २७ ॥

पाकेऽभिधेये श्रातिश्रपयत्योः क्ते शृभावोवा निपात्यते ॥ ( क्षीरहविषोः पाके ) ॥ शृतं क्षीरं स्वयमेव । विक्लिन्नं पक्वं चेत्यर्थः ॥ पाक अभिधेय हो तो निष्ठाप्रत्यय के परे होनेपर श्राधातुको शृ भाव विकल्प से निपातित किया है ॥ २७ ॥

## प्यायः[6] पी[1] ॥ २८ ॥

प्यायः पी वा स्यान्निष्ठायाम् । (व्यवस्थितविभाषेयम्)॥ स्वाङ्गे नित्यम् । पीनम् मुखम् पीनौ बाहू । अन्यत्र-प्यानः, पीनः, स्वेदः । 'ओदितश्च' ७।२।४५। इति निष्ठातस्य नः ॥ निष्ठा प्रत्यय परे होतो ओप्यायी (वृद्धौ) धातुको विकल्पसे सम्प्रसारण हो ॥ २८ ॥

## लिड्यङोश्च ॥२६॥

लि०ङोः[7], च(अ) । लिटि यङि च परे प्यायः पी स्यात् । पिप्ये । पिप्याते । पिप्यिरे । पेपीयते पेपीयेते । पेपीयन्ते ॥ लिट् और यङ् प्रत्यय परे हो तो ओप्यायी धातु को पी आदेश हो ॥ २६ ॥

## [1]विभाषा श्वेः[6] ॥३०॥

लिटि यङि च श्वयतेः सम्प्रसारणं वा स्यात् । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः । यङि । शोशूयते । शेश्वीयते ॥ लिट् और यङ् प्रत्यय परे हों तो टु-ओश्वि ( गतिवृद्ध्योः ) धातुको विकल्पसे सम्प्रसारण हो ॥ ३०॥

## णौ[7] च[अ] संश्चङोः[7] ॥३१॥

सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात । शुशावयिषति । शिश्वाययिषति । चङि । अशूशवत् । अशिश्वयत् ॥ सन् और चङ् पर कणि परे होतो टु-ओश्वि धातु को विकल्प से सम्प्रसारण हो ॥ ३१ ॥

## ह्वः[6] सम्प्रसारणम्[1] ॥३२॥

सन्परे चङ्परे च णौ परे ह्वः सम्प्रसारणं स्यात् । जुहावयिषति । जुहावयिषतः । जुहावयिषन्ति । अजूहवत् । अजूहवताम् । अजूहवन् ॥ सन् और चङ् परकणि परे होतो ह्वेञ् ( स्पर्द्धायां शब्दे च ) धातु को सम्प्रसारण हो ॥ ३२ ॥

## अभ्यस्तस्य[6] च[अ] ॥३३॥

अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात ततो द्वित्वम् । जुहाव । जोहूयते । जुहूषति ॥ अभ्यस्त का जो ह्वेञ् धातु उसको सम्प्रसारण हो ॥ ३३ ॥

## बहुलं[1] छन्दसि[7] ॥३४॥

ह्वः सम्प्रसारणं स्यात् । इन्द्राग्नी हुवे । हयामि मरुतः शिवान् ॥ छन्दोविषय में ह्वेञ धातु को बहुल करके सम्प्रसारण हो ॥ ३४ ॥

## चायः[6] की[1] ॥३५॥

छन्दसि चायतेर्धातोर्बहुलं कीत्ययमादेशः स्यात्। नान्यं चिक्युर्न निचिक्युरन्यम्। अग्निर्ज्योतिर्निचाय्यः॥ छन्दोविषय में चायृ धातु को बहुल करके की आदेश हो॥३५॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः[1]

इमे छन्दसि निपात्यन्ते। अपस्पृधेथाम् (अस्पर्धेथाम्) आनृचुः (आनर्चुः) आनृहुः (आनर्हुः) चिच्युषे (चुच्युविषे) तित्याज (तत्याज) श्राताः (श्रीताः) श्रितम्। आशीः। आशीर्त्तः॥ अपस्पृधेथादि शब्द छन्दो विषय में निपातित हैं॥ ३६॥

## [a]न सम्प्रसारणे सम्प्रसारणम्[1] ॥३७॥

सम्प्रसारणे परे पूर्वस्य यणः सम्प्रसारणं न स्यात्। व्यधविद्धः। व्येञ्-संवीतः॥ सम्प्रसारण परे होते पूर्व यण् को सम्प्रसारण न हो॥ ३७॥

## लिटि वयो यः ॥३८॥

लिटि[7], वयः[6], यः[1]। वयो यकारस्य सम्प्रसारणं न स्याल्लिटि। ऊयतुः। ऊयुः॥ लिट् लकार परे तो वय धातु के यकार को सम्प्रसारण न हो॥ ३८॥

## वश्चास्यान्यतरस्यां किति ॥३९॥

वः[1], च(अ), अ०म्(अ), किति[7]। वयो यस्य वो वा स्यात् किति लिटि परे। ऊवतुः। ऊवुः। ऊयतुः। ऊयुः॥ कित् लिट् परे होतो वयधातुके यकारको विकल्पसे वकारादेशहो॥

## वेञः[6] ॥ ४० ॥

वेञो न सम्प्रसारणं स्याल्लिटि। ववौ। ववतुः। ववुः॥ लिट् लकार परे हो तो वेञ् धातु को सम्प्रसारण न हो॥ ४०॥

## ल्यपि[7] च[a] ॥ ४१ ॥

ल्यपि वेञो न सम्प्रसारणं स्यात्। प्रवाय। उपवाय॥ ल्यप् प्रत्यय परे हो तो वेञ् धातु को सम्प्रसारण न हो॥ ४१॥

## ज्यश्च ॥ ४२ ॥

ज्यः[6], च (अ)। ल्यपि परे ज्या, वयोहानावित्यस्य धातोः सम्प्रसारणं न स्यात्। प्रज्याय। उपज्याय॥ ल्यप् प्रत्यय परे हो तो ज्या धातु को सम्प्रसारण न हो॥ ४२॥

## व्यश्च ॥ ४३ ॥

व्यः[6], च (अ)। ल्यपि परे व्येञ्, संवरण इत्यस्य धातोः सम्प्रसारणं न स्यात्। प्रव्याय। उपव्याय॥ ल्यप् प्रत्यय परे होतो व्येञ् (संवरणे) धातुको सम्प्रसारण न हो॥

## विभाषा[a] परेः[6] ॥ ४४ ॥

परे व्येञो वा सम्प्रसारणं स्याल्ल्यपि। तुकं बाधित्वा परत्वाद् हल इति दीर्घः। परिवीय। परिव्याय॥ ल्यप् परे होतो परिपूर्वक व्येञ् धातुको विकल्पसे सम्प्रसारणहो॥

## आदेच उपदेशेऽशिति ॥ ४५ ॥

आत्[1], एचः[6], उ० शे[7], अ० ति[7]। उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति।

धेट्-दधौ । ग्लै-ग्लाता । शो-निशातुम् ॥ उपदेश में जो एजन्त धातु उनको आकारादेश हो शित् विषय को छोड़ कर प्रत्यय परे हों तो ॥ ४५ ॥

## न व्यो लिटि ॥ ४६ ॥

न (अ), व्यः[६], लिटि[७] । व्येञो नो आत्वं स्याल्लिटि । विव्याय । विव्यतुः । विव्युः ॥ लिट् लकार परे हो तो व्येञ् धातु को आकारादेश न हो ॥ ४६ ॥

## स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥

स्फु० योः[६], घञि[७] । घञि परेऽनयोरेव आत्वं स्यात् । स्फारः । स्फालः॥ घञ् प्रत्यय परे हो तो स्फुर और स्फुल धातुओं को आकारादेश हो ॥ ४७ ॥

## क्रीङ्जीनां[६] णौ[७] ॥ ४८ ॥

एषामेच आत्वं स्याण्णौ । क्रापयति । अध्यापयति । जापयति । आत्वे 'अर्त्तिह्रीव्ली' ७।३।३६। इति पुक् ॥ णि प्रत्यय परे हो तो डुक्रीञ् ( द्रव्य विनिमये ) इङ् ( अध्ययने ) और जि ( जये ) धातु के एच् को आकारादेश हो ॥४८॥

## सिध्यतेरपारलौकिके ॥ ४९ ॥

सि०तेः[६], अ०के[७] । ऐहलौकिकेऽर्थे वर्त्तमानस्य सिध्यतेरेव आत्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः ॥ णि प्रत्यय परे होतो अपार लौकिक अर्थ में वर्त्तमान सिधु धातु के एच् को आकारादेश हो ॥४९॥

## मीनातिमिनोतिदीङां[६] ल्यपि[७] च[अ] ॥ ५० ॥

आत्वमेषां स्याल्ल्यपि चादशित्येज्निमित्ते । प्रमाय । प्रमातुम् । निमाय । निमाता । उपदाय । उपदातव्यम् ॥ ल्यप् प्रत्यय के परे होने पर और अशित् प्रत्यय के परे मीञ् ( हिंसायाम् ) डुमिञ् ( प्रक्षेपणे ) और दीङ् (क्षये) धातु के एच् को आकारादेश हो॥

## विभाषा[१] लीयतेः[६] ॥५१॥

लीलीङो रात्वं वा स्यादेज् विषये ल्यपि परे च । लाता । लेता । लास्यते । लेष्यते । विलाय । विलीय ॥ ल्यप् प्रत्यय के परे होने पर और अशित् प्रत्यय के परे ली, लीङ् धातु के एच् को विकल्प से आकारादेश हो ॥५१॥

## खिदेश्छन्दसि ॥५२॥

खिदेः[६], छन्दसि[७] । खिददैन्ये । अस्यैचः स्थाने वात्वं स्यात् । चिखाद । चिखेद ॥ छन्द विषय में खिद धातु के एच् को विकल्प से आकारादेश हो ॥५२॥

## अपगुरोणमुलि ॥५३॥

अ०रः[६], णमुलि[७] । ( गुरी-उद्यमने ) इत्यस्यैचोवात्वं स्याण्णमुलि । अस्यपगारं युध्यन्ते, अस्यपगोरं वा ॥ णमुल् प्रत्यय परे होतो अप पूर्वक गुरी धातु के एच् को विकल्प से आकारादेश हो ॥

## चिस्फुरोर्णौ ॥५४॥

चि०रोः[६], णौ[७] । चिस्फुरो णौ परे वात्वं स्यात् । चापयति । चाययति । स्फार-

यति । स्फोरयति ॥ णि प्रत्यय परे होतो चिञ् और स्फुर धातु के एच् को विकल्प से आकारादेश हो ॥५४॥

## प्रजने[७] वीयतेः[६] ॥ ५५ ॥

प्रजनेऽर्थे वीधातोरेचो वात्वं स्याण्णौ । वापयति॥ वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः ॥ णि प्रत्यय परे होतो प्रजन अर्थ में वी धातु के एच् को विकल्प से आकारादेश हो ॥५५॥

## बिभेतेर्हेतुभये ॥५६॥

बि०तेः[६], हे०ये[७] । बिभेतेरेचो वाऽऽत्वं स्यात् प्रयोजकाद् भयं चेत् । मुण्डोभापयते। भीषयते वा 'भियोहेतुभये षुक्' ।७।३।४०॥ इति षुगागमः । णि प्रत्यय परे होतो हेतुभय अर्थ में वर्त्तमान भी धातु के एच् को विकल्प से आकारादेश हो ॥५६॥

## नित्यं[२] स्मयतेः[६] ॥५७॥

स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते ॥ णि प्रत्यय परे होतो हेतु भय अर्थमें वर्त्तमान स्मिङ् धातुके एच् को नित्य आकारादेश हो ॥५७॥

## सृजिदृशोर्झल्यमकिति ॥५८॥

स०शोः[६], झलि[७], अम्[१], अ० ति[७] । अनयोरमागमः स्याज्झलादावकिति परे । स्रष्टा । स्रष्टुम् । स्रष्टव्यम् । द्रष्टा । द्रष्टुम् । द्रष्टव्यम् ॥ झलादि कित् भिन्न प्रत्यय परे होतो सृज और दृशिर् धातु को अम् का आगम हो ॥ ५८ ॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥५९॥

अ०स्य[६], च(अ) ऋ०स्य[६], अ०म्(अ) । उपदेशेऽनुदात्तो यो धातुः ऋदुपधस्तस्याऽमा स्याज्झलादावकिति परे । स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति ॥ झलादि कित् भिन्न प्रत्यय परे होतो उपदेशमें अनुदात्त ऋकारोपध धातुको विकल्पसे अम् आगम हो

## शीर्षश्छन्दसि ॥६०॥

शीर्षन्[१], छ०सि[७], । शिरः शब्दस्य स्थाने शीर्षन्निति निपात्यते छन्दसि विषये । शीर्ष्णो द्यौः समवर्त्तत ॥ छन्दविषयमें शिरस् शब्दके स्थानमें शीर्षन् यह निपातित है ॥

## ये[७] च[अ] तद्धिते[७] ॥ ६१ ॥

यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः ॥ ( वा केशेषु ) ॥ शीर्षण्याः, शिरस्या वा, केशाः ॥ ( अचिशीर्ष इति वाच्यम् ) ॥ अजादौ तद्धिते परे शिरसः शीर्षादेशः । स्थूलशिरस इदम्-स्थौलशीर्षम् ॥ यकारादि तद्धित प्रत्यय परे हो तो शिरस् शब्द को शीर्षन् आदेश हो ॥६१॥

## पद्दन्नोमास हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु

प०न्[१], श०षु[७] । पाद, दन्त, नासिका, मास, हृदय, निशा, असृग्, यूष, दोष, यकृत, शकृत, उदक, आस्य-इत्येतेषां शब्दानां स्थाने शस् प्रभृतिप्रत्ययेषु परतः-पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन्-इतीमे यथा-संख्यमादेशाः स्युः ॥ शसादि प्रत्यय परे होतो पाद आदि शब्दों को पद् आदि शब्द यथाक्रम आदेश हो ॥६२॥

## धात्वादेः[6] षः[6] सः[1] ॥६३॥

धातोरादेः षस्य सादेशः स्यात्। षह। सहते। षिच्। सिञ्चति॥ धातु के आदि षकार को सकारादेश हो॥६३॥

## णोनः ॥६४॥

णः[6], नः[1]। धातोरादेर्णस्य नाकारादेशः स्यात्। णीञ्-नयति। णम्-नमति॥ धातु के आदि णकार को नकारादेश हो॥६४॥

## लोपो व्योर्वलि ॥६५॥

लोपः[1], व्योः[6], वलि[7]। वलि परे वकारयकारयोर्लोपः स्यात्। युवतीर्जायायस्याऽसौ-युवजानिः।'जायायानिङ्'।।५।१३४। युवतिशब्दस्य पुंवत् त्वात् तिप्रत्ययस्य निवृत्तिः। (जीवेरदानुक्) जीरदानुः॥ वल् प्रत्याहार परे होतो यकार और वकार का लोप हो॥

## वेरपृक्तस्य ॥ ६६ ॥

वेः[6], अ०स्य[6]। अपृक्तस्य वेर्लोपः स्यात्। ब्रह्महा। घृतस्पृक्॥ अपृक्त वि का लोप हो॥

## हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तंहल् ॥६७॥

ह० भ्यः[5], दी०त्[5], सु० म्[1], हल्[1]। हलन्तात्परौ दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुति सीत्येतदपृक्तं हल्लुप्यते। राजा। कुमारी। यशोदा। तिलोपः सिलोपश्च। तिलोपस्तावत्। अबिभर्भवान्। सिलोपः। अभिनोऽत्र॥ हलन्त से परे दीर्घ ङयन्त और आबन्त से परे सु, ति और सि के अपृक्त हल् का लोप हो॥६७॥

## एङ्ह्रस्वात्[5] सम्बुद्धेः[6] ॥६८॥

एङन्ताद्ह्रस्वान्ताच्च प्रातिपदिकाद् धल्लुप्यते सम्बुद्धेश्चेत। हे कवे!। हे प्रभो!। हे देवदत्त!। हे देवि!। हे वधु!॥ एङन्त और ह्रस्वान्त प्रातिपदिक से परे संबुद्धि के हल् का लोप हो॥६८॥

## शेश्छन्दसि बहुलम् ॥६९॥

शेः[6], छन्दसि[7], ब०म्[1]। शि इत्येतस्य छन्दसिविषये बहुलं लोपः स्यात्। याक्षेत्रा। या वना। यानि क्षेत्राणि। यानि वनानि॥ छन्द विषय में शि का बहुल करके लोप हो॥

## ह्रस्वस्य[6] पितिकृति[7] तुक्[1] ॥७०॥

ह्रस्वस्य पिति कृति परे तुगागमः स्यात्। उक्वावितौ। सोमसुत्। प्रकृत्य उपस्तुत्य॥ पित् कित् परे हो तो ह्रस्व को तुक् का आगम हो॥७०॥

## संहितायाम्[7] ॥७१॥

अधिकारोऽयमनुदात्तं पदमेकवर्जमिति यावत्॥ यहां से (१५५) सूत्र तक संहिता का अधिकार है॥७१॥

## छे[7] च[अ] ॥७२॥

छे परे ह्रस्वस्य तुगागमः स्यात् संहितायाम्। इच्छति। गच्छति। स्वच्छाया॥ छकार परे हो तो ह्रस्व को तुक् का आगम हो संहिता विषय में॥७२॥

## आङ्माङोश्च ॥७३॥

आ० ङोः[६], च(अ) । छे परे एतयोस्तुगागमः स्यात् । आच्छादयति । माच्छिदत् ॥ छकार परे हो तो संहिताविषय में आङ् और माङ् को तुक् का आगम हो ॥७३॥

## दीर्घात्[५] ॥७४॥

दीर्घाच्छेपरे तुगागमः स्यात् । म्लेच्छति । चेच्छिद्यते ॥ संहिता विषय में छकार परे हो तो दीर्घ को तुक् का आगम हो ॥७४॥

## पदान्ताद्[५] वा[अ] ॥७५॥

दीर्घात्पदान्ताच्छेपरे तुगागमो वा स्यात् । कुटीच्छाया । कुटीछाया ॥ ( विश्वजनादीनां छन्दसि वा तुगागमो भवतीति वाच्यम् ) ॥ विश्वजनच्छत्रम् , विश्वजनछत्रम् ॥ संहिता विषय में छकार परे हो तो दीर्घपदान्त को तुक् का आगम विकल्प से हो ॥

## इको यणचि ॥७६॥

इकः[६], यण्[१], अचि[७] । अचि परे इकः स्थाने यणादेशः स्यात् संहितायां विषये । पत्यालयः । कुमार्युपदेशः । साध्वाशा । वध्वाज्ञा । मात्रनुज्ञा । लनादेः ॥ ( इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्यः ) ॥ भो ३ इन्द्रम् । भो ३ यिन्द्रम् । पटा ३ उ उदकम् । पटा ३ वुदकम् ॥ अच् परे हो तो इक् के स्थान में यण् आदेश हो सन्धि करने में ॥ ७६ ॥

## एचोऽयवायावः ॥७७॥

एचः[६], अ० वः[१] । अचि परे एचः क्रमादय् अव् आय् आव् इतीमे स्युः । चयनम् । लवनम् । चायकः । लावकः ॥ अच् परे हो तो एच् को क्रम से अय् अव् आय् और आव् आदेश हो सन्धि करने में ॥७७॥

## वान्तो यि प्रत्यये ॥७८॥

वान्तः[१], यि[७], प्रत्यये[७] । यकारादौ प्रत्यये परे ओदोतोरवावौ स्याताम् । ( गोपयसोर्यत् ) । गोर्विकारो गव्यम् । नावा तार्यं नाव्यम् ( नौवयोधर्म ४।४।९१ ) इति यत् ॥ ( गोर्यूतौ छन्दस्युपसङ्ख्यानम् ) ॥ (अध्वपरिमाणे च ) । गव्यूतिः ॥ यकारादि प्रत्यय परे हो तो ओ और औ को अव् और आव् आदेश हो सन्धि करने में ॥७८॥

## धातोस्तन्निमित्तस्यैव ॥७९॥

धातोः[६], त० स्य[६], एव(अ) । यकारादौ प्रत्यये परे धातोरेचश्चेद् वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यम् ॥ यकारादि प्रत्यय परे हो तो उसी निमित्त से हुआ जो धातु का एच् उसको वान्त आदेश हो ॥

## क्षय्यजय्यौ[१] शक्यार्थे[७] ॥८०॥

यति परे शक्यार्थे अनयोरेकारस्यायादेशो निपात्यते । क्षेतुं शक्यः—क्षय्यः । जेतुं शक्यः—जय्यः ॥ यत् प्रत्यय परे हो तो शक्यार्थ में क्षि और जि धातु के एकार को अय् आदेश करके क्षय्य और जय्य निपातित किये हैं ॥८०॥

## क्रय्यस्तदर्थे ॥८१॥

क्रयः[1], तदर्थे[7]। क्रीणातेर्धातोस्तदर्थे यति परे अयादेशो निपात्यते। तस्मै प्रकृत्यर्थायेदं तदर्थम्। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं द्रव्यं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थः॥ तदर्थ में डुक्रीञ् धातु से यत् प्रत्यय करके क्रय्य शब्द निपातित है॥ ८१॥

## भय्यप्रवय्ये[1] च[अ] छन्दसि[7] ॥८२॥

बिभेतेः प्रपूर्वस्य वी इत्येस्य च यति परे छन्दसि विषयेऽयादेशो निपात्यते। बिभेत्यस्मादिति भय्यः। प्रवय्या॥ (ह्रदय्या आप उपसंख्यानम्)॥ ह्रदे भवा ह्रदय्या आपः। भवेच्छन्दसीति यत्॥ छन्दो विषय में भी यत् प्रत्यय के परे और प्रपूर्वक भी धातुके एकार को अयादेश करके भय्य और वी से प्रवय्य शब्द निपातित किये हैं॥८२॥

## एकः[1] पूर्वपरयोः[6] ॥८३॥

अधिकारोऽयम्, ख्यत्यात् परस्येति यावत्॥ पूर्व और पर के स्थान में एक आदेश हो यह 'ख्यत्यात् परस्य' (६।१।१०) इस सूत्र तक अधिकार है॥८३॥

## अन्तादिवच्च ॥ ८४॥

अ० त् (अ), च (अ)। योऽयमेकादेशोऽसौ पूर्वस्याऽन्तवत् परस्यादिवत् स्यात्। शिवेहि। शिव+आङ्+इहि इति स्थितौ धातूपसर्गकार्य्यत्वेनान्तरङ्गत्वात् 'आद्गुणः' इत्यनेन गुणे शिव एहि इति जाते। 'ओमाङोश्च' इति पररूपम्॥ जो यह एकादेश है वह पूर्व को अन्तवत् और पर को आदि वत् समझा जावे॥८४॥

## षत्वतुकोरसिद्धः ॥८५॥

ष० कोः[7], अ० द्धः[1]। षत्वे तुकि च कर्त्तव्ये एकादेशशास्त्रमसिद्धं स्यात्। कोऽसिचत्। इत्यत्र एङः पदान्तादतीत्येका देशस्य परं प्रत्यादिवत्वादपदादेरिण् परस्यादेशस्य सस्य षत्वमिह नो। अधीत्य। प्रेत्य। इत्यत्रैकादेशस्यासिद्धत्वात्, ह्रस्वस्य पिति कृति तुगिति॥ षत्व और तुक् विधि विधान में एकादेश असिद्ध हो॥८५॥

## आद्[5] गुणः[1] ॥८६॥

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। पुरुषेन्द्रः। जायेशः। गङ्गोदकम्। ब्रह्मर्षिः। तवल्कारः॥ अवर्ण से अच् परे होतो पूर्व पर के स्थान में एक गुणादेश हो॥

## वृद्धिरेचि ॥८७॥

वृद्धिः[1], एचि[7]। अवर्णादेचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यात्। नरैनः। परिडतौकः। आर्य्यैश्वर्य्यम्। वैद्यौषधम्॥ अवर्ण से एच् परे हो तो पूर्व पर के स्थान में वृद्धि एकादेश हो॥८७॥

## एत्येधत्यूठ्सु[7] ॥८८॥

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। सत्यमुपैमि। प्रैधते। प्रष्ठौहः॥ (अक्षादूहिन्यामुपसङ्ख्यानम्)॥ अक्षौहिणीसेना॥ (स्वादीरेरिणोः)॥ स्वैरम्। स्वेनेपितुं शीलमस्येति—स्वैरी। स्वैरिणी॥ (प्रादूहोढोढ्येषैष्येषु)॥ प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः॥ (ऋते च तृतीयासमासे॥

सुखेन ऋतः—सुखार्तः । ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) ॥ प्रार्णम् । वत्सरार्णम् । कम्बलार्णम । वसनार्णम । ऋणार्णम् । दशार्णम् ॥ अवर्ण से एजादि एति, एधति और ऊठ् परे हो तो पूर्वपर के स्थान में वृद्धि एकादेश हो ॥८८॥

## आटश्च ॥८९॥

आटः[५], च(अ) । आटोऽचि परे वृद्धिरेकादेशः स्यात् । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत॥ आट् से अच् परे हो तो पूर्व पर के स्थान में एक वृद्धि एकादेश हो ॥८९॥

## उपसर्गादृति धातौ ॥९०॥

उ० त्[५], ऋति[७], धातौ[७] । अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । उपार्च्छति । प्रार्च्छति ॥ अवर्णान्त उपसर्ग से ऋकारादि धातु परे हो तो पूर्व पर के स्थान में एक वृद्धि एकादेश हो ॥९०॥

## वा सुप्यापिशलेः ॥ ९१ ॥

वा(अ) सुपि[७],आ०,लेः[६] । अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् । प्रार्षभीयति । प्रर्षभीयति ॥ अवर्णान्त उपसर्ग से सुप् ( धात्ववयवद्वारक ) परे हो तो आपिशलि आचार्य के मत में पूर्व पर के स्थान में वृद्धि एकादेश हो ॥ ९१ ॥

## औतोऽम् शसोः ॥ ९२ ॥

आ (अ), ओतः[५], अ० सोः[७] । ओकारादमि शसि च परे आकारादेशः स्यात् । गाम् पश्य । गाः पश्य । द्यां पश्य । द्याः पश्य ॥ ओकार से अम् और शस् परे तो पूर्व पर के स्थान में आकारादेश हो ॥ ९२॥

## एङि[७] पररूपम्[१] ॥ ९३ ॥

अकारादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । (अत्र केचिद् वा सुपीत्यनुवर्त्तयन्ति) ॥ तेन एङादौ सुब्धातौ वा । उपेडकीयति । उपैडकीयति । उपोदनीयति । उपौदनीयति ॥ ( शकन्ध्वादिषु पररूपं वाच्यम् ) शक अन्धुः = शकन्धुः । कुल अटा = कुलटा ॥ अकार उपसर्ग से एङादि धातु परे हो तो पूर्व परके स्थान में पररूप एकादेश हो ॥ ९३ ॥

## ओमाङोश्च ॥ ९४ ॥

ओ० ङोः[७], च (अ) । ओमि, आङि चात् परे पररूपमेकादेशः स्यात् । जगदीश्वरायों नमः । आङि । आ + ऊढा = ओढा । अद्य + ओढा = अद्योढा । कद्योढा ॥ आकार से ओम् और आङ् परे हो तो पूर्वपरके स्थान में पररूप एकादेश हो ॥ ९४ ॥

## उस्यपदान्तात् ॥ ९५ ॥

उसि[७],अ०[५] त् । अपदान्तादवर्णादुसिपरे पररूपमेकादेशः स्यात् । भिन्द्युः । छिन्द्युः । अदुः ॥ पदान्त अवर्ण से उस् परे हो तो पूर्व परके स्थानमें पररूप एकादेश हो ॥९५॥

## अतो गुणे ॥ ९६ ॥

अतः[५], गुणे[७] । अपदान्तादकाराद्गुणे परे पररूपमेकादेशः स्यात् । यजन्ति । पचन्ति ॥ अपदान्त अकार से गुणपरे हो तो पूर्व परके स्थानमें पररूप एकादेश हो ॥

## अव्यक्तानुकरणस्यात इतौ ॥ ९७ ॥

अ० स्य[6], अतः[5], इतौ[7] । ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् । पटत्+इति=पटिति । घटत्+इति=घटिति । झटत्+इति=झटिति ॥ अव्यक्तानुकरण ( ध्वनिअनुकरण ) के अत् से इति शब्द परे हो तो पूर्व पर के स्थान में टिभाग को पररूप एकादेश हो ॥ ९७ ॥

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ९८ ॥

न (अ), अ० स्य[6], अ०[6] स्य, तु (अ), वा (अ) । अव्यक्तानुकरणस्याऽम्रेडितस्य योऽच्छब्द इतौ परे पररूपं न स्यात्, अन्त्यस्य तु तकार मात्रस्य वा स्यात् । पटत्-पटेति, पटत्पटदिति 'झलांजशोन्ते' इति तस्य दः॥ आम्रेडित संज्ञक अव्यक्तानुकरण के अत् से इति शब्द परे हो तो पूर्व पर के स्थान में पररूप एकादेश न हो, परन्तु अन्त्य के तकार को तो विकल्प से पररूप हो ॥ ९८ ॥

## अकः[5] सवर्णे[7] दीर्घः[1] ॥ ९९ ॥

अकः सवर्णेऽचि परेपूर्वपरयोःस्थाने दीर्घ एकादेशः स्यात् । आर्य्याज्ञा । श्रीशः । भानूदयः । वधूहा । ( ऋति सवर्णे ऋ वा) । होतॄकारः । होतृकारः । ( लृति सवर्णे लृ वा ) । होतॢकारः । होतृकारः ॥ अक् से सवर्ण अच् परे हो तो पूर्व पर के स्थान में एक सवर्ण दीर्घादेश हो ॥ ९९ ॥

## प्रथमयोः[7] पूर्वसवर्णः[1] ॥ १००॥

अकः प्रथमाद्वितीययोरचिपरे पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशः स्यात् । वायू । वृक्षाः । अग्नी । वृक्षान् ॥ अक् से प्रथमा और द्वितीयाविभक्ति सम्बन्धी अच् परे होतो पूर्व पर के स्थान में पूर्वसवर्ण दीर्घ एकादेश हो ॥ १०० ॥

## तस्माच्छसो नः पुंसि ॥ १०१ ॥

त० त्[5], शसः[6], नः[1], पुंसि[7] । पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नकारादेशः स्यात्पुंसि । पुरुषान् । कवीन् । प्रभून् । कर्तॄन् ॥ पुलिङ्ग में पूर्वसवर्ण दीर्घ से परे जो शस् का सकार उसको नकारादेश हो ॥ १०१ ॥

## नादिचि ॥ १०२ ॥

न (अ), आत्[5], इचि[7] । अवर्णान्तादिचि परे न पूर्वसवर्णदीर्घ एकादेशः । नरौ । यशोदे । कुण्डे ॥ अवर्ण से इच् परे हो तो पूर्वपर के स्थान में पूर्वसवर्ण दीर्घ एकादेश न हो ॥ १०२ ॥

## दीर्घाज्जसि च ॥ १०३ ॥

दीर्घात्[5], जसि[7], च (अ) । दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । कुमार्यौ । कुमार्यः । वध्वौ । वध्वः ॥ दीर्घ से जस् और इच् परे हो तो पूर्व पर के स्थान में पूर्वसवर्ण दीर्घ एकदेश न हो ॥ १०३ ॥

## वा[अ] छन्दसि[7] ॥ १०४ ॥

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो वा स्यात् । वाराही । वाराह्यौ । मारुती-

असः। मारुत्यश्वतसूः॥ छन्द विषय में दीर्घ से जस् और इच् परे हो तो पूर्वपरके स्थान में पूर्व सवर्ण दीर्घ एकादेश विकल्प से हो ॥ १०४ ॥

## अमि[7] पूर्वः[1] ॥ १०५ ॥

अकोऽमिचि परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात्। पुरुषम्। कविम्। वायुम्। ( वा छन्दसीत्येव ) शमीं च शम्यं च। गौरीं च। गौर्यं च॥ अक् से अम् परे हो तो पूर्व पर के स्थान में पूर्वरूप एकादेश हो ॥ १०५ ॥

## सम्प्रसारणाच्च ॥ १०६ ॥

स०[5] त्, च (अ)। सम्प्रसारणादचि परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात्। (यजि) इष्टम्। (वपि) उप्तम्। (ग्रहि) गृहीतम्॥ सम्प्रसारण से अच्परे होतो पूर्व पर के स्थान में पूर्वरूप एकादेश हो ॥ १०६ ॥

## एङः पदान्तादति ॥ १०७ ॥

एङः[5] पदान्ताद्[5], अति[7]। पदान्तादेङो अति परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात्। कवेऽत्र। प्रभोऽत्र। पदान्त एङ् से अकार परे हो तो पूर्वपर के स्थान में पूर्वरूप एकादेश हो ॥१०७॥

## ङसिङसोश्च ॥१०८॥

ङ०सोः[7], च(अ)। एङो ङसिङसोरति परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात्। अग्नेः २। वायोः २ 'घेर्ङिति' इति गुणे॥ एङ् से ङसिङस् सम्बन्धी अकार परे हो तो पूर्वपर के स्थान में पूर्वरूप एकादेश हो ॥१०८॥

## ऋत उत् ॥१०९॥

ऋतः[5], उत्[1]। ऋदन्तात् ङसिङसोरति परे पूर्वपरयोरुकारादेशः स्यात्। होतुरागच्छति। होतुः स्वम् 'रात्सस्य' इति सलोपः॥ ऋकारान्त से ङसिङस् सम्बन्धी अकार परे हो तो पूर्वपर के स्थान में उकारादेश हो ॥१०९॥

## [5] ख्यत्यात् परस्य[6] ॥११०॥

खिति खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उकारादेशः स्यात्। सख्युरायामि सख्युर्गृहम्। पत्युरागच्छामि। पत्युराज्ञां मन्येऽहम्। खीशब्दः सहखेन वर्त्तत इति सखस्तमिच्छतीति क्यच् सखीयति। सखीयतेः क्विपि सखीस्तस्य ङसिङसोः सख्युरिति [तीशब्दः] लूनमिच्छति-लूनीयति। लूनीयतेः क्विपि लुप्त लून्युरायाति लून्युरपराधः॥ कृतयणादेश ख्य् और त्य् से परे ङसिङस् सम्बन्धी आकारको उकारादेश हो॥

## अतोरोरप्लुतादप्लुते ॥१११॥

अतः,[5], रोः[6], अ० त्[5], अ०[7] ते। अप्लुतादतः परस्यरोरुः स्यादप्लुतेऽति। पुरुषोऽत्र॥ अप्लुत अकारसे परे रु के रेफको उकारादेश हो अप्लुत अकार परे होते. न

## हशि[7] च[अ] ॥११२॥

अप्लुतादतः परस्यरोरुः स्याद्धशि परे। पुरुषो वदति। बालो हसति॥ हश् (प्रत्याहार) परे हो तो अप्लुत अकार से परे रु को उकारादेश हो ॥ ११२ ॥

## प्रकृत्याऽन्तः पादमव्यपरे ॥११३॥

प्र० त्या¹, अ० म्¹, अ०° रे। छन्दसि विषये एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरेऽति। सुजाते अश्व सूनृते। उपप्रयन्तो अध्वरम्। पादश्चेह ऋक्पाद एव गृह्यते। नतु श्लोकस्य॥ वकार यकार जिससे न परे हों ऐसा अकार परे हो तो छन्दोविषय में पाद के मध्य का एङ् प्रकृति से रहे॥ ११४॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु° च ॥११४॥

एषु परेऽत्यति एङ् छन्दसि प्रकृत्या स्यात्। वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवक्रमुः। तेनो अव्रत। शतधारो अयं मणिः। तेनो अवन्तु। कुशिकासो अवस्यवः॥ अव्यात्, अवद्यात्, अवक्रमु, अव्रत, अयम्, अवन्तु और अवस्यु ये परे हों तो छन्दोविषय में पाद के मध्य का एङ् प्रकृति से रहे॥ ११४॥

## यजुष्युरः ॥११५॥

यजुषि°, उरः¹। उरः शब्द एङन्तोऽतिपरे प्रकृत्या स्याद् यजुषि। उरो अन्तरिक्षम्॥ अकार परे होतो यजुर्विषयमें एङन्त उरस् शब्द प्रकृति से रहे॥११५॥

## आपो जुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥११६॥

यजुषि इमे अति प्रकृत्या स्युः। आपो अस्मान् मातरः शुन्धयन्तु। जुषाणो अग्निराज्यस्य। वृष्णो अंशुभ्याम्। वर्षिष्ठे अधिनाके। अम्बे अम्बाले अम्बिके न मानयति कश्चन (य०अ० २३ म०१८)। अस्मादेव वचनादम्बार्थेति ह्रस्वो न भवति॥ अकार परे होतो यजुर्विषयमें आपो जुषाणो वृष्णो वर्षिष्ठे, अम्बे, अम्बाले और अम्बिके प्रकृतिसे रहें॥

## अङ्ग इत्यादौ च ॥११७॥

अङ्गे°, इति(अ) आदौ°, च(अ)। अङ्गशब्दे य एङ् तदादौ चाकारे य एङ् पूर्वः सोऽति प्रकृत्या स्यात् यजुषि। प्राणो अङ्गे अङ्गे अदीध्यत्॥ अकार परे होतो अङ्ग शब्द में जो एङ् और उस के आदि अकार से पूर्व जो एङ् वह यजुर्वेद विषय में प्रकृति से रहे॥ ११७॥

## अनुदात्ते° च कुधपरे° ॥ ११८॥

कवर्ग धकारपरे अनुदात्तेऽति परे चेङ् प्रकृत्या स्यात् यजुषि। अयं सो अग्निः। अयं सो अध्वरः॥ कवर्ग और धकार जिससे परे हो ऐसा अनुदात्त अकारपरे होतो यजुर्वेद विषय में एङ् प्रकृति से रहे॥ ११८॥

## अवपथासि° च ॥११९॥

अनुदात्ते अकारादौ अवपथाः शब्दे परे यजुषि एङ् प्रकृत्या स्यात्। त्री रुद्रेभ्यो अवपथाः वपेस्थासि लङि। 'तिङ् तिङः' इत्यनुदात्तत्वम्॥ अनुदात्त अकारादि अवपथाः यह क्रियापद परे होतो यजुर्वेदमें एङ् प्रकृति से रहे॥११९॥

## सर्वत्र विभाषा¹ गोः⁶ ॥१२०॥

लोके वेदे चैङन्तस्य गोरिति वा प्रकृतिभावः स्यात् पदान्ते। गो अग्रम्। गोऽग्रम्॥ लोक और वेदमें एङन्त गोशब्द विकल्प से प्रकृति से रहे पदान्त में अकार परे हो तो

## अवङ्[1] स्फोटायनस्य[6] ॥१२१॥

पदान्तेऽचि परे गोरवङ् वा स्यात् गवाग्रम् । गोऽग्रम् । 'अकः सवर्णे दीर्घः'—इति दीर्घत्वम् । 'एङः पदान्तादति' इति पूर्वरूपत्वम् ॥ पदान्त में अच् परे होतो गो शब्द को स्फोटायन के मत में अवङ् आदेश हो ॥ १२१ ॥

## इन्द्रे[7] च[अ] ॥ १२२ ॥

गोरवङ् स्यादिन्द्रे । परे । गवेन्द्रः॥ गो शब्द को अवङ् आदेश हो इन्द्र शब्द परे होतो॥

## [1]प्लुतप्रगृह्या अचि[7] नित्यम्[2] ॥१२३॥

प्लुताश्च प्रगृह्याश्चाऽचि नित्यं प्रकृत्या स्युः । एहि धर्मदत्त ३ अत्र हामो भवति । कवी इमौ ॥ अच् परे होतो प्लुत और प्रगृह्यसंज्ञक नित्य प्रकृति से रहें ॥१२३॥

## आङोऽनुनासिकश्छन्दसि ॥ १२४ ॥

आङः[6], अ० कः[1], छ०[7] सि । छन्दसि आङोऽचि परेऽनुनासि : स्यात् स च प्रकृत्या स्यात् । अभ्र आँ अपः । गभीर आँ उग्रपुत्रे ॥ छन्द विषयमें अच् परे होतो आङ् को अनुनासिक हो और वह प्रकृति से रहे ॥१२४॥

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२५ ॥

इकः[1], अ०[7]र्णे, शा०स्य[6], ह्रस्वः[1], च(अ) । पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युः ह्रस्वश्च वा । चक्री अत्र, चक्रि अत्र । चक्र्यत्र ॥ असवर्ण अच्परे होतो शाकल्य के मत में पदान्त इक् प्रकृति से रहे और विकल्प से ह्रस्वादेश हो ॥१२५॥

## ऋत्यकः ॥१२६॥

ऋति[7], अकः[1]। ऋति परेऽकः प्रकृत्या स्युः ह्रस्वश्च वा ॥ ब्रह्मा ऋषिः । ब्रह्म ऋषिः । ब्रह्मर्षिः ॥ ऋकार परे होतो शाकल्य के मत में अक् प्रकृति से रहे और उसको विकल्प से ह्रस्वादेश हो ॥१२७॥

## अप्लुतवदुपस्थिते ॥१२७॥

अ० त्(अ), उ०[7]ते । उपस्थितोऽनार्ष इति शब्दः तस्मिन् परे प्लुतोऽप्लुतवत् स्यात् । सुश्लोक ३ इति । सुश्लोकेति ॥ अनार्ष इति शब्द परे होतो प्लुत को अप्लुतवत् कार्य हो

## इ[1] ३ चाक्रवर्मणस्य[6] ॥१२८॥

इ३ प्लुतोऽचि परे प्लुतवद् वा स्यात् । चिनुहि ३ इदम् । चिनुहीदम् । जुहुधि ३ इति । जुहुधीति ॥ अच् परे होतो चाक्रवर्मण के मत में प्लुत इकार को अप्लुतके तुल्य कार्य हो ॥१२८॥

## दिव उत् ॥ १२९ ॥

दिवः[6]- उत्[1] । पदान्ते[1]दिवोऽन्तादेशः उः स्यात । सुद्युभ्याम् । सुद्युभिः । पदान्तमें दिव् प्रातिपदिक के अन्त को उकारादेश हो ॥१२९॥

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३० ॥

ए० दोः[6], सु० पः[1], अकोः[7], अ० से[7], हलि[7] । अककारयोरेतत्तदोर्यः सु तस्य

लोपः स्याद्धलि न तु नञ् समासे । एष यज्ञदत्तः । स रुद्रदत्तः ॥ अनञ् 'समास में हल् परे हो तो ककार भिन्न एतद् और तद् शब्दके सु का लोप हो ॥१३०॥

## स्यश्छन्दसि बहुलम् ॥ १३१॥

स्यः[1], छ० सि[7], ब० म्[1] । स्य इत्यस्य बहुलं सोर्लोपः स्याद्धलि । एषस्य भानुः । यत्रस्यो निपतेत् ॥ हल् परे हो तो छन्द विषय में स्य के सु का बहुल करके लोप हो ॥

## सोऽचि लोपे चेत्पादपूरणम् ॥ १३२ ॥

सः[1], अचि[7], लोपे[7], चेत् (अ), पा० म्[1] । स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्यंत । सेमामविड्ढि प्रभृति य ईशिषे । पादशब्देन । लोकवेदयोरुभयोर्ग्रहणम् । तेनात्रापि सैष दाशरथी रामः, सैषराजा युधिष्ठिरः । सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ अच् परे हो और यदि लोप होनेपर पादकी पूर्तिहोती होतो तद् शब्दके सु का लोप हो ॥१३२॥

## सुट्[1] कात्[5] पूर्वः[1] ॥ १३३ ॥

अधिकारोऽयं पारस्करप्रभृतीनि च संज्ञायामिति यावत् ॥ ककार से पूर्व सुट् का आगम हो यह अधिकार पारस्कर प्रभृतीनि च संज्ञायां (६।१।१५४) सूत्र तक है ॥१३३

## सम्पर्युपेभ्यः[5] करोतौ[7] भूषणे[7] ॥१३४॥

सम् परि उप इत्येभ्यो भूषणेऽर्थे करोतौ परे कात् पूर्वः सुडागमः स्यात् । संस्कर्ता । संस्कर्तुम् । संस्कर्त्तव्यम् । परिष्कर्ता । परिष्कर्तुम् । परिष्कर्त्तव्यम् । 'परिनिविभ्यः ।८। ३।७०। इति सस्य षत्वम् । उपस्कर्ता । उपस्कर्तुम् । उपस्कर्त्तव्यम् ॥ डुकृञ् धातु परे हो तो सम् परि और उप से परे भूषण अर्थ में ककार से पूर्व सुट्का आगम हो १३४

## समवाये[7] च[अ] ॥१३५॥

समवायः समुदायः–तस्मिश्चार्थे करोतौ परे सम्पर्युपेभ्यः कात् पूर्वः सुडागमः स्यात् । तत्र न संस्कृतम् । तत्र न परिष्कृतम् । तत्र न उपस्कृतम् । समुदितमित्यर्थः ॥ समुदाय अर्थमें करोति धातु परे हो तो सम् परि और उप उपसर्गों से परे क से पूर्व सुट् का आगम हो ॥ १३५ ॥

## उपात्[5] प्रतियत्नवैकृतवाक्याध्याहारेषु[7] ॥१३६॥

उपात्कृञः सुडागमः स्यादेष्वर्थेषु । प्रतियत्नो-गुणाधानम् । विकृतमेव वैकृतम् । वाक्यस्याध्याहारः-आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलंकृतेत्यर्थः । एधोदकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते- वाक्याध्याहारेण ब्रूते इत्यर्थः ॥ प्रतियत्न वैकृत और वाक्याध्याहार अर्थमें करोति धातु परे होतो उप उपसर्ग से परे क से पूर्व सुट् का आगम हो ॥ १३६ ॥

## किरतौ[7] लवने[7] ॥१३७॥

उपात् किरतेस्सुडागमः स्याच्छेदेऽर्थे । उपस्किरति ॥ लवन ( छेद ) विषय में कृ धातु परे होतो उप उपसर्ग से परे क से पूर्व सुट् का आगम हो ॥ १३७ ॥

## हिंसायां प्रतेश्च ॥ १३८॥

हिं०म्[७], प्रतेः[५], च(अ)। उपात्प्रतेश्च किरतेः सुडागमः स्याद् हिंसायाम्। उपस्किरति। प्रतिस्किरति॥ हिंसार्थ में किरति (कृ) धातु परे होतो उप और प्रति उपसर्ग से परे क से पूर्व सुट् का आगम हो॥ १३८॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने ॥१३९॥

अ०त्[५], च०षु[७], आ०ने[७]। अपात् किरतेः सुट् स्यात्। (सुडपिहर्षादिष्वेव वाच्यः) अपस्किरते-वृषो हृष्टः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी च॥ चतुष्पाद् और शकुनि के आलेखन (कुरेदना) विषय में अप उपसर्ग से परे ककार से पूर्व कृ धातुको सुट् का आगम हो॥ १३९॥

## कुस्तुम्बुरूणि[१] जातिः[१] ॥ १४०॥

अत्र सुण्निपात्यते जातिश्चेद् भवेत्। कुस्तुम्बुरुर्नामौषधिजातिः। धान्यकम्। तत्फलान्यपि कुस्तुम्बुरूणि॥ जाति वाच्य होने पर कुस्तुम्बुरूणि शब्द में सुट् का आगम निपातन किया गया है॥ १४०॥

## [१]अपरस्पराःक्रिया सातत्ये[७] ॥ १४१॥

अपरस्परा इति सुट् निपात्यते क्रियासातत्ये गम्ये। अपरस्पराः-सार्था गच्छन्ति। सततमविच्छेदेन गच्छन्तीत्यर्थः॥ क्रिया का सातत्यगम्यमान होने पर अपरस्पर शब्द में सुट् का आगम निपातन किया गया है॥ १४१॥

## गोष्पदं[१] सेविताऽसेवितप्रमाणेषु[७] ॥ १४२॥

सुट् सस्य षत्वं चात्र निपात्यते। गावः पद्यन्तेयस्मिन् देशे स गोभिः सेवितो देशो गोष्पद इत्युच्यते। असेविते। अगोष्पदान्यरण्यानि। प्रमाणे। गोष्पदं पूरं वृष्टोदेवः॥ सेवित असेवित और प्रमाण अर्थ में गोष्पद शब्द में सुडागम निपातन किया है १४२

## आस्पदं[१] प्रतिष्ठायाम्[७] ॥ १४३॥

आत्मयापनाय स्थाने सुट् निपात्यते। आस्पदम्। प्रतिष्ठा गम्यमान हो तो आपद में सुट् का आगम निपातन किया है॥ १४३॥

## आश्चर्य्यमनित्ये ॥ १४४॥

आ०म्[१], अ०त्ये[७]। अनित्ये आश्चर्यं निपात्यते। आश्चर्यं यदि स भुञ्जीत॥ अनित्य (अद्भुत) अर्थमें आचर्य में सुट् करके आश्चर्य्य निपातित किया है॥ १४४॥

## [७]वर्चस्केऽवस्कर[१] ॥ १४५॥

कुत्सितं वर्चः वर्चस्कम्। तस्मिन्नभिधेयेऽवस्कर इति निपात्यते। अवकीर्यते इति अवस्करः-अन्नमलम्॥ वर्चस्क अर्थमें अवकरमें सुट् करके अवस्कर शब्द निपातित है।

## अपस्करो रथाङ्गम् ॥ १४६॥

अ०रः[१], र०म्[१]। अपस्कर इति निपात्यते रथाङ्गं चेत्स्यात्। अपस्करः-रथावयवः। रथाङ्ग होने पर अपकर में सुडागम करके अपस्कर शब्द निपातन किया गया है॥

## विष्किरः शकुनिर्विकिरो वा ॥ १४७॥

वि०रः[१], श०निः[१], वि०रः[१], वा(अ)। अत्र वेति सुट् निपात्यते। विष्किरः, विकिरः॥

शकुनि ( पक्षी ) वाच्य होनेपर विकिर शब्दमें विकल्पसे सुट् निपातन किया गया है॥

## ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १४८ ॥

ह्र०त्[५], च०दे[७], म०न्त्रे[७]। मन्त्रे ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यात्। हरिश्चन्द्रो मरुद्गणः॥ ह्रस्व से चन्द्रोत्तर परे हों तो मन्त्र विषय में चकारके से पूर्व सुट् का आगम हो॥ १४८॥

## प्रतिष्कशश्च कशेः ॥ १४९ ॥

प्र० शः[१] च (अ), कशेः[५]। ( कश गतिशासनयोः ) इत्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते, षत्वं च। सहायः, पुरोयायी वा,–प्रतिष्कशः–इत्युच्यते॥ प्रतिपूर्वक कश धातु से प्रतिकश का स्थानी सुडागम सहित प्रतिष्कश निपातन किया गया है॥१४९॥

## प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५० ॥

प्र०[१] न्द्रौ ऋषी[१]। प्रस्कण्वो हरिश्चन्द्र इति सुण् निपात्यते ऋषी चेदभिधेयौ स्याताम्। प्रस्कण्व ऋषिः। हरिश्चन्द्र ऋषिः॥ ऋषि अभिधेय होतो प्रकण्व और हरिचन्द्र के स्थान में सुट् सहित प्रकण्व और हरिश्चन्द्र शब्द निपातित हैं॥ १५०॥

## मस्करमस्करिणौ[१] वेणुपरिव्राजकयोः[७] ॥ १५१ ॥

मस्कर मस्करिन् इतीमौ यथासङ्ख्यं वेणौ परिव्राजके च निपात्येते। मस्करो वेणुः। मस्करी परिव्राजकः॥ वेणु ( बांस ) और परिव्राजक (संन्यासी) अर्थ में मस्कर और मस्करिन् शब्द निपातन किये हैं॥ १५१॥

## कास्तीराजस्तुन्दे[१] नगरे[७] ॥ १५२ ॥

नगरेऽभिधेये कास्तीर अजस्तुन्द इतीमौ निपात्येते। ईषत्तीरमस्यास्तीति–कास्तीरं नाम नगरम्। अजस्येव तुन्दमस्येति–अजस्तुन्दं नाम नगरम्॥ नगर अभिधेय हो तो कास्तीर और अजस्तुन्द शब्द निपातित हैं॥ १५२॥

## पारस्करप्रभृतीनि[१] च[अ] सञ्ज्ञायाम् ॥ १५३ ॥

सञ्ज्ञायां विषये पारस्कर प्रभृतीनि च शब्दरूपाणि ससुट्कानि निपात्यन्ते। पारस्करो देशः। कारस्करो वृक्षः। आकृतिगणोऽयम्॥ ( तद्बृहतोः करपत्योश्चोरदेवतयोः–सुट् तलोपश्च )॥ तस्करश्चोरः। बृहस्पतिर्देवता॥ ( प्रायस्य चित्तिचित्तयोः )॥ प्रायश्चित्तिः। प्रायश्चित्तम्॥ संज्ञा गम्यमान हो तो पारस्कर आदि शब्द सुट् सहित निपातित हैं॥ १५३॥

## अनुदात्तं पदमेकवर्जम् ॥ १५४ ॥

अ० म्[१], प० म्[१], ए० म्[१]। परिभाषेयं स्वरविधिविषया। यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात्। गोपायतंनः॥

---

गोपायतमिति। गुप इत्यस्य 'धातोः' इत्यन्तउदात्तः तत आयः,प्रत्ययः 'आद्युदात्तश्च' इति प्रत्ययस्वरेणाद्युदात्तः। ततः 'सनाद्यन्ता' इति धातुसंज्ञायाम् 'धातोः' इति यकार उदात्तः। स च प्रागुक्तयोरुदात्तयोः सतोः पश्चात् प्रवृत्तत्वात् सतिशिष्टः अतोबलवान् तस्य 'अनुदात्तौसुप्पितौ' इत्यनेनानुदात्तेन शप्कारेणसहं 'अतोगुणे' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः। थसस्तमदिशः। तस्य 'तास्यानुदात्तेन ङिदुपदेशाद्'इत्यनेनानुदेशात् पदत्वादनुदात्तत्वम्। तस्य 'उदात्तादनुदात्तस्य'इति स्वरितः॥

जिस पद में जिसको उदात्त वा स्वरित विधान किया है उस एक अच् को छोड़ कर शेष वह पद अनुदात्त हो यह परिभाषा सूत्र है ॥ १५४ ॥

## कर्षात्वतो घञोऽन्त उदात्तः ॥ १५५ ॥

क० तः[5], घञः[5], अन्तः[1], उ० तः[1] । कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः स्यात् । कर्षः । पाकः । त्यागः । दायः ॥ घञन्त कर्ष और आकारवान् घञन्त धातु को अन्तोदात्त स्वर हो ॥ १५५ ॥

## उञ्छादीनां[6] च[अ] ॥ १५६ ॥

अन्त उदात्तः स्यात् । उञ्छः । म्लेच्छः ॥ उञ्छादि गण पठित शब्दों को अन्तोदात्त स्वर हो ॥ १५६ ॥

## अनुदात्तस्य च यत्रोदात्तलोपः ॥ १५७ ॥

अ० स्य[6], च (अ), यत्र (अ), उ० पः[1] । यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । कुमार शब्दोऽन्तोदात्तस्तस्य ङीप्यनुदात्ते उदात्तो लुप्यते । कुमारी ॥ जिस अनुदात्त के परे उदात्त का लोप हुआ हो तो उसको उदात्त स्वर हो ॥ १५७ ॥

## धातोः[6] ॥ १५८ ॥

धातोरन्त उदात्तः स्यात् । पठति । पचति ॥ धातु को अन्तोदात्त स्वर हो ॥१५८॥

## चितः[6] ॥ १५९ ॥

चितोऽन्त उदात्तः स्यात् । भङ्गुरम् । भासुरम् । मेदुरम् ॥ चित् प्रत्यय को अन्तोदात्त स्वर हो ॥ १५९ ॥

## तद्धितस्य ॥ १६० ॥

चितस्तद्धितस्यान्त उदात्तः स्यात् । कौञ्जायनाः ॥ तद्धित के चित् प्रत्यय को अन्तोदात्त स्वर हो ॥ १६० ॥

## कितः[6] ॥ १६१ ॥

तद्धितस्य कितोऽन्तः उदात्तः स्यात् । नाडायनः । चारायणः ॥ तद्धित के कित् प्रत्यय को अन्तोदात्त स्वर हो ॥ १६१ ॥

## तिसृभ्योजसः ॥ १६२ ॥

ति० भ्यः[5], जसः[6] । तिसृभ्य उत्तरस्य जसोन्त उदात्तः स्यात् । तिस्रस्तिष्ठन्ति ॥ तिसृ शब्द से परे जस् विभक्ति को अन्तोदात्त स्वर हो ॥ १६२ ॥

## चतुरः[6] शसि[7] ॥ १६३ ॥

शसि परे चतुरोऽन्त उदात्त स्यात् । चतुरः पश्य ॥ शस् विभक्ति परे हो तो चतुर् शब्द को अन्तोदात्त स्वर हो ॥ १६३ ॥

## सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६४ ॥

सौ[7], ए० चः[5], तृ० दिः[1], वि० क्तिः[1] । साविति सप्तमी बहुवचनम् यत्रासौ य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता स्यात् । वाचा । वाग्भ्याम् । वाग्भिः ॥ सुप् परे हो तो एकाच् से परे तृतीयादि विभक्ति उदात्त हो ॥ १६४ ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६५ ॥

अ० त्[५], उ० त्[५], अ० (अ) म्, अ०[७] से । नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् तस्मात्परा तृतीयादिर्विभक्तिरन्तोदात्ता वा स्यात्। परमवाचाः परमवाचा ॥ अनित्य समास में अन्तोदात्त एकाच् उत्तरपद से परे तृतीयादि विभक्ति विकल्प से उदात्त हो ॥ १६५ ॥

## अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १६६ ॥

अञ्चेः[५], छ० लि[७], अ० म्[१] । छन्दसि विषये अञ्चेः परा सर्वनामविभक्तिरुदात्ता स्यात् । इन्द्रो दधीचो अस्थभिः ॥ छन्द विषय में अञ्चु धातु से परे असर्वनाम स्थान विभक्ति उदात्त हो ॥ १६६ ॥

## ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः[५] ॥ १६७ ॥

ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव् इत्येभ्योऽसर्वनामस्थानविभक्तिरुदात्ता स्यात् । ऊठ—प्रष्ठौहः । प्रष्ठौहा । इदम्—आभ्याम् । एभिः । पदाद्यः—पद्दन्नोमासहृन्निश् इति षट् । निपदश्चतरो जहि । या दतो धावति । असन् प्रभृतिभ्यो विभक्तिरुदात्ता भवति । ग्रीवायां बद्धो अपि कक्ष आसनि । मत्स्यं न दीन उदनि क्षियन्तम् । ( अप् ) अपः पश्य । पुम्—पुंसा । पुम्भ्याम् । रै—रायः पश्य । दिव्—दिवः पश्य । दिवा । दिवे ॥ ऊठ् इदम् पदादि अप् पुम् रै और दिव् शब्द से परे असर्वनामस्थान विभक्ति उदात्त हो ॥ १६७ ॥

## अष्टनो दीर्घात् ॥ १६८ ॥

अ० नः[५], दी०त्[५] । अष्टनो दीर्घान्ताद सर्वनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभ्यः । अष्टाभिः । अष्टासु ॥ दीर्घ अष्टन् शब्द से परे असर्वनामस्थान विभक्ति उदात्त हो ॥

## शतुरनुमो नद्यजादी ॥ १६९ ॥

शतु[५], अ०म[५], न० दी[१] । अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च विभक्तिरसर्वनामस्थानमुदात्ता स्यात् । तुदती । तुदती । तुदता । तुदता ॥ नुम् भिन्न शतृप्रत्ययान्त अन्तोदात्त से परे नदी और अजादि असर्वनामस्थान विभक्ति उदात्त हो ॥

## उदात्तयणो हल्पूर्वात् ॥ १७० ॥

उ० ण[५], ह० त्[५] । उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी अजादिरसर्वनामविभक्तिश्च उदात्ता स्यात् । चोदयत्री सूनृतानां चेतन्ती सुमतीनाम् । कर्त्रा । हर्त्रा ॥ हल् है पूर्व जिसके ऐसे उदात्त के स्थान में हुये यण् से परे नदी और अजादि असर्वनामस्थान विभक्ति उदात्त हो ॥ १७० ॥

## नोङ्धात्वोः ॥ १७१ ॥

न०(अ) ऊ० त्वोः[६] ऊङो धातोश्च य उदात्त यण् हल्पूर्वस्ततः पराजाद्यसर्वनामस्थानविभक्तिर्नोदात्ता स्यात् । ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वे । सकृल्ल्वा । सकृल्ल्वे ॥ हल् है पूर्व जिसके ऐसे उदात्त ऊङ् और धातु के स्थान में हुये यण् से परे अजादि असर्वनामविभक्ति उदात्त न हो ॥ १७१ ॥

## ह्रस्वनुड्भ्यां[५] मतुप्[१] ॥ १७२ ॥

ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः स्यात् । अग्निमान् । वायुमान् । अक्षण्वता । शीर्षण्वता ॥ ह्रस्वान्त अन्तोदात्त और नुट् से परे मतुप् उदात्त हो ॥१७२॥

## नामन्यतरस्याम् ॥ १७३ ॥

नाम्, अ० म(अ) मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नाम् उदात्तो वा स्यात् । अग्नीनाम्, अग्नीनाम् । वायूनाम्, वायूनाम् ॥ मतुप् प्रत्यय के परे जो ह्रस्वान्त अन्तोदात्त शब्द उससे परे नाम् विकल्प से उदात्त हो ॥१७३॥

## ङ्याश्छन्दसि बहुलम् ॥१७४॥

ङ्याः[५], छ०सि[७], ब० म(अ) । ङ्यन्ताच्छन्दसि नाम्बहुलमुदात्तं स्यात् । देवसेनानामभि भञ्जतीनाम् । नच भवति । नदीनां पारे जयन्तीनां मरुतः ॥ छन्दो विषय में ङ्यन्त से परे नाम् बहुलता से उदात्त हो ॥ १७४ ॥

## षट्त्रिचतुर्भ्यो हलादिः ॥१७५॥

ष०भ्यः[५], ह० दिः[१] । एभ्यो हलादिर्विभक्तिरुदात्ता स्यात् । षण्णाम् । षड्भिः । षड्भ्यः । पञ्चानाम् । दशानाम् । त्रिभिः । त्रिभ्यः । त्रयाणाम् । चतुर्णाम् । चतुर्भ्यः ॥ षट् संज्ञक त्रि और चतुर् शब्द से परे हलादि विभक्ति उदात्त हो ॥१७५॥

## झल्युपोत्तमम् ॥१७६॥

झलि[७], उ० म्[१] । षट् त्रिचतुर्भ्यो या हलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । पञ्चभिस्तपस्तपति । सप्तभिः । त्रिंशता । चतुर्भिः ॥ षट् संज्ञक त्रि और चतुर् शब्द से परे जो झलादि विभक्ति तदन्त पद में जो उपोत्तम वह उदात्त हो ॥१७६॥

## विभाषा[१] भाषायाम्[७] ॥१७७॥

षट् त्रिचतुर्भ्यो या हलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं वा स्याद् भाषायाम् । पञ्चभिः । पञ्चभिः । तिसृभिः । तिसृभिः । चतसृभ्यः । चतसृभ्यः ॥ भाषा ( लोक ) में षट् संज्ञक त्रि और चतुर् शब्द से परे जो झलादि विभक्ति तदन्तपद में जो उपोत्तम वह विकल्प से उदात्त हो ॥१७७॥

## न[अ] गोश्वन्साववर्णराडङ् क्रुङ् कृद्भ्यः[५] ॥१७८॥

एभ्यः प्रागुक्तं न स्यात् । गवा । गवे । सुगवा । सुगवे । शुना । शुने । श्वभ्याम् । परमशुना । साववर्णः । सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम् । येभ्यः । केभ्यः । तेभ्यः । राजा । परमराजा । प्राञ्चा । प्राङ्भ्याम् । क्रुञ्चा । परमक्रुञ्चा । कृता । परमकृता ॥ गो, श्वन्, साववर्ण ( प्रथमा के एकवचन में जो अवर्णान्त ) राड्, अङ्, क्रुङ् और कृत् से परे विभक्ति उदात्त न हो ॥१७८॥

## दिवो झल् ॥ १७९ ॥

दिवः[५], झल्[१] । दिवः परा झलादिर्विभक्तिर्नोदात्ता स्यात् । द्युभ्याम् । द्युभिः ॥ दिव से झलादि विभक्ति उदात्त न हो ॥१७९॥

## नॄ चान्यतरस्याम् ॥१८०॥

नृ[१] च(अ), अ०म्(अ)। नुः परा झलादिर्विभक्तिर्वोदात्ता स्यात् । नृभ्याम् । नृभ्याम्। नृभिः । नृभिः ॥ नृ शब्द से परे झलादि विभक्ति विकल्प से उदात्त हो ॥१८०॥

## तित्[१] स्वरितम्[१] ॥ १८१ ॥

तित् स्वरितं स्यात् । चिकीर्ष्यम् । जिहीर्ष्यम् । कार्य्यम् । हार्यम् ॥ तित् प्रत्यय स्वरित हो ॥ १८१ ॥

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः॥१८२॥

तासि[५]अ०व[५],ल०म्[१],अ०म्[१],अ०ङोः[७] । अस्मात् परं लसार्वधातुकमनुदात्तं स्यात् । तासि—कर्त्ता । कर्त्तारौ । कर्त्तारः । अनुदात्तेतः । आस्ते । आसाते । आसते । ङित् । शेते । सूते । अनुपदेशात् । पठतः । पठन्ति ॥ ह्नुङ् और इङ् वर्जित तास् प्रत्यय, अनुदात्तेत् धातु ङित् धातु और अनुपदेश धातु उक्त धातुओं से परे जो लसार्वधातुक संज्ञक लकार के स्थान में तिप् आदि प्रत्यय वे अनुदात्त हों ॥१८२॥

## आदिः सिचोऽन्यतरस्याम् ॥१८३॥

आदिः[१], सिचः[६], अ०(अ) म् । सिजन्तस्यादिरुदात्तो वा स्यात् । माहि कार्षम् । माहि कार्षम् ॥ सिच् प्रत्यय के आदि को विकल्प से उदात्त हो ॥१८३॥

## स्वपादिहिंसामच्यनिटि ॥१८४॥

स्व०म्[६], अचि०[७], अटि[७]। स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपन्ति । स्वपन्ति ॥हिंसन्ति । हिंसन्ति ॥ अजादि अनिट् लसार्वधातुक परे हो तो स्वपादि और हिंस धातु के आदि को विकल्प से उदात्त हो ॥ १८४ ॥

## अभ्यस्तानामादिः ॥१८५॥

अ० म्[६], आदिः[१] । अनिट्यजादौ लसार्वधातुकपरे अभ्यस्तानामादिरुदात्तः स्यात् । ददति । ददतु । जाग्रति ॥ अजादि अनिट् लसार्वधातुक परे हो तो अभ्यस्त संज्ञक धातुओं के आदि का उदात्त हो ॥१८५॥

## अनुदात्ते[७] च[अ] ॥१८६॥

अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः स्यात् ॥ ददाति । दधाति । मिमीते ॥ उदात्त जिसमें न हो ऐसा लसार्वधातु के परे हो तो अभ्यस्तों का आदि उदात्त हो ॥१८६॥

## सर्वस्य[६] सुपि[७] ॥१८७॥

सुपि परे सर्वशब्दस्यादिरुदात्तः स्यात् । सर्वः । सर्वौ । सर्वे ॥ सुप् परे हो तो सर्वशब्द का आदि उदात्त हो ॥ १८७ ॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां[६] प्रत्ययात्[५] 'पूर्वंपिति[७] ॥१८८॥

भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं स्यात् । बिभेति । जिह्रेति । बिभर्ति । जुहोति । ममत्तुनः परिज्मा । मदेर्बहुलं छन्दसीति विकरणस्य श्लुः । जजन । विन्धम् । दधनत् । दरिद्राति । जागर्ति ॥ पित् लसार्वधातुक परे हो तो भी आदि अभ्यस्त संज्ञकों को प्रत्यय से पूर्व उदात्त हो ॥ १८८ ॥

## लिति[७] ॥ १८९ ॥

लिति प्रत्ययात्पूर्वमुदात्तं स्यात्। चिकीर्षकः। जिहीर्षकः॥ लित् प्रत्यय परे हो तो प्रत्यय से पूर्व अक्षर उदात्त हो ॥१८९॥

## आदिर्णमुल्यन्यतरस्याम् ॥ १९० ॥

आदिः[१], ण० लि[७], अ० म् (अ)। णमुलि परे अभ्यस्तानामादिरुदात्तो वा स्यात्। लोलूयं लोलूयम्। लोलूयं लोलूयम्॥ णमुल् प्रत्यय परे हो तो अभ्यस्तों का आदि अक्षर उदात्त हो ॥ १९० ॥

## अचः[६] कर्तृयकि[७] ॥ १९१ ॥

उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा स्यात्। लूयते केदारः स्वयमेव। लूयते केदारः स्वयमेव॥ कर्त्ता में यक् परे हो तो उपदेश में जो अजन्त धातु उनका आदि विकल्प से उदात्त हो ॥१९१॥

## थलि च सेटीडन्तो वा ॥ १९२ ॥

थलि[७], च(अ) सेटि[७], इट्[१], अन्तः[१], वा(अ)। सेटि थलन्ते परे इडुदात्तः, अन्तो वा आदि वा स्यात्। लुलविथ। अत्र चत्वारोऽपि पर्यायेणोदात्ताः। लुलविथ। लुलविथ। लुलविथ॥ सेट् थल् परे हो तो इट् को उदात्त हो, अन्त और आदि को विकल्प से हो ॥ १९२ ॥

## ञ्नित्यादिर्नित्यम् ॥ १९३ ॥

ञ्निति[७], आदिः[१], नि०म्[१]। ञिति निति चादिरुदात्तो नित्यं स्यात्। (गर्गादिभ्यो यञ्) गार्ग्यः। वात्स्यः। (वासुदेवार्जुनाभ्यां वुन्) वासुदेवकः। अर्जुनकः॥ ञित् और नित् प्रत्यय परे हो तो आदि अक्षर उदात्त हो ॥१९३॥

## आमन्त्रितस्य[६] च[अ] ॥ १९४ ॥

आमन्त्रितस्यादिरुदात्तः स्यात्। देवदत्तः। देवदत्तौ। देवदत्ताः। आमन्त्रित का आदि उदात्त हो ॥ १९४ ॥

## पथिमथोः[६] सर्वनामस्थाने[७] ॥ १९५ ॥

सर्वनामस्थाने परे पथिमथोरादिरुदात्तः स्यात्। पन्थाः। पन्थानौ। पन्थानः॥ सर्वनामस्थान परे हो तो पथिन् और मथिन शब्द का आदि अक्षर उदात्त हो ॥१९५॥

## अन्तश्च तवै युगपत् ॥ १९६ ॥

अन्तः[१], च(अ) तवै[७], यु०(अ) तवै प्रत्यान्तस्याद्यन्तौ युगपदाद्युदात्तौ स्याताम्। कर्त्तवै, हर्त्तवै॥ तवै प्रत्ययान्त के आदि और अन्त को एक साथ आदि उदात्त हो॥

## क्षयो निवासे ॥१९७॥

क्षयः[१], नि० से[७]। निवासेऽर्थे क्षय आदिरुदात्तः स्यात्। क्षये जागृहि प्रपश्यन्॥ निवास अर्थ में क्षय शब्द आदि उदात्त हो ॥१९७॥

## जयः[१] करणम्[१] ॥ १९८ ॥

करणवाची जयशब्दः आद्युदात्तः स्यात् । जयत्यनेन जयोऽश्वः ॥ करणवाची जय शब्द आद्युदात्त हो ॥ १९८ ॥

## [6]वृषादीनां च[अ] ॥१९९॥

आदिरुदात्तः स्यात् । वृषः । जनः । ज्वरः ॥ वृष आदि गणपठित शब्दों का आदि उदात्त हो ॥ १९९ ॥

## सञ्ज्ञायामुपमानम् ॥२००॥

स०म्[7], उ०म्[1] । उपमानशब्दः सञ्ज्ञायामाद्युदात्तः स्यात् । चञ्चेव—चञ्चा । दद्रुधिका ॥ संज्ञाविषय में उपमान शब्द आद्युदात्त हो ॥२००॥

## निष्ठा च द्व्यजनात् ॥ २०१ ॥

निष्ठा[1], च(अ), द्व्यच्[1], अ० त्[5] । निष्ठान्तस्य द्व्यचः संज्ञायामाद्युदात्तः स्यान्नत्वकारः । दत्तः । गुप्तः । बुद्धः ॥ निष्ठान्त द्व्यच् का संज्ञाविषयमें आदि अक्षर उदात्तहो॥

## शुष्कधृष्टौ[1] ॥ २०२ ॥

इमावाद्युदात्तौ स्याताम् । संज्ञार्थमिदम् । शुष्कः । धृष्टः ॥ संज्ञार्थ में शुष्क और धृष्ट शब्द आद्युदात्त हो ॥२०२॥

## आशितः[1] कर्त्ता[1] ॥ २०३ ॥

कर्तृवाची आशितशब्द आद्युदात्तः स्यात् । आशितो देवदत्तः ॥ कर्तृवाची आशित शब्द आद्युदात्त हो ॥ २०३ ॥

## रिक्ते[7] विभाषा[1] ॥२०४॥

रिक्तशब्दे वादिरुदात्तः स्यात् । रिक्तः रिक्तः॥ रिक्त शब्दमें विकल्पसे आद्युदात्तहो॥

## [7]जुष्टार्पिते च[अ] च्छन्दसि[7] ॥ २०५ ॥

इमे शब्दरूपे छन्दसि वाद्युदात्ते स्याताम् । जुष्टः । जुष्टः । अर्पितः । अर्पितः ॥ छन्द विषय में जुष्ट और अर्पित शब्द विकल्प से आद्युदात्त हों ॥ २०५ ॥

## नित्यं[2] मन्त्रे[7] ॥२०६॥

जुष्ट अर्पित इमे शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्याताम् । जुष्टं देवानामर्पितं पितॄणाम् ॥ मन्त्र विषय में जुष्ट और अर्पित शब्द नित्य आद्युदात्त हों ॥ २०६ ॥

## युष्मदस्मदोर्ङसि ॥ २०७ ॥

यु०दोः[6], ङसि[7] । आदिरुदात्तः स्यात् । तव स्वम् । मम स्वम् ॥ ङस् विभक्ति परे हो तो युष्मद् और अस्मद् शब्द का आदि उदात्त हो ॥२०७॥

## ङयि[7] च[अ] ॥ २०८ ॥

युष्मदस्मदोर्ङयि आदिरुदात्तः स्यात् । तुभ्यम् । मह्यम् ॥ ङे विभक्ति परे हो तो भी युष्मद् और अस्मद् शब्द के आदि को उदात्त हो ॥२०८॥

## यतोऽनावः ॥ २०९ ॥

यतः[6], अनावः[6] । यत्प्रत्ययान्तस्य द्व्यचः आदिरुदात्तः स्यात् । नावं विना । चेयम् ।

जेयम् । कण्ठ्यम् । ओष्ठ्यम् ॥ नौ शब्द से भिन्न शब्द परे होतो यत् प्रत्ययान्त का आदि उदात्त हो ॥ २०९ ॥

## ईडवन्दवृशंसदुहां[१] ण्यतः[२] ॥ २१० ॥

एषां ण्यदन्तानामादिरुदात्तः स्यात् । ईड्यः । वन्द्यम् । वार्यम् । शंस्यम् । दोह्या धेनुः ॥ ईड, वन्द, वृ, शंस और दुह इन ण्यत् प्रत्ययान्तों का आदि उदात्त हो ॥२१०॥

## [२]विभाषा वेण्विन्धानयोः[६] ॥ २११ ॥

अनयोरादिरुदात्तो वा । वेणुः । वेणुः । इन्धानः । इन्धानः ॥ वेणु और इन्धान शब्द का आदि उदात्त हो विकल्प से ॥ २११ ॥

## त्यागरागहासकुहश्वठक्रथानाम्[६] ॥ २१२ ॥

एषामादिरुदात्तो वा स्यात् । त्यागः । त्यागः । रागः । रागः । हासः । हासः । कुहः । कुहः । श्वठः । श्वठः । क्रथः । क्रथः ॥ त्यागादि शब्दों का विकल्प से आदि अक्षर उदात्त हो ॥ २१२ ॥

## उपोत्तमं[१] रिति[७] ॥ २१३ ॥

रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यात् । करणीयम् । हरणीयम् । पटुजातीयः । मृदुजातीयः ॥ रित्प्रत्ययान्त में उपोत्तम ( अन्त के समीपस्थ ) उदात्त हो ॥ २१३ ॥

## चङ्यन्यतरस्याम् ॥ २१४ ॥

चङि[७], अ० म् (अ) । चङन्ते धातावुपोत्तममुदात्तो वा स्यात् । मह्चीकरताम् मह्चीकरताम् ॥ चङ् प्रत्यय परे होतो उपोत्तम विकल्प से उदात्त हो ॥ २१४ ॥

## मतोः पूर्वमात् संज्ञायां स्त्रियाम् ॥ २१५ ॥

मतोः[५], पूर्वम्[१], आत्[५], स०[७] म्, स्त्रियाम्[७] । मतोः पूर्वमाकार उदात्तः स्यात् । स्त्रीनाम्नि । उदुम्बरावती पुष्करावती ॥ मतुप् प्रत्यय से पूर्व आकार उदात्त हो यदि वह मत्वन्त स्त्रीलिङ्ग संज्ञा हो तो ॥ २१५ ॥

## अन्तोऽवत्याः ॥ २१६ ॥

अन्तः[१], अवत्याः[६] । अवतीशब्दान्तस्य सञ्ज्ञायामन्त उदात्तः स्यात् । अजिरवती । खदिरवती । हंसवती ॥ संज्ञा विषय में अवतीशब्दान्त का अन्त उदात्त हो ॥ २१६ ॥

## ईवत्याः[६] ॥ २१७ ॥

ईवत्यन्तस्यान्त उदात्तः स्यात् । अहीवती । मुनीवती ॥ ईवती शब्द का अन्त उदात्त हो ॥ २१७ ॥

## चौ[७] ॥ २१८ ॥

लुप्ताकारेऽञ्चतौपरे पूर्वस्यान्तोदात्तः स्यात् । दधीचः पश्य । दधीचा ॥ लुप्तनकार अञ्चति परे हो तो पूर्व को अन्तोदात्त हो ॥ २१८ ॥

## समासस्य[६] ॥ २१९ ॥

समासस्यान्त उदात्तः स्यात् । राजपुरुषः । छात्रकम्बलः । राजदृषत् । ब्राह्मणसमित् ॥ समास का अन्त अक्षर उदात्त हो ॥ २१९ ॥ इति षष्ठाध्यायस्य प्रथमः पादः ॥

# अथ षष्ठाऽध्यायस्य द्वितीयः पादः ।

## बहुव्रीहौ[7] प्रकृत्या[3] पूर्वपदम्[1] ॥ १ ॥

बहुव्रीहौ समासे उदात्तस्वरितयोगिपूर्वपदं प्रकृत्या स्यात् । सत्यश्चित्र अश्वस्तमः ॥ बहुव्रीहि समास में पूर्वपद प्रकृति से ( ज्यों का त्यों ) रहे ॥१॥

## तत्पुरुषे[7] तुल्यार्थतृतीयासप्तम्युपमानाऽव्ययद्वितीयाकृत्याः[1] ॥२॥

सप्तैमे पूर्वपदभूतास्तत्पुरुषे प्रकृत्या स्युः । तुल्य श्वेतः सदृश लोहितः । शङ्कुलाखण्डः । किरिकाणः । अक्षशौण्डः । पानशौण्डः । शस्त्रीश्यामा । न्यग्रोधपरिमण्डला । अब्राह्मणः । कुब्रषलः । पानीयशीतम् । भोज्यलवणम् ॥ तत्पुरुष समास में तुल्यार्थ ( समानार्थ ) तृतीयान्त सप्तम्यन्त उपमान वाचक अव्यय, द्वितीयान्त और कृत्य प्रत्ययान्त पूर्वपद को प्रकृति स्वर हो ॥ २ ॥

## वर्णो वर्णेष्वनेते ॥ ३ ॥

वर्णः[1], व० षु[7], अ० ते[7]। वर्णवाचिन्युत्तरपदे एतवर्जिते वर्णवाचि पूर्वपदं प्रकृत्या स्यात् तत्पुरुषे समासे । कृष्णसारङ्गः । लोहितसारङ्गः ॥ तत्पुरुष समास में एतवर्जित वर्णवाची उत्तरपद परे हो तो वर्णवाचक पूर्वपद को प्रकृति स्वर हो ॥ ३ ॥

## गाधलवणयोः[7] प्रमाणे[7] ॥ ४ ॥

अनयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात् । अरित्रघमुदकम् तत्प्रमाणमित्यर्थः । गोलवणम् । यावद् गवेदीयते तावदित्यर्थः ॥ तत्पुरुष समास में गाध और लवण उत्तर पद परे हो तो पूर्व पद को प्रकृति स्वर हो ॥ ४ ॥

## दायाद्यं[1] दायादे[7] ॥ ५ ॥

तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृत्याऽस्यात् । विद्यादायादः । धनदायादः ॥ तत्पुरुष समास में दायाद उत्तरपद परे हो तो दयाद वाचक पूर्वपद को प्रकृति स्वर हो ॥ ५ ॥

## प्रतिबन्धि[1] चिरकृच्छ्रयोः[7] ॥ ६ ॥

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृत्या स्यात् । गमनचिरम् । गमनकृच्छ्रम् । गमनं हि कारण विकलतया चिरकालभावि ।कृच्छ्रयोगि वा प्रतिबन्धि जायते ॥ तत्पुरुष समास में चिर और कृच्छ्र उत्तर पद परे होतो प्रतिबन्धिवाची पूर्व पद को प्रकृति स्वर हो ॥ ६ ॥

## [7]पदेऽपदेशे[7] ॥ ७ ॥

व्याजवाचिनि पदशब्दे उत्तरपदे पूर्वपदं प्रकृत्या स्यात् तत्पुरुषे । मूत्रपदेन प्रस्थितः । उच्चारपदेन प्रस्थितः ॥ अपदेश (बहाना) वाची तत्पुरुष समासमें पद शब्द उत्तरपद परे होतो पूर्वपद को प्रकृति स्वर हो ॥७॥

## निवाते[7] वातत्राणे[7] ॥८॥

निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात्। कुटी निवातम्। शमीनिवातम्॥ वातत्राण (समीप) वाचक तत्पुरुष समास में निवात शब्द उत्तर पदपरे होतो पूर्वपद को प्रकृति स्वर हो॥ ८॥

## शारदेऽनार्त्तवे ॥९॥

ऋतौ भवमार्त्तवम्। तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे समासे पूर्वपदं प्रकृति स्वरं स्यात्। रज्जुशारदमुदकम्। दृषत् शारदाः सक्तवः। शारदशब्दोऽयं नूतनार्थः। तस्यास्वपदविग्रहः। रज्जोः सद्य उद्धृतम्॥ अनार्श वाची तत्पुरुष समास में शारद शब्द उत्तरपद परे होतो पूर्वपद के प्रकृति स्वर हो॥९॥

## अध्वर्यकषायोर्जातौ ॥१०॥

अ० योः, जातौ। अनयोः परतो जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृति स्वरं स्यात्। प्राच्याध्वर्युः। कलापाध्वर्युः कठाध्वर्युः। दौवारिककषायम्॥ जाति वाची तत्पुरुष समासमें अध्वर्यु और कषाय उत्तरपद परे होतो पूर्वपद को प्रकृति स्वर हो॥

## सदृशप्रतिरूपयोः सादृश्ये ॥ ११॥

अनयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात्। पितृसदृशः। मातृसदृशः। पितृप्रतिरूपः। मातृप्रतिरूपः॥ सादृश्य वाची तत्पुरुष समास में सदृश और प्रतिरूप उत्तरपद परे होतो पूर्वपद को प्रकृति स्वर हो ॥११॥

## द्विगौ प्रमाणे ॥१२॥

द्विगावुत्तरपदेपरे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृति स्वरं स्यात्। प्राच्यसप्तसमः। गान्धारि सप्तसमः॥ प्रमाणवाची तत्पुरुष समास में द्विगु उत्तरपद परे हो तो पूर्वपद को प्रकृति स्वर हो ॥१२॥

## गन्तव्यपण्यं वाणिजे ॥ १३ ॥

वाणिजशब्देपरे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृति स्वरं स्यात्। मद्रवाणिजः। काश्मीरवाणिजः। अश्ववाणिजः। सप्तमीसमासः॥ तत्पुरुष समासमें वाणिज शब्द उत्तरपदपरे होतो गन्तव्य वाची और पण्य वाची पूर्वपद को प्रकृति स्वर हो॥१३॥

## मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥१४॥

मात्रादिषु परतो नपुंसकवाचिनी तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं स्यात्। भिक्षायास्तुल्यप्रमाणम् भिक्षामात्रम्। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं सरोऽस्ति किञ्चिन। पाणिन्युपज्ञम् आढ्योपक्रमं प्रासादः। इषुच्छायम्॥ नपुंसक वाची तत्पुरुष समास में मात्रा, उपज्ञा, उपक्रम और छाया उत्तरपद परे हो तो पूर्वपद को प्रकृति स्वर हो॥ १४॥

## सुखप्रिययोर्हिते ॥ १५ ॥

सु० योः, हिते। अनयोः परयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं स्यात्। गमनसुखम्। वचनसुखम्। गमनप्रियम्। वचनप्रियम्॥ हितवाची तत्पुरुष समासमें सुख और प्रिय शब्दपरे होतो पूर्वपद को प्रकृति स्वर हो॥१५॥

## प्रीतौ॰ च॰ ॥१६॥

प्रीतौ गम्यमानायां सुखप्रिययोः परयोस्तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं स्यात्। ब्राह्मणसुखं पायसम्। छात्रप्रियोऽनध्यायः। ब्राह्मणछात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ॥ तत्पुरुष समासमें प्रीति गम्यमान होतो सुख और प्रिय शब्द परे होने पर पूर्वपद को प्रकृति स्वर हो॥ १६॥

## स्वं॰ स्वामिनि॰ ॥१७॥

स्वामिशब्दे परे स्ववाचितत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं स्यात्। गोस्वामी। अश्वस्वामी॥ तत्पुरुषसमास में स्वामि शब्द उत्तर परे हो तो स्ववाचक पूर्वपद को प्रकृति स्वर हो॥१७॥

## पत्यावैश्वर्ये ॥१८॥

पत्यौ॰ ऐ॰र्ये॰। पति शब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृति स्वरं स्यात्। गृहपतिः। सेनापतिः॥ तत्पुरुष समास में ऐश्वर्य वाचक पति शब्द उत्तरपद परे हो तो पूर्वपद को प्रकृति स्वर हो॥ १८॥

## न॰ भूवाक्चिद्दिधिषु॰ ॥१९॥

पतिशब्दे परे ऐश्वर्यवाचिनी तत्पुरुषे समासे नेमानि पूर्वपदानि प्रकृतिस्वराणि स्युः। भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः॥ तत्पुरुष समास में ऐश्वर्य वाची पतिशब्द परे होतो भू, वाक् चित्, और दिधिषू इनके पूर्वपदको प्रकृति स्वर नहो॥१९॥

## वा॰ भुवनम्॰ ॥२०॥

पति शब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे समासे भुवनशब्दः पूर्वपदं वा प्रकृत्या स्यात्। भुवनपतिः। भुवनपतिः॥ तत्पुरुष समासमें ऐश्वर्यवाची पति शब्द परे होतो भुवन शब्दका पूर्वपद विकल्प से प्रकृति स्वर हो॥२०॥

## आशङ्काबाधनेदीयस्सु॰ सम्भावने॰ ॥२१॥

आशङ्क आबाध नेदीयस् इत्येतेषु परेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात्। अस्तित्वाध्यवसायः-सम्भावनम् गमनाशङ्कं वर्त्तते। गमनाबाधम्। गमनेदीयः॥ सम्भावनवाचक तत्पुरुष समास में आशङ्क, आबाध और नेदीयस् परे हो तो पूर्वपद को प्रकृति स्वर हो॥२१॥

## पूर्वे॰ भूतपूर्वे॰ ॥ २२ ॥

पूर्वशब्दे परे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात्। आढ्यो भूत-पूर्वः। आढ्यपूर्वः। दर्शनीयपूर्वः॥ भूत पूर्व वाचक तत्पुरुष समास में पूर्वशब्द परे होतो पूर्वपद को प्रकृतिस्वर हो॥ २२॥

## सविधसनीडसमर्यादसवेशसदेशेषु॰ सामीप्ये॰ ॥ २३ ॥

सविधादिषु परेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृत्या स्यात्। मद्रसविधम्। काश्मीरसनीडम्। गान्धारिसमर्यादम्। मद्रसवेशम्। काश्मीरसदेशम्॥ तत्पुरुष समास में सामीप्यवाची सविध, सनीड, समर्याद, सवेश और सदेश परे होतो पूर्व पद को प्रकृति स्वर हो॥ २३॥

## विस्पष्टादीनि¹ गुणवचनेषु⁷ ॥ २४ ॥

विस्पष्टादीनि पूर्वपदानि गुणवचनेषु परेषु प्रकृतिस्वराणि स्युः । विस्पष्टकटुकम् । विचित्रकटुकम् । व्यक्तकटुकम् ॥ गुणवचन परे होतो विस्पष्टादिकों के पूर्वपद को प्रकृति स्वर हो ॥ २४ ॥

## अज्यावमकन्पापत्सु⁷ भावे⁷ कर्मधारये⁷ ॥ २५ ॥

अज्य अवम कन् इत्यादेशवति पापवाचिनि चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं स्यात् । गमनश्रेष्ठम् । गमनश्रेयः । वचनज्येष्ठम् । वचनज्यायः । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । गमनपापीयः॥ कर्मधारय समासमें अज्य, अवमकन् और पापवाचक उत्तरपद परे होतो भाववाची पूर्वपदको प्रकृतिस्वर हो ॥

## कुमारश्च ॥ २६ ॥

कुमारः¹, च(अ) । कर्मधारये समासे कुमारशब्दः पूर्वपदं प्रकृति स्वरं स्यात् । कुमारश्रमणा । कुमारतापसी ॥ कर्मधारय समासमें कुमारशब्द पूर्वपदको प्रकृति स्वरहो

## आदिः¹ प्रत्येनसि¹ ॥ २७ ॥

प्रतिगतमेनो यस्य सः प्रत्येनाः । प्रत्येनसि परे कर्मधारये समासे कुमार शब्दस्या-दिरुदात्तः स्यात् । कुमारप्रत्येनाः ॥ कर्मधारय समास में प्रत्येनस् उत्तरपद परे हो तो कुमारशब्द को आद्युदात्त स्वर हो ॥ २७ ॥

## पूगेष्वन्यतरस्याम् ॥ २८ ॥

पू०षु⁷, अ०म्(अ) । पूगवाचिन्युत्तरपदे कर्मधारये समासे कुमारशब्दस्य वादिरु-दात्तः स्यात् । कुमारचातकाः । कुमारचातकाः ॥ पूगवाची उत्तरपद परे होतो कर्म-धारय समास में कुमार शब्द को विकल्प से आद्युदात्त स्वर हो ॥ २८ ॥

## इगन्तकालकपालभगालशरावेषु⁷ द्विगौ⁷ ॥ २९ ॥

एषु परेषु द्विगौ समासे पूर्वपदं प्रकृत्या स्यात् । पञ्चारत्नयः प्रमाणमस्य–पञ्चा-रत्निः । दशारत्निः । दशमासान् भूतो भावी वा दशमास्यः । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः ॥ इगन्त कालवाची कपाल भगाल और शराव उत्तरपद परे हो तो द्विगु समास में पूर्वपद को प्रकृति स्वर हो ॥ २९ ॥

## बह्वन्यतरस्याम् ॥ ३० ॥

बहु¹, अ०म्(अ) । द्विगौ समासे पूर्वपदमिगन्तादिषूत्तरपदेषु बहुशब्दो वा प्रकृत्या स्यात् । बह्वरत्निः । बह्वरत्निः । बहुमास्यः । बहुमास्यः । बहुकपालः । बहुकपालः । बहुभगालः । बहुभगालः । बहुशरावः । बहुशरावः ॥ इगन्त, काल कपाल भगाल और शराव उत्तरपद परे होतो द्विगु समास में बहुपूर्वपद को विकल्प से प्रकृति स्वर हो ॥

## दिष्टिवितस्त्योश्च ॥ ३१ ॥

दि०योः⁷, च(अ) । द्विगौ समासेऽनयोः परतः पूर्वपदं प्रकृत्या वा स्यात् । पञ्चदिष्टिः । पञ्चदिष्टिः । पञ्चवितस्तिः । पञ्चवितस्तिः ॥ द्विगु समास में दिष्टि और वितस्ति शब्द उत्तरपद परे हों तो पूर्वपद को विकल्प से प्रकृति स्वर हो ॥ ३२ ॥

## सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥

स०मी[1], सि०षु[3], अ०त्[4] । अकालवाचिसप्तम्यन्तं पूर्वपदं प्रकृत्या स्यात् सिद्धादिषु परेषु । काम्पिल्यसिद्धः । आतपशुष्कः । भ्राष्ट्रपक्वः । चक्रबन्धः ॥ सिद्ध शुष्क पक्व और बन्ध उत्तरपद परे हों तो कालवाची से भिन्न सप्तम्यन्त पूर्वपद को प्रकृतिस्वर हो ॥ ३२ ॥

## [1]परिप्रत्युपापावर्ज्यमानाऽहोरात्रावयवेषु[3] ॥ ३३ ॥

इमे प्रकृत्या स्युः, वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे । परित्रिगर्तं वृष्टो देवः । प्रतिपूर्वाह्णम् । उपापराह्णम् । अपत्रिगर्त्तम् ॥ वर्ज्यमानवाचक अहरवयववाचक और रात्र्यवयव वाचक उत्तरपद परे हों तो परि प्रति उप और अप पूर्वपद को प्रकृति स्वर हो ॥ ३३ ॥

## [7]राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु[7] ॥ ३४ ॥

राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्त्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या स्यात् । श्वाफल्कचैत्रकरोधकाः । शिनिवासुदेवाः ॥ अन्धक और वृष्णि अर्थों में राजन्य वाचक बहुवचनान्तों का जो द्वन्द्व उस में पूर्वपद को प्रकृतिस्वर हो ॥ ३४ ॥

## सङ्ख्या[1] ॥ ३५ ॥

द्वन्द्वसमासे सङ्ख्यावाचि पूर्वपदं प्रकृत्या स्यात् । एकादश । द्वादश ॥ द्वन्द्व समास में सङ्ख्यावाचक पूर्वपद को प्रकृतिस्वर हो ॥ ३५ ॥

## आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥

आ० नः[1], च (अ), अ० सी[1] । आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या स्यात् । पाणिनीयरौढीयाः ॥ आचार्य्य जिसमें अमुख्य हो ऐसे अन्तेवासी वाचकों का जो द्वन्द्व उसमें पूर्व पद को प्रकृतिस्वर हो ॥ ३६ ॥

## कार्त्तकौजपादयश्च ॥ ३७ ॥

का० यः[1], च (अ) । एषां द्वन्द्वे पूर्वपदं प्रकृत्या स्यात् । कार्त्तकौजपौ । सावर्णिमाण्डूकेयौ ॥ द्वन्द्व समासमें कार्त्तकौजपादि गणपठित शब्दोंके पूर्वपदको प्रकृतिस्वर हो॥

## महान्[1] व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु[7]

व्रीह्यादिषु दशसु परेषु महच्छब्दः प्रकृत्या स्यात । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाजाबालः । महाभारः । महाभारतः । महाहैलिहिलः । महारौरवः । महाप्रवृद्धः ॥ व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल रौरव और प्रवृद्ध शब्द परे हों तो महान् पूर्वपद को प्रकृतिस्वर हो ॥ ३८ ॥

## क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

क्षु०कः[1], च(अ) वै० वे[7] । वैश्वदेवे परे क्षुल्लको महांश्च पूर्वपदं प्रकृत्या स्यात् । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् ॥ वैश्वदेव उत्तरपद परे हो तो क्षुल्लक ( अल्प ) और महान् पूर्वपद को प्रकृतिस्वर हो ॥ ३९ ॥

## उष्ट्रः[1] सादिवाम्योः[7] ॥ ४० ॥

सादिवाम्योरुत्तरपदयोः उष्ट्रशब्दः पूर्वपदं प्रकृत्या स्यात् । उष्ट्रसादी । उष्ट्रवामी ॥ सादिन् (सवार) और वामी (अश्वी) उत्तर पद परे हो तो पूर्वपद उष्ट्रशब्द को प्रकृति स्वर हो ॥ ४० ॥

## गौः[1] सादसादिसारथिषु[7] ॥ ४१ ॥

एषूत्तरपदेषु गोशब्दः पूर्वपदं प्रकृत्या स्यात् । गोसादः । गोसादिः । गोसारथिः ॥ सादसादि और सारथि उत्तरपद परे हो तो पूर्वपद गो शब्द को प्रकृति स्वर हो ॥४१॥

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा[1], पारेवडवा[1], तैतिलकद्रूः [1]पण्यकम्बलोदासीभाराणां[6] च[अ] ॥४२॥

एतेषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या स्यात् । कुरूणां गार्हपतम्–कुरुगार्हपतम् । कुरुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः । (वृजेरितिवाच्यम्)॥ वृजीनां गार्हपतम्=वृजिगार्हपतम् । वृजिशब्दः आद्युदात्तः । रिक्तोगुरुः–रिक्तगुरुः । असूता जरती–असूतजरती । अश्लीला दृढरूपा–अश्लीलदृढरूपा । अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः । श्रीर्यस्यास्ति तत् श्लीलम् । सिध्मादित्वाल्लच् । कपिलादित्वाल्लत्वम् पारेवडवेव–पारेवडवा । निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दः घृतादित्वादन्तोदात्तः । तैतिलिनां कद्रूः । तितिलिनोऽपत्यं छात्रो वा तैतिलकद्रूः । इत्यण्णन्तः पण्यशब्दो यदन्तत्वादाद्युदात्तः । पण्यकम्बलः । पण्यशब्दः यदन्तत्वादाद्युदात्तः । (सञ्ज्ञायामिति वाच्यम) अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव । दास्या भारो दासीभारः । देवहूतिः । देवजूतिः । देवसूतिः । आकृतिगणोऽयम् ॥ कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल, समासान्त शब्दों का और दासीभरादिकों के पूर्वपद को प्रकृति स्वर हो ॥ ४२ ॥

## चतुर्थी[1] तदर्थे[7] ॥ ४३ ॥

चतुर्थ्यन्तार्थाययत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या स्यात् । यूपदारु । कुण्डलपिरण्यम् ॥ तदर्थ उत्तरपद परे हो तो चतुर्थ्यन्त पूर्वपद को प्रकृतिस्वर हो ॥

## अर्थे[7] ॥ ४४ ॥

अर्थे परे चतुर्थ्यन्तं प्रकृतया स्यात् । मात्रे इदम्–मात्रर्थम् । पित्रर्थम् ॥ अर्थ शब्द उत्तरपद परे हो तो चतुर्थ्यन्त पूर्वपद को प्रकृतिस्वर हो ॥ ४४ ॥

## क्ते[7] च[अ] ॥ ४५ ॥

क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या स्यात् । गोहितम् । मनुष्यहितम् । क्तान्त उत्तरपद परे हो तो पूर्वपद प्रकृतिस्वर से रहे ॥ ४५ ॥

## [7]कर्मधारयेऽनिष्ठा[1] ॥ ४६ ॥

कर्मधारये समासे क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या स्यात् । श्रेणिकृताः । पूगकृताः॥ श्रेणिशब्द आद्युदात्तः । पूगशब्दोऽन्तोदात्तः ॥ कर्मधारयसमास में क्तान्त उत्तरपद परे हो तो पूर्वपद को प्रकृतिस्वर हो ॥ ४६ ॥

## अहीने[7] द्वितीया[1] ॥ ४७ ॥

अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं पूर्वपदं प्रकृत्या स्यात् । कष्टश्रितः । ग्रामगतः । कष्टशब्दोऽन्तोदात्तः । ग्रामशब्द आद्युदात्तः ॥ अहीन वाची समास में क्तान्त परे हो तो द्वितीयान्त पूर्वपद को प्रकृतिस्वर हो ॥ ४७ ॥

## तृतीया[1] कर्मणि[7] ॥ ४८ ॥

कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या स्यात् । अहिहतः । महाराजहतः ॥ कर्म वाचक क्तान्त परे हो तो तृतीयान्त पूर्वपद को प्रकृति स्वर हो ॥ ४८ ॥

## गतिरनन्तरः ॥ ४६ ॥

गतिः[1], अ० रः[1] । कर्मवाचकेक्तान्ते परेऽव्यवहितो गतिः पूर्वपदं प्रकृत्या स्यात् । प्रकृतः । प्रहृतः ॥ कर्म वाचक क्तान्त परे हो तो अव्यवहित गति संज्ञक पूर्वपद को प्रकृति स्वर हो ॥ ४६ ॥

## [7]तादौ च[अ] निति[7] कृत्यतौ[7] ॥ ५० ॥

तकारादौ निति तु शब्द वर्जिते कृतिपरेऽनन्तरोगतिः प्रकृत्या स्यात् । प्रकर्त्ता । प्रकर्त्तुम् । प्रकृतिः ॥ तु वर्जित तकारादि नित्, कित् प्रत्ययान्त परे हो तो अनन्तर गति को प्रकृतिस्वर हो ॥ ५० ॥

## तवै चान्तश्च युगपत् ॥ ५१ ॥

तवै (अ), च (अ), अन्तः[1], च (अ), यु० त् (अ) । तवै प्रत्ययान्तस्यान्त उदात्तो गतिश्चान्तरः प्रकृत्या युगपच्चेदमुभयं स्यात् । अन्वेतवै । उपसर्गा आद्युदात्ता अभिवर्जम् ॥ तवै प्रत्ययान्त को अन्त उदात्त और अनन्तर गति को प्रकृतिस्वर उक्त दोनों एक समय में हों ॥ ५१ ॥

## अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५२ ॥

अ० न्तः[1], अ० तौ[7], व० ये[7] । अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या स्यात् । प्राञ्चौ । प्राञ्चः ॥ व प्रत्ययान्त अञ्चति परे होतो अनिगन्त गति को प्रकृतिस्वरहो ॥

## न्यधी[1] च[अ] ॥ ५३ ॥

नि, अधि इमौ चाञ्चतौ वप्रत्यये परे प्रकृत्या स्यात् । न्यङ् । न्यञ्चौ । न्यञ्चः । अध्यङ् । अध्यञ्चौ । अध्यञ्चः ॥ व प्रत्ययान्त अञ्चति परे होतो गति संज्ञक नि और अधि शब्द को प्रकृतिस्वर हो ॥ ५३ ॥

## ईषदन्यतरस्याम् ॥ ५४ ॥

ईषत् (अ), अ० म् (अ) । ईषदिदं पूर्वपदं वा प्रकृत्या स्यात् । ईषत्कडारः । ईषत्कडारः ॥ ईषत्पूर्वपद को विकल्प से प्रकृतिस्वर हो ॥ ५४ ॥

## हिरण्यपरिमाणं[1] धने[7] ॥ ५५ ॥

सुवर्णपरिमाणवाचि पूर्वपदं धने वा प्रकृत्या स्यात् । द्विसुवर्णधनम् । द्विसुवर्णधनम् । द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनम् ॥ धनशब्द परे हो तो हिरण्य परिमाण वाचक पूर्वपद को विकल्प से प्रकृति स्वर हो ॥ ५५ ॥

## प्रथमोऽचिरोपसम्पत्तौ ॥ ५६ ॥

प्र० मः[1], अ० तौ[7]। प्रथमशब्दो वा प्रकृत्या स्यादभिनवत्वे। प्रथमवैयाकरणः। प्रथमवैयाकरणः। सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः। प्रथमशब्दश्चित्वादन्तोदात्तः॥ अभिनव गम्यमान हो तो प्रथम पूर्वपद को विकल्प से प्रकृति स्वर हो॥५६॥

## कतरकतमौ[1] कर्मधारये[7] ॥ ५७ ॥

कर्मधारये समासे वेमौ पूर्वपदं प्रकृत्या स्याताम्। कतरकठः। कतरकठः॥ कर्मधारय समास में कतर और कतम पूर्वपद को विकल्प से प्रकृतिस्वर हो॥५७॥

## आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥

आर्यः[1], ब्रा० योः[7]। कर्मधारये समासे ब्राह्मणकुमारयोरार्यशब्दः पूर्वपदं वा प्रकृत्या स्यात्। आर्यब्राह्मणः आर्यब्राह्मणः। आर्यकुमारः। आर्यकुमारः। आर्योण्यदन्तत्वादन्तस्वरितः॥ कर्मधारय समास में ब्राह्मण और कुमार शब्द परे हों तो आर्य पूर्वपद को विकल्प से प्रकृतिस्वर हो॥५८॥

## राजा[1] च[अ] ॥ ५९ ॥

कर्मधारये समासे ब्राह्मणकुमारयोः परतोराजा च पूर्वपदं वा प्रकृत्या स्यात्। राजब्राह्मणः। राजब्राह्मणः। राजकुमारः। राजकुमारः॥ कर्मधारय समास में ब्राह्मण और कुमार शब्द परे हो तो राज पूर्वपद को विकल्प से प्रकृतिस्वर हो॥५९॥

## षष्ठी[1] प्रत्येनसि[7] ॥६०॥

षष्ठ्यन्तोराजा प्रत्येनसि परे वा प्रकृत्या स्यात्। राजप्रत्येनाः। राजप्रत्येनाः॥ प्रत्येनस् शब्दपरे हो तो षष्ठ्यन्त राज पूर्वपद को विकल्प से प्रकृतिस्वर हो॥६०॥

## क्ते[7] नित्यार्थे[7] ॥ ६१॥

क्तान्ते परे नित्यार्थे समासे पूर्वपदं वा प्रकृत्या स्यात्। नित्यप्रहसितः। नित्यप्रहसितः सततप्रहसितः। सततप्रहसितः। नित्यशब्दस्त्यबन्त आद्युदात्तः। हसित इति थाथादिस्वरेणान्तोदात्तः॥ नित्यसमास में क्तान्त उत्तरपद परे हो तो पूर्वपद को विकल्प से प्रकृति स्वर हो॥६१॥

## ग्रामः[1] शिल्पिनि[7] ॥६२॥

शिल्पिवाचिनि परे ग्रामशब्दः पूर्वपदं वा प्रकृत्या स्यात्। ग्रामनापितः। ग्रामनापितः। ग्रामशब्द आद्युदात्तः॥ शिल्पि वाचक परे हो तो ग्रामपूर्वपद को विकल्प से प्रकृतिस्वर हो॥६२॥

## राजा[1] च[अ] प्रशंसायाम्[7] ॥६३॥

शिल्पिवाचिनि परे प्रशंसार्थे राजशब्दः पूर्वपदं वा प्रकृत्या स्यात्। राजनापितः राजनापितः। राजकुलालः। राजकुलालः॥ शिल्पिवाचक उत्तरपद परे हो तो प्रशंसा गम्यमान होने पर राजपूर्वपद को विकल्प से प्रकृतिस्वर हो॥६३॥

## आदिरुदात्तः ॥ ६४ ॥

आदिः[1],उ०त्तः[1]। अधिकारोऽयम्। न भूताधिकसंजीवमद्राश्म कज्जलमिति यावत्॥ पूर्वपद को आद्युदात्त स्वर हो यह अधिकार है॥६४॥

## [१]सप्तमीहारिणौ [७]धर्म्येऽहरणे[७] ॥६५॥

सप्तम्यन्तं हारिवाचि च आद्युदात्तं स्याद् धर्म्येपरे । देयं यः स्वीकरोति स हारीत्युच्यते । धर्म्यमित्याचारनियतं देयम् मुकुटे कार्षापणम् । हलेद्विपदिका । याज्ञिकाश्वः । वैयाकरणहस्ती । संज्ञायामिति सप्तमी समासः । कारनाम्नि चेत्यलुक् ॥ हरण वर्जित धर्म्य वाचक उत्तरपद परे हो तो सप्तम्यन्त और हारिवाचक पूर्वपद का आद्युदात्त हो ॥६५॥

## युक्ते[७] च[अ] ॥६६॥

युक्तवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । गोबल्लवः अश्वबल्लवः । कर्त्तव्ये तत्परो युक्त इत्यर्थः ॥ युक्तवाची समासमें पूर्वपदको आद्युदात्त हो ॥६६॥

## [अ]विभाषाऽध्यक्षे[७] ॥६७॥

अध्यक्षशब्दे परे वा पूर्वपदमाद्युदात्तं स्यात् । गवाध्यक्षः । गवाध्यक्षः ॥ अध्यक्ष शब्दपरे होतो पूर्वपद को विकल्प से आद्युदात्तस्वर हो ॥ ६७॥

## [१]पापं च[अ] शिल्पिनि[७] ॥६८

शिल्पिवाचिनि परे पापशब्दो वाद्युदात्तः स्यात् । [१]पापनापितः । पापनापितः । पापकुलालः । पापकुलालः ॥ शिल्पि वाचक उत्तरपदपरे होतो पापशब्द को विकल्प से आद्युदात्त हो ॥ ६८ ॥

## गोत्रान्तेवासिमाणवब्राह्मणेषु[७] क्षेपे[७] ॥६९॥

एषूत्तरपदेषु क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । भार्यासौश्रुतः । सुश्रुताऽपत्यस्य भार्या प्रधानतया क्षेपः । अन्तेवासी । कुमारीदाक्षाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयते त एवं क्षिप्यन्ते । भिक्षामाणवः । भिक्षां लप्स्येऽहमिति माणवः । भय ब्राह्मणः । भयेन ब्राह्मणः सम्पद्यते ॥ क्षेपवाचक समासमें गोत्रवाची अन्तेवासिवाची माणव और ब्राह्मण परे होतो पूर्वपद को आद्युदात्त हो ॥६९॥

## अङ्गानि[१] मैरेये[७] ॥७०॥

मद्यविशेषो मैरेयः । मैरेयशब्दे परे तदङ्गवाचिनि पूर्वपदान्याद्युदात्तानि स्युः । गुडमैरेयः । मधुमैरेयः ॥ मैरेय शब्द परे होतो तदङ्गवाची पूर्वपदका आद्युदात्त स्वरहो ॥

## भक्ताख्यास्तदर्थेषु ॥७१॥

भ० ख्याः[१], त० षु[७] । भक्तमन्नं तदाख्यास्तद्वाचिनः शब्दास्तदर्थेषु परेषु आद्युदात्ता स्युः । भक्ष्मन्नम् । भिक्षाकंसः । भाजीकंसः । भिक्षादयोऽन्नविशेषाः ॥ तदर्थ उत्तरपद परे होतो भक्तवाचक पूर्वपदको आद्युदात्तस्वर हो ॥७१॥

## गोविडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥

गो० षु[७], उ०[७] ने । गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं स्यात् । धान्यगवः । गोविडालः । तृणसिंहः । सक्तुसैन्धवः । धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः समासः ॥ उपमानवाचक गो, विडाल, सिंह और सैन्धव परे हों तो पूर्वपद को आद्युदात्तस्वर हो ॥७२॥

## ७अकेजीविकार्थे७ ॥७३॥

अकप्रत्ययान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । दन्तलेखकः । अवस्कारशोधकः । रमणीयकारकः । दन्तलेखनादिभिर्येषां जीविका त एवोच्यन्ते । नित्यं क्रीडेति समासः ॥ जीविकार्थवाचक समासमें अकप्रत्यान्त उत्तरपद परे होतो पूर्वपदको आद्युदात्तस्वर हो ॥७३॥

## ६प्राचां क्रीडायाम्७ ॥७४॥

प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वपदमाद्युदात्तं स्यात् । उद्दालकपुष्पभञ्जिका । शालभञ्जिका ॥ प्राग्देशियों के क्रीडावाची समास में अकप्रत्यान्त उत्तरपदपरे होतो पूर्वपदको आद्युदात्त स्वर हो ॥ ७४ ॥

## ७अणि नियुक्ते७ ॥७५॥

अणन्ते परे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । छत्रधारः । तूणीधारः । कमण्डलुग्राहः ॥ नियुक्तवाचक समास में अणन्त परे हो तो पूर्वपद को आद्युदात्त स्वर हो ॥७५॥

## ७शिल्पिनि ७चाऽकृञः५ ॥७६॥

शिल्पिनि वाचिनि समासे अणन्ते परे पूर्वपदमाद्युदात्तं स्यात चेदण् कृञः परो नो । तन्तुवायः । वालवायः ॥ शिल्पिवाचक समास में कृञ् से भिन्न अणन्त परे हो तो पूर्वपद को आद्युदात्तस्वर हो ॥ ७६ ॥

## संज्ञायाम्७ ॥ ७७ ॥

संज्ञायां विषयेऽणन्ते परे ऽकृञः पूर्वपदमाद्युदात्तं स्यात् । तन्तुवायो नाम कृमिः ॥ संज्ञा विषय में कृञ् से भिन्न अणन्त परे हो तो पूर्वपद को आद्युदात्त स्वर हो ॥

## गोतन्तियवं१ पाले७ ॥ ७८ ॥

पालशब्दे परे गवादीनि पूर्वपदान्याद्युदात्तानि स्युः । गोपालः । तन्तिपालः । यवपालः । तन्तिर्वत्सानां बन्धनरज्जुः । पाल शब्द परे हो तो तन्ति और यव पूर्वपद को आद्युदात्त स्वर हो ॥ ७८ ॥

## णिनि७ ॥ ७९ ॥

णिन्नन्ते परे पूर्वपदमाद्युदात्तं स्यात् । पुष्पहारी । फलहारी । पर्णहारी । णिन्नन्त परे हो तो पूर्वपद को आद्युदात्त स्वर हो ॥ ७९ ॥

## उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥

उ० म्१, श० तौ७, एव (अ) । उपमानवाचि पूर्वपदं णिन्यन्ते आद्युदात्तं स्यात् । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । खरनादी ॥ शब्दार्थ प्रकृति ही में णिन्नन्त परे हो तो उपमान वाची पूर्वपद को आद्युदात्त स्वर हो ॥ ८० ॥

## युक्तारोह्यादयश्च ॥ ८१ ॥

यु० यः१ च (अ) । इमे समासिता आद्युदात्ताः स्युः । युक्तारोही । आगतयोधी ।

आगतवञ्ची । आगतनर्दी । आगतप्रहारी ॥ युक्तारोही आदि गण पठित शब्दों को आद्युदात्त स्वर हो ॥ ८१ ॥

## दीर्घकाशतुषभ्राष्ट्रवटं[1] जे[7] ॥ ८२ ॥

इमानि जे परे आद्युदात्तानि स्युः । कुटीजः । काशजः । तुषजः। भ्राष्ट्रजः । वटजः॥ जकार परे हो तो दीर्घान्त, काश, तुष, भ्राष्ट्र और वट पूर्वपदको आद्युदात्त स्वर हो ॥

## [7]अन्त्यात्पूर्वं[1] बह्वचः[6] ॥ ८३ ॥

बह्वचः पूर्वपदस्यान्त्यात् पूर्वमुदात्तं स्याज्जे परे । उपसरजः । आमलकीजः॥ जकार परे हो तो बह्वच् पूर्वपद के अन्त्यच् से पूर्व को उदात्त स्वर हो ॥ ८३ ॥

## [7]ग्रामेऽनिवसन्तः[1] ॥ ८४ ॥

ग्रामे परे पूर्वपदमुदात्तं स्यात्, तच्चेन्निवसद्वाचि न । मल्लग्रामः । छात्रग्रामः । वणिग्ग्रामः । ग्रामशब्दोऽत्रसमूहवाची । देवग्रामः । देवस्वामिक इत्यर्थः ॥ ग्रामशब्द परे हो तो निवसद्वाची से इतर पूर्वपद को आद्युदात्त स्वर हो ॥ ८४ ॥

## घोषादिषु[7] च[अ] ॥ ८५ ॥

घोषादिषु परेषु पूर्वपदमाद्युदात्तं स्यात् । दाक्षिघोषः । दाक्षिकटः । दाक्षिबदरी ॥ घोषादि गणपठित शब्द परे हों तो पूर्व पद को आद्युदात्त स्वर हो ॥ ८५ ॥

## छात्र्यादयः[1] शालायाम्[7] ॥ ८६ ॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ताः स्युः । छात्रिशाला । व्याडिशाला ॥ शालाउत्तरपद परे हो तो छात्र्यादि गण पठित शब्दों को आद्युदात्त स्वर हो ॥८६॥

## प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ ८७ ॥

प्रस्थे[7], अ०[1] म्, अ०म्[6] । प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् । इन्द्रप्रस्थः । कुण्डप्रस्थः ॥ प्रस्थ शब्द उत्तरपद परे हों तो कर्क्यादि वर्जित अवृद्ध पूर्वपद को आद्युदात्त स्वर हो ॥ ८७ ॥

## मालादीनां[6] च[अ] ॥ ८८ ॥

प्रस्थ उत्तरपदे मालादीनामाद्युदात्तः स्यात् । मालाप्रस्थः । शालाप्रस्थः ॥ प्रस्थशब्द उत्तरपद परे हो तो मालादि गणपठित शब्दों को आद्युदात्त स्वर हो ॥ ८८ ॥

## अमहन्नवं[1] [7]नगरेऽनुदीचाम्[6] ॥ ८९ ॥

नगरे परे महन्नवन् वर्जितं पूर्वपदमाद्युदात्तं स्यात् । तच्चेदुदीचां नो । ब्रह्मनगरम् । विराटनगरम् ॥ उत्तर देशीय वर्जित नगरपरे हो तो महत् और नव शब्द भिन्न पूर्वपद को आद्युदात्त स्वर हो ॥ ८९ ॥

## [7]अर्मे [अ]चाऽवर्णं द्व्यच्[1] त्र्यच् ॥ ९० ॥

अर्मेपरे द्व्यच् त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं स्यात् । दत्तार्मम् । गुप्तार्मम् । कुक्कुटार्मम् ॥ अर्मशब्द परे हो तो अवर्णान्त द्व्यच् और त्र्यच् पूर्वपद को आद्युदात्त स्वर हो ॥ ९० ॥

## नभूताधिकसञ्जीवमद्राश्मकज्जलम्[1] ॥ ९१ ॥

अर्मे परे नैमान्याद्युदात्तानि स्युः। भूतार्मम्। अधिकार्मम्। सञ्जीवार्मम्। मद्राश्मग्रहणं सङ्घातविग्रहीतार्थम्। मद्रार्मम्। अश्मार्मम् मद्राश्मार्मम्। कज्जलार्मम्। आद्युदात्त प्रकरणे दिवो द्यावादीनां छन्दस्युप सङ्ख्यानम्) दिवोदासाय गायत ॥ अर्मशब्द परे होतो भूत, अधिक, संजीव, मद्र, अश्मन् और कज्जल पूर्वपद को आद्युदात्त स्वर न हो ॥ ९१ ॥

## अन्तः[1] ॥ ९२ ॥

अधिकारोऽयम्। प्रागुत्तरपादिरिति यावत् ॥ पूर्वपद को अन्तोदात्त स्वर हो यह अधिकार उत्तरपदादि (६।२।११०) सूत्र पर्यन्त है ॥ ९२ ॥

## सर्वं[1] गुणकार्त्स्न्ये[7] ॥ ९३ ॥

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्त्तमानमन्तोदात्तं स्यात्। सर्वश्वेतः। सर्वकृष्णः। सर्वमहान्। आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्त्तते ॥ गुणकार्त्स्न्य अर्थ में वर्त्तमान सर्व पूर्वपद को अन्तोदात्त स्वर हो ॥ ९३ ॥

## संज्ञायां[7] गिरिनिकाययोः[7] ॥ ९४ ॥

संज्ञायां विषये एतयोः परतः पूर्वपदमन्तोदात्तं स्यात्। अञ्जनागिरिः। मौण्डनिकायः वनगिर्योः संज्ञायामिति दीर्घत्वम् ॥ संज्ञा विषय में गिरि और निकाय परे हो तो पूर्वपद को अन्तोदात्तस्वर हो ॥ ९४ ॥

## कुमार्यां[7] वयसि[7] ॥ ९५ ॥

कुमार्यामुत्तरपदे वयसि गम्ये पूर्वपदमन्तोदात्तं स्यात्। वृद्धकुमारी। जरत्कुमारी। कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः ॥ कुमारीशब्द उत्तरपदपरे होतो वयस् गम्यमानहोनेपर पूर्वपदको अन्तोदात्तस्वर हो ॥९५॥

## उदकेऽकेवले[7] ॥ ९६ ॥

अकेवलं मिश्रं तद्वाचिनि समासे उदके परे पूर्वपदमन्तोदात्तं स्यात्। गुडमिश्रमुदकम्—गुडोदकम्। तिलोदकम् ॥ अकेवल (मिश्र) वाचक समास में उदक परे होतो पूर्वपदको अन्तोदात्तस्वर हो ॥९६॥

## द्विगौ[7] क्रतौ[7] ॥ ९७ ॥

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं स्यात्। गर्गत्रिरात्रः ॥ क्रतुवाची समास में द्विगु परे हो तो पूर्वपद को अन्तोदात्तस्वर हो ॥९७॥

## सभायां[7] नपुंसके[7] ॥ ९८ ॥

सभायां परतो नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं स्यात्। पशुसभम्। स्त्रीसभम् ॥ नपुंसक लिङ्ग समासमें सभाशब्द परे होतो पूर्वपदको अन्तोदात्त स्वरहो ९८

## पुरे[7] प्राचाम्[6] ॥ ९९ ॥

पुरशब्दे परे प्राचां देशे पूर्वपदमन्तोदात्तं स्यात्। शिवदत्तपुरम्। देवदत्तपुरम्॥ पुरशब्द परे होतो प्राग्देशियों के मत में पूर्वपद को अन्तोदात्तस्वर हो॥९९॥

## अरिष्टगौडपूर्वे॰ च॰॥१००॥

पुरेपरे अरिष्ट गौडपूर्वे समासे पूर्वपदमन्तोदात्तं स्यात्। अरिष्टपुरम्। गौडपुरम्॥ पुरपरे होतो अरिष्ट और गौड पूर्वक समासमें पूर्वपदको अन्तोदात्त स्वर हो॥१००॥

## न॰ हास्तिनफलकमार्देयाः॰॥१०१॥

पुरेपरे नेमान्यन्तोदात्तानि स्युः। हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदे॰रपत्यमिति शुभ्रादित्वात् ढक्॥ पुरपरे होतो हास्तिन फलक और मार्देय पूर्वपदको अन्तोदात्तस्वर न हो १०१॥

## कुसूलकूपकुम्भशालं॰ बिले॰॥१०२॥

इमानि पूर्वपदानि बिले परे, अन्तोदात्तानि स्युः। कुसूलबिलम्। कूपबिलम्। कुम्भबिलम्। शालाबिलम्॥ बिलपरे होतो कुसूल (कुठिला) कूप, और शाला पूर्वपद को अन्तोदात्त स्वर हो॥१०२॥

## दिक्शब्दा॰ ग्रामजनपदाख्यानचानराटेषु॰॥१०३॥

ग्रामादिषूत्तरपदेषु दिक्शब्दा अन्तोदात्ताः स्युः। पूर्वेषु कामशमी। अपरकृष्ण मृत्तिका। जनपदे। पूर्व पञ्चालाः। आख्याने। पूर्वयायातम्। चानराटे। पूर्वचानराटम्। शब्द ग्रहणं कालवाचि दिक्शब्दस्य परिग्रहार्थम्॥ ग्राम जनपद आख्यान और चानराट उत्तरपद परे होतो दिक्शब्द पूर्वपदको अन्तोदात्तस्वर हो॥ १०३॥

## आचार्योपसर्जनश्चान्तेवासिनि॥१०४॥

आ० तः॰, च(अ) अ० नि॰। आचार्योपसर्जनान्तेवासिनि परे दिक्शब्दा अन्तोदात्ताः स्युः। पूर्वपाणिनीयाः। अपरपाणिनीयाः॥ आचार्य्य जहां उपसर्जन (गौण) हो ऐसे अन्तेवासिवाची परे होतो दिग्वाचक शब्दों को अन्तोदात्तस्वर हो॥ १०४॥

## उत्तरपदवृद्धौ॰ सर्वं॰ च॰॥१०५॥

उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ताः स्युः। सर्वपाञ्चालकः। अपरपाञ्चालकः॥ उत्तरपदस्य (७।३।१०) इस अधिकारमें कथित वृद्धिवाला उत्तरपदपरे होतो सर्व और दिग्वाचक पूर्वपदको अन्तोदात्तस्वर हो॥१०५॥

## बहुव्रीहौ॰ विश्वं॰ संज्ञायाम्॰॥१०६॥

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदभूतः संज्ञायां विषयेऽन्तोदात्तः स्यात्। विश्वदेवः। विश्वयशाः। विश्वमहान्॥ बहुव्रीहि समासमें संज्ञा गम्यमान होने पर विश्वशब्द पूर्वपदको अन्तोदात्त स्वर हो॥१०६॥

## उदरा॰ श्वेषुषु॰॥१०७॥

उदर॰, अश्व इषु इत्युत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वमन्तोदात्तं स्यात्। वृकोदरः। दामोदरः। यौवनाश्वः। महेषुः॥ बहुव्रीहि समास में संज्ञा गम्य-

मान हो और उदर अश्व तथा इषु उत्तरपद परे हों तो पूर्वपद को अन्तोदात्तस्वर हो ॥

## क्षेपे[७] ॥१०८॥

उदरादिषु परेषु पूर्वपदमन्तोदात्तं स्यात् बहुव्रीहौ निन्दायाम् । घटोदरः । कन्दुकाश्वः । अनिघातेषुः ॥ क्षेप गम्यमान हो और उदर अश्व तथा इषु उत्तरपद परे हो तो संज्ञाविषय होनेपर बहुव्रीहि समासमें पूर्वपदको अन्तोदात्तस्वर हो ॥ १०८ ॥

## नदी[१] बन्धुनि[७] ॥१०९॥

बन्धुशब्दे परे नद्यन्तं पूर्वपदमन्तोदात्तं स्यात् बहुव्रीहौ समासे । गार्गीबन्धुः । घातकीबन्धुः ॥ बहुव्रीहि समास में बन्धुशब्दपरे हो तो नद्यन्त पूर्वपदको अन्तोदात्तस्वर हो॥

## निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११०॥

निष्ठ[१], उ०म्[१], अ०(अ) म् । बहुव्रीहि समासे निष्ठान्तं पूर्वपदमन्तोदात्तं वा स्यात् । प्रधौतमुखः । प्रधौतमुखः । प्रक्षालितपादः । प्रक्षालितपादः ॥ बहुव्रीहि समास में उपसर्ग है पूर्व जिसके ऐसे निष्ठान्त पूर्वपद को अन्तोदात्तस्वर हो ॥ ११० ॥

## उत्तरपदादिः[१] ॥१११॥

उत्तरपदाधिकारः, आपादान्तम् । आद्यधिकारस्तु प्रकृत्या भगालमित्यवधिकः ॥ उत्तरपदको आद्युदात्तस्वर हो यह अधिकार कुण्डं वनम् (६।२।१३६) सूत्र तक है ॥१११॥

## कर्णो वर्णलक्षणात् ॥११२॥

कर्णः[१], व० त्[५] । बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तः स्यात् । शुक्लकर्णः । कृष्णकर्णः । दात्रकर्णः । शङ्कुकर्णः ॥ बहुव्रीहि समास में वर्ण और लक्षणवाचकसे परे कर्ण उत्तरपद को आद्युदात्तस्वर हो ॥११२॥

## संज्ञौपम्ययोश्च ॥ ११३॥

स० योः[७], च(अ) । सञ्ज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्णशब्द उत्तरपदमाद्युदात्तं स्यात् । मणिकर्णः । गोकर्णः ॥ संज्ञा और औपम्य अर्थमें जो बहुव्रीहि उससमास में उत्तरपद को आद्युदात्तस्वर हो ॥११३॥

## कण्ठपृष्ठग्रीवाजङ्घं[१] च[अ] ॥११४॥

सञ्ज्ञौपम्ययोर्बहुव्रीहौ समासे कण्ठादीन्युत्तरपदानि आद्युदात्तानि स्युः । शितिकण्ठः । काण्डपृष्ठः । सुग्रीवः । नाडीजङ्घः । औपम्ये । खरकण्ठः । गोपृष्ठः । अश्वग्रीवः । गोजङ्घः ॥ बहुव्रीहि समासमें संज्ञा और औपम्य गम्यमान हो तो कण्ठ पृष्ठ ग्रीवा और जङ्घा उत्तरपदको आद्युदात्तस्वर हो ॥११४॥

## शृङ्गमवस्थायां च ॥११५

शृ०म्[१], अ०म्[७], च(अ)। बहुव्रीहौ समासे शृङ्गशब्दोऽवस्थायां संज्ञौपम्ययोश्चाऽऽद्युदात्तः स्यात् । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयो विशेषोऽवस्था । संज्ञायाम् । ऋष्यशृङ्गः । उपमायाम् । मेषशृङ्गः॥ बहुव्रीहि समास में अवस्था संज्ञा तथा उपमा गम्यमान हो तो शृङ्ग उत्तरपद को आद्युदात्तस्वर हो ॥ ११५ ॥

## नञो जरमरमित्रमृताः ॥११६॥

नञः[५], ज० नाः[१] । नञः पर इमे आद्युदात्ताः स्युः बहुव्रीहौ समासे । अजरः । अमरः । अमित्रः । अमृतः ॥ बहुव्रीहि समास में नञ् से परे जर मर मित्र और मृत उत्तरपद को आद्युदात्तस्वर हो ॥११६॥

## सोर्मनसी अलोमोषसी ॥११७॥

सोः[५], म०सी[१], अ०सी[१]। सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तं स्याद् बहुव्रीहौ समासे । सुकर्मा । सुधर्मा । असन्तम् । सुपयाः । सुवर्चाः सुयशाः ॥ बहुव्रीहि समासमें सु से परे लोमन् और उषस् शब्दको छोड़कर मन्नन्त और असन्तों को आद्युदात्त स्वर हो ॥ ११७ ॥

## क्रत्वादयश्च ॥ ११८॥

क्र० यः[१], च(अ) । सोः परे बहुव्रीहौ समासे क्रत्वादय आद्युदात्ता स्युः । सुक्रतुः । सुदृशीकः ॥ बहुव्रीहि समास में सु से परे क्रत्वादि गणपठित शब्दों को आद्युदात्त स्वर हो ॥ ११८ ॥

## आद्युदात्तं द्व्यच्छन्दसि ॥११९॥

आ०म्[१], द्व्यच्[१], छ०[७]सि । यदाद्युदात्तं द्व्यच् तत् सोरुत्तरं बहुव्रीहौ समासे आद्युदात्तं स्यात् । सुरथामार्ज्जयेम । अधा स्वश्वाः ॥ बहुव्रीहि समासमें तथा छन्दो विषय होने पर सु से परे आद्युदात्त द्व्यच् उत्तरपद को आद्युदात्तस्वर हो ॥ ११९ ॥

## वीरवीर्यौ[१] च[अ] ॥१२०॥

सोः पराविमौ बहुव्रीहौ समासे छन्दस्याद्युदात्तौ स्याताम् । सुवेरेणते । सुवीर्यस्य पतयः ॥ बहुव्रीहि समास में सु से परे वीर और वीर्य्य शब्दोंको छन्द विषयमें आद्युदात्तस्वर हो ॥ १२० ॥

## कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे ॥ १२१ ॥

कू०म्[१], अ०वे[७] । अव्ययीभावे समासे इमान्युत्तरपदान्याद्युदात्तानि स्युः । उपकूलम् । उपतीरम् । उपतूलम् । उपमूलम् । उपशालम् । उपाक्षम् । सुषमम् ॥ अव्ययीभाव समास में कूल तीर तूल मूल शाला अक्ष और शम उत्तरपद को आद्युदात्तस्वर हो ॥

## कंसमन्थशूर्पपाय्यकाण्डं[१] द्विगौ[७] ॥ १२२ ॥

द्विगौ समासे इमान्युत्तरपदान्याद्युदात्तानि स्युः । द्विकंसः । द्विमन्थः । द्विशूर्पः । द्विपाय्यम् । द्विकाण्डम् ॥ द्विगुसमास में कंस मन्थ शूर्प पाय्य और काण्ड उत्तरपद को आद्युदात्तस्वर हो ॥ १२२ ॥

## तत्पुरुषे[७] शालायां[७] नपुंसके[७] ॥ १२३ ॥

शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं स्यात् । पाठशालम् । ब्राह्मणशालम् ॥ नपुंसकलिङ्ग तत्पुरुष समासमें शालान्त उत्तरपदको आद्युदात्तस्वरहो॥

## कन्था[१] च[अ] ॥ १२४ ॥

तत्पुरुषे नपुंसकलिङ्गे कन्थाशब्दे उत्तरपदमाद्युदात्तं स्यात् । सौशमिकन्थम् । आह्वरकन्थम् ॥ नपुंसकलिङ्ग तत्पुरुष समासमें कन्था उत्तरपदको आद्युदात्तस्वर हो ॥

## आदिश्चिहणादीनाम् ॥ १२५ ॥

कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः स्यात्। चिहणकन्थम्। मडुरकन्थम् ॥ कन्थान्त नपुंसकलिङ्ग समास में चिहणादियों को आद्युदात्तस्वर हो ॥

## चेलखेटकटुककाण्डं[1] गर्हायाम्[7] ॥ १२६ ॥

तत्पुरुषे गर्हायां चेलादीन्युत्तरपदान्याद्युदात्तानि स्युः। पुत्रचेलम्। भार्य्याचेलम्। उपानत्खेटम्। नगरखेटम्। दधिकटुकम्। उदश्वित्कटुकम्। प्रजाकाण्डम् ॥ तत्पुरुष समास में गर्हा गम्यमान होने पर चेल खेट कटुक और काण्ड उत्तरपद को आद्युदात्तस्वर हो ॥ १२६ ॥

## चीरमुपमानम् ॥ १२७ ॥

चीο म्[1], उο म्[1]। चीरमुत्तरपदमुपमानवाचिनि तत्पुरुषे समासे आद्युदात्तं स्यात्। वस्त्रं चीरमिव-वस्त्रचीरम्। कम्बलचीरम् ॥ उपमान वाचक तत्पुरुष समास में चीर शब्द को आद्युदात्त स्वर हो ॥ १२७ ॥

## पललसूपशाकं[1] मिश्रे[7] ॥ १२८ ॥

इमान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि स्युः। घृतपललम्। घृतसूपः। घृतशाकम् ॥ मिश्रवाचक तत्पुरुष समास में पलल सूप और शाक उत्तरपद को आद्युदात्तस्वर हो ॥१२८॥

## कूलसूदस्थलकर्षाः[1] संज्ञायाम्[7] ॥ १२९ ॥

एते तत्पुरुषे संज्ञायां विषये आद्युदात्ताः स्युः। दाक्षिकूलम्। शाण्डिसूदम्। दाण्डायनस्थलम्। दाक्षिकर्षः ॥ तत्पुरुष समास में संज्ञा गम्यमान हो तो कूल सूद स्थल और कर्ष उत्तरपद को आद्युदात्तस्वर हो ॥ १२९ ॥

## अकर्मधारये[7] राज्यम्[1] ॥ १३० ॥

कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तं स्यात्। ब्राह्मणराज्यम्। क्षत्रियराज्यम् ॥ कर्मधारय वर्जित तत्पुरुष समास में राज्य उत्तरपद को आद्युदात्तस्वर हो ॥

## वर्ग्यादयश्च ॥ १३१ ॥

वοय्यः[1], च(अ)। वर्ग्यादय उत्तरपदाऽकर्मधारये तत्पुरुषे आद्युदात्ताः स्युः। आर्य्यवर्ग्यः। आर्य्यपदः। दस्युवर्ग्यः। दस्युपदः ॥ कर्मधारय वर्जित तत्पुरुष समास में वर्ग्यादि ( दिगाद्यन्तर्गत ) गण पठित उत्तरपद को आद्युदात्तस्वर हो ॥ १३१ ॥

## पुत्रः[1] पुम्भ्यः[5] ॥ १३२ ॥

पुम् शब्देभ्यः परः पुत्रशब्द आद्युदात्तः स्यात् तत्पुरुषे। दाशकिपुत्रः। माहिषपुत्रः ॥ तत्पुरुष समास में पुल्लिङ्ग शब्दों से परे पुत्र शब्द को आद्युदात्तस्वर हो ॥ १३२ ॥

## नाचार्यराजर्त्विक् संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥

नο (अ), आο भ्यः[5]। एभ्यः परः पुत्रो नाद्युदात्तः स्यात् आख्याग्रहणात् पर्यायाणां तद् विशेषणानां च ग्रहणम्। आचार्यपुत्रः। उपाध्यायपुत्रः। शाकटायनपुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतुः पुत्रः। संयुक्तः-

सम्बन्धी । श्यालपुत्रः, ज्ञातयो मातापितृसम्बन्धेन बान्धवाः। ज्ञातिपुत्रः । भ्रातुः पुत्रः ॥ आचार्य्य राजा ऋत्विक् संयुक्त और ज्ञाति वाचकों से परे पुत्र शब्द का आद्युदात्तस्वर हो ॥ १३३ ॥

## चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३४ ॥

चू० नि०१, अ० ष्ठ्याः५। इमानि प्राणिभिन्नषष्ठ्यन्तात् पराण्याद्युदात्तानि स्युस्तत्पुरुषे समासे । गोधूमचूर्णम् । मुद्गचूर्णम् ॥ तत्पुरुष समासमें प्राणि भिन्न षष्ठ्यन्त से परे चूर्णादि गणपठित उत्तरपदको आद्युदात्तस्वर हो ॥ १३४ ॥

## षट्१ च४ काण्डादीनि१ ॥१३५॥

षट्पूर्वोक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि स्युः । दर्भकाण्डम् । दर्भचीरम् । तिलपललम् । मुद्गसूपः । मूलकशाकम् । समुद्रकूलम् ॥ प्राणिवर्जित षष्ठ्यन्त से परे पूर्वोक्त काण्डादि छह उत्तरपदों को आद्युदात्तस्वर हो ॥१३५॥

## कुण्डं१ वनम्१ ॥१३६॥

कुण्डमाद्युदात्तं स्याद् वनवाचिनि तत्पुरुषे समासे । दर्भकुण्डम् । शरकुण्डम् । कुण्डशब्दोऽत्रसादृश्ये ॥ वनवाची तत्पुरुषसमासमें कुण्ड उत्तरपदको आद्युदात्तस्वर हो॥

## प्रकृत्या३ भगालम्१ ॥१३७॥

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृत्या स्यात् । कुम्भीभगालम् । कुम्भीनदालम् । कुम्भीकपालम् । इमे मध्योदात्ताः ॥ तत्पुरुष समास में भगाल वाचक उत्तरपद को प्रकृति स्वर हो ॥१३७॥

## शितेर्नित्याबह्वज्बहुव्रीहावभसत् ॥१३८॥

शितेः५, नि०च्१, ब०हौ७, अ०त्१ । बहुव्रीहौ समासे शितेः परं नित्याबह्वच्कं भसच्छब्दवर्जितं प्रकृत्या स्यात् । शितिपादः । शित्यंसः । शित्योष्ठः ॥ बहुव्रीहि समास में शिति ( काला ) से परे भसत् वर्जित नित्य अबह्वच् उत्तरप को प्रकृति स्वर हो ॥१३८॥

## गतिकारकोपपदात्५ कृत्१ ॥१३९॥

एभ्यः परं कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे समासे । प्रकारकः । प्रकरणम् । कारकात् इध्मव्रश्चनः । उपपदात् । ईषत्करः । सर्वत्रयात्र लित्स्वरः ॥ तत्पुरुष समास में गति, कारक और उपपद से परे कृत्प्रत्ययान्त उत्तरपद को प्रकृतिस्वर हो ॥१३९॥

## उभे१ वनस्पत्यादिषु७ युगपत्अ ॥१४०॥

एषु पूर्वोत्तरपदे उभेयुगपत् प्रकृतिस्वरे स्याताम् । वनस्पतिः । बृहस्पतिः ॥ वनस्पति आदि समास में पूर्वोत्तरपद दोनों को प्रकृतिस्वर हो ॥१४०॥

## देवताद्वन्द्वे१ च४ ॥१४१॥

देवतावाचिनि द्वन्द्वे च समासे युगपदुभे प्रकृत्या स्याताम् । इन्द्रावरुणौ । इन्द्रासोमौ । इन्द्राबृहस्पती ॥ देवता वाचियों के द्वन्द्व समास में पूर्व और उत्तरपद दोनों को एक साथ प्रकृतिस्वर हो ॥१४१॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥१४२॥

न०(अ), उ०दे॰, अ०दा॰, अ०षु॰। पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे देवता द्वन्द्वे नोभे युगपत् प्रकृतिस्वरे स्याताम्। इन्द्राग्नी। इन्द्रवायू। अग्निवायू शब्दावन्तोदात्तौ॥ देवता द्वन्द्व समास में पृथिवी, रुद्र, पूषन् और मन्थिन् शब्द को छोड़कर अनुदात्तादि उत्तरपद परे हो तो पूर्व और उत्तरपद दोनों को एक साथ प्रकृतिस्वर न हो ॥१४२॥

## अन्तः[१] ॥१४३॥

अधिकारोऽयम्। परादिश्छन्दसि बहुलमितियावत्॥ उत्तरपद को अन्तोदात्तस्वर हो यह अधिकार इस पादकी समाप्तितक है ॥१४३॥

## थाथघञ्क्ताजवित्रकाणाम्[६] ॥१४४॥

थ अथ घञ् क्त अच् अप् इत्र क एतदन्तानां गतिकारकोपपदात् परेषामन्त उदात्तः स्यात्। सुनीथः। अथ। आवसथः। घञ्। प्रभेदः। क्तः। दूरादागतः। अच्। प्रक्षयः। अप्। प्रलवः। इत्र। प्रलवित्रम्। कः। गोवृषः॥ गति, कारक और उपपद से परे थादि प्रत्ययान्तों के उत्तरपद को अन्तोदात्तस्वर हो ॥१४४॥

## सूपमानात्[५] क्तः[१] ॥१४५॥

सोरुपमानाच्च परं क्तान्तमन्तोदात्तं स्यात्। सुकृतम्। सुभुक्तम्। सुपीतम्। उपमानात्। वृकावलुप्तम्। शशप्लुतम्। सिंहविनर्दितम्॥ सु और उपमान वाचक से परे क्तान्त उत्तरपद को अन्तोदात्त स्वर हो ॥१४५॥

## संज्ञायामनाचितादीनाम् ॥१४६॥

स०म्॰, अ०म्[६]। संज्ञायां विषये गतिकारकोपपदात् क्तान्तमन्ते दात्तं स्यादाचितादीन् वर्जयित्वा। संभूतो रामायणः। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः॥ संज्ञा विषय में गतिकारक और उपपद से आचितादि वर्जित क्तान्त उत्तरपद को अन्तोदात्त स्वर हो ॥१४६॥

## प्रवृद्धादीनां[६] च[अ] ॥१४७॥

एषां क्तान्तमुत्तरपदमन्तोदात्तं स्यात्। प्रवृद्धं यानम्। प्रवृद्धो वृषलः॥ प्रवृद्धादियों के क्तान्त उत्तरपद को अन्तोदात्तस्वर हो ॥१४७॥

## कारकाद्दत्तश्रुतयोरेवाशिषि ॥१४८॥

का०त्[५], द०योः[६], एव(अ), आ०षि॰। संज्ञायां विषये आशिषि गम्ये कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात्। देवा एनं देयासुर्देवदत्तः। विष्णुरेनं श्रूयाद् विष्णुश्रुतः॥ संज्ञा विषय में आशीर्वाद गम्यमान होने पर कारक से परे दत्त और श्रुत ही क्तान्तों को अन्तोदात्तस्वर हो ॥१४८॥

## इत्थम्भूतेन कृतमिति च ॥१४९॥

इ०न[३], कृ०म्[१], इति(अ), च(अ)। इमं प्रकारमापन्नः—इत्थम्भूतः इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात्। सुप्तप्रलपितम्। उन्मत्तप्रलपितम्। प्रमत्तगीतम्। विपन्नश्रुतम्॥ इस प्रकार के पुरुष ने किया, इस अर्थ में वर्त्तमान जो समास उसमें क्तान्त उत्तरपद को अन्तोदात्तस्वर हो ॥१४९॥

## अनो भावकर्मवचनः ॥१५०॥

अनः[१], भा नः[१] । कारकात्परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तं स्यात् । पयः पानं सुखम् । राजभोजनाः शालयः ॥ कारक से परे भाव और कर्म वाचक अनप्रत्ययान्त उत्तरपद को अन्तोदात्तस्वर हो ॥ १५० ॥

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः[१] ॥१५१॥

कारकात् पराणीमान्युत्तरपदान्यन्तोदात्तानि स्युस्तत्पुरुषे । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । राजशयनम् । ब्राह्मणासनम् । अश्वस्थानम् । क्षत्रिययाजकः । क्षत्रियपूजकः गोक्रीतः ॥ कारक से परे मन्नन्त, क्तिन्नन्त, व्याख्यान, शयन आसन, स्थान, याजकादि और क्रीत शब्द उत्तरपद को अन्तोदात्तस्वर हो ॥ १५१ ॥

## सप्तम्याः[५] पुण्यम्[१] ॥१५२॥

सप्तम्यन्तात् परं पुण्यमुत्तरपदमन्तोदात्तं स्यात् । अध्ययने पुण्यम्-अध्ययनपुण्यम्॥ सप्तमी से परे पुण्य उत्तरपद को अन्तोदात्तस्वर हो ॥१५२॥

## ऊनार्थकलहं[१] तृतीयायाः[५] ॥१५३॥

ऊनार्थान्युत्तरपदानि कलह शब्दश्चतृतीयान्तात्पराण्यन्तोदात्तानि स्युः । माषोनम् । माषविकलम् । वाक्कलहः । असिकलहः ॥ तृतीयान्त से परे ऊनार्थ और कलह शब्द को अन्तोदात्तस्वर हो ॥१५३॥

## मिश्रं चानुपसर्गमसन्धौ ॥१५४॥

मिश्रम्[१] च(अ) अ० म्[१], अ० धौ[७] । असन्धौ गम्ये मिश्रमेतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं स्यात् । गुडमिश्राः सर्पिर्मिश्राः ॥ असन्धि गम्यमान हो तो तृतीयान्त से परे उपसर्गरहित मिश्र उत्तरपद को अन्तोदात्त स्वर हो ॥१५४॥

## नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ॥१५५॥

नञः[५], गु० धे[७], स० र्थाः[१], त० ताः[१] । सम्पाद्याद्यर्थे तद्धितान्ता नञो गुणप्रतिषेधे वर्त्तमानात्परे अन्तोदात्ताः स्युः । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् । न कार्णवेष्टकिकम् । अकार्णवेष्टकिकम् । छेदमर्हति-छैदिकः । न छैदिकः-अछैदिकः । न वत्सेभ्यो हितः अवत्सीयः । न सन्तापाय प्रभवति—असान्तापिकः ॥ वर्त्तमान नञ् से परे गुण प्रतिषेध अर्थ में सम्पादि अर्ह हित और अलमर्थ तद्धितान्त उत्तरपद को अन्तोदात्त स्वर हो ॥१५५॥

## ययतोश्चातदर्थे ॥१५६॥

य० तोः[६], च(अ), अ० र्थे[७] । ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात् परस्यान्त उदात्तः स्यात् । पाशानां समूहः—पाश्या । न पाश्या-अपाश्या । दन्तेषु भवम्, दन्त्यम् , न दन्त्यम्-अदन्त्यम् ॥ गुण प्रतिषेध विषयक नञ् से परे जो अतदर्थमें वर्त्तमान तद्धितान्त य और यत् प्रत्यय तदन्त उत्तरपदको अन्तोदात्तस्वरहो॥

## अच्कावशक्तौ ॥१५७॥

अ० कौ[१], अ० क्तौ[७] । अशक्तौ गम्यायामजन्तं कान्तं च नञः परमन्तोदात्तं स्यात्।

अपचः । पक्तुमशक्तः । अविलिखः ॥ अशक्ति गम्यमान हो तो नञ् से परे अच् और क प्रत्ययान्त उत्तरपद को अन्तोदात्तस्वर हो ॥ १५७ ॥

## आक्रोशे[७] च[अ] ॥१५८॥

आक्रोशे गम्ये नञः पराावच्कावन्तोदात्तौ स्याताम् । अपचो जाल्मः । अपठोऽयं जाल्मः । पक्तुं पठितुं शक्तोऽप्येवं माक्रुश्यते ॥ आक्रोश गम्यमान हो तो नञ् से परे अच् और क प्रत्ययान्तको अन्तोदात्तस्वर हो ॥ १५८ ॥

## सञ्ज्ञायाम्[७] ॥१५९॥

सञ्ज्ञायामाक्रोशे गम्ये नञः परमुत्तरपदमन्तोदात्तं स्यात् । अदेवदत्तः । अविष्णुमित्रः ॥ नञ् से परे संज्ञा विषय में आक्रोश गम्यमान होने पर उत्तरपद को अन्तोदात्त स्वर हो ॥ १५९ ॥

## कृत्योकेष्णुच्चार्वादयश्च ॥१६०॥

कृ० यः[१], च(अ) । इमे नञः परेऽन्तोदात्ताः स्युः । अकर्त्तव्यम् अकरणीयम् । (उक्) अनागामुकम् । (इष्णुच्) अनलंकरिष्णुः । इष्णुज् ग्रहणे खिष्णुचोऽप्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्यात् । अनाढ्यम्भविष्णुः । चार्वादिः । अचारुः । असाधुः ॥ नञ् से परे कृत्य उक् इष्णुच् प्रत्यय हैं अन्त में जिसके ऐसे शब्द और चार्वादि गण पठित शब्दों को अन्तोदात्तस्वर हो ॥ १६० ॥

## विभाषा[१] तृन्नन्नतीक्ष्णशुचिषु[७] ॥१६१॥

एषूत्तरेषु वाऽन्त उदात्तः स्यात् । तृन् । अकर्ता । अन्न । अनन्नम् । तीक्ष्ण । अतीक्ष्णम् । शुचि । अशुचिः । पक्षेऽव्ययस्वरः ॥ नञ् से परे तृन्नन्त अन्न तीक्ष्ण और उत्तरपद को विकल्प से अन्तोदात्तस्वर हो ॥१६१॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥१६२॥

ब० हौ[७], इ० भ्यः[५], प्र० योः[७], क्रि०ने[७] । बहुव्रीहौ समासे इदम्, एतद्, तद्भ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रिया गणने वर्त्तमानस्यान्त उदात्तः स्यात् । इदं प्रथमं गमनं भोजनं वा यस्य, स–इदं प्रथमः । एतद्द्वितीयः । तत्पञ्चमः ॥ बहुव्रीहि समास में इदम् एतद् और तद् से परे क्रिया गणन में वर्त्तमान प्रथम और पूरण प्रत्ययान्त शब्दको अन्तोदात्त स्वर हो ॥१६२॥

## संख्यायाः[५] स्तनः[१] ॥१६३॥

बहुव्रीहौ संख्यायाः परः स्तनशब्दोऽन्तोदात्तः स्यात् । द्विस्तना । त्रिस्तना । चतुःस्तना ॥ बहुव्रीहि समास में संख्या से परे स्तन शब्द को अन्तोदात्तस्वर हो ॥१६३॥

## विभाषा[१] छन्दसि[७] ॥१६४॥

बहुव्रीहौ छन्दसि विषये सङ्ख्यायाः परः शब्दो वाऽन्तोदात्तः स्यात् । द्विस्तना । द्विस्तना ॥ बहुव्रीहि समास में छन्दो विषय होने पर संख्या से परे स्तन शब्द को विकल्प से अन्तोदात्त स्वर ॥१६४॥

## संज्ञायां[७] मित्राजिनयोः[६] ॥१६५॥

बहुव्रीहौ संज्ञायां विषये मित्राजिनयोरुत्तरपदयोरन्तः उदात्तः स्यात् । देवमित्रः । ब्रह्ममित्रः । कृष्णाजिनः । वृकाजिनः । ऋषिप्रतिषेधो मित्रे । विश्वामित्र ऋषिः ॥ बहुव्रीहि समासमें संज्ञा विषय होने पर मित्र और अजिन उत्तरपदको अन्तोदात्तस्वर हो ॥

## व्यवायिनोऽन्तरम् ॥१६६॥

व्य०नः[५], अ० म्[१] । बहुव्रीहौ व्यवधानवाचकात्परमन्तोदात्तं स्यात् । वस्त्रमन्तरं व्यवधायकं यस्याऽसौ-वस्त्रान्तरः, कम्बलान्तरः॥ बहुव्रीहि समासमें व्यवधान (बीच) वाचक से परे अन्तर शब्द को अन्तोदात्तस्वर हो ॥१६६॥

## मुखं[१] स्वाङ्गम्[१] ॥१६७॥

स्वाङ्गवाचिबहुव्रीहौ मुखमुत्तरपदमन्तोदात्तं स्यात् । गौरमुखः । भद्रमुखः ॥ बहुव्रीहि समास में स्वाङ्गवाचक मुख उत्तरपद को अन्तोदात्तस्वर हो ॥१६७॥

## नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥१६८॥

न(अ), अ०भ्यः[५] । स्वाङ्गवाचिबहुव्रीहौ एभ्यः परं मुखमन्तोदात्तं स्यात् । उच्चैर्मुखः । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः ॥ बहुव्रीहि समास में अव्यय, दिक्शब्द, गो, महत्, स्थूल, मुष्टि, पृथु और वत्स से परे स्वाङ्ग वाचक मुख उत्तरपद को अन्तोदात्तस्वर न हो ॥१६८॥

## निष्ठोपमानादन्यतरस्याम् ॥१६९॥

नि०त्[५], अ०म्(अ) । बहुव्रीहौ निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं स्यात् । प्रक्षालितमुखः। पक्षे निष्ठोपसर्गपूर्वमन्यतरस्यामिति पूर्वपदमन्तोदात्तत्वम् । प्रक्षालितमुखः । उपमानात् । सिंहमुखः । व्याघ्रमुखः ॥ बहुव्रीहि समास में निष्ठान्त और उपमानवाचकसे परे स्वाङ्गवाचक मुख, उत्तरपदको विकल्पसे अन्तोदात्तस्वरहो।

## जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः १७०

जा०भ्यः[५], अ०त्[५], क्तः[१], अ०न्नाः[१] । बहुव्रीहावाच्छादनवर्जिताज्जातिवाचिनः कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् विहायाऽन्तोदात्तं स्यात् । सारङ्गजग्धः । मासजातः । सुखजातः । दुःखजातः ॥ बहुव्रीहि समास में आच्छादन वर्जित जातिवाचक कालवाचक और सुखादि गणपठित शब्दोंसे परे कृतमित और प्रतिपन्नों को छोड़कर क्तान्त उत्तरपद को अन्तोदात्तस्वर हो ॥१७०॥

## वा[अ] जाते[७] ॥१७१॥

बहुव्रीहौ जातिकालसुखादिभ्यः परो जातशब्दो वान्तोदात्तः स्यात् । दन्तजातः । दन्तजातः । मासजातः । मासजातः । सुखजातः । सुखजातः । दुःखजातः । दुःखजातः ॥ बहुव्रीहि समास में जाति काल और सुखादि गण पठित शब्दों से परे जात उत्तरपद को विकल्प से अन्तोदात्तस्वर हो ॥१७१॥

## नञ्सुभ्याम्[५] ॥१७२॥

आभ्यां परं बहुव्रीहावुत्तरपदमन्तोदात्तं स्यात् । अव्रीहिः । सुमाषः ॥ बहुव्रीहि समास में नञ् और सु से परे उत्तरपद को अन्तोदात्तस्वर हो ॥१७२॥

## [७]कपिपूर्वम्[१] ॥१७३॥

नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्य कपि परे पूर्वमुदात्तं स्यात्। अब्रह्मबन्धुकः। सुकुमारीकः॥ नञ् और सु से परे जो उत्तरपद तदन्त समास को कप् प्रत्यय से पूर्व उदात्तस्वर हो ॥१७३॥

## [७]ह्रस्वान्तेऽन्त्यात्पूर्वम्[१] ॥१७४॥

नञ्सुभ्यां परं बहुव्रीहौ ह्रस्वान्ते उत्तरपदे समासे चान्त्यात् पूर्वमुदात्तं स्यात् कपि परे। अव्रीहिकः। सुमाषकः॥ बहुव्रीहि समास में कप् प्रत्यय परे होतो नञ् और सु से परे ह्रस्वान्त में अन्त से पूर्व वर्ण को उदात्तस्वर हो ॥१७४॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥१७५॥

बहोः[५], नञ्वत्(अ), उ०म्नि[७]। उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात्। बहुव्रीहिकः। बहुमित्रकः॥ उत्तर पदार्थके बहुत्वमें वर्त्तमान बहुशब्द से परे नञ् के सदृश स्वर हो ॥१७५॥

## न गुणादयोऽवयवाः॥१७६॥

न(अ), गु०यः[१], अ०वाः[१]। बहुव्रीहावयववाचिनो बहोः परे गुणादयो नान्तोदात्ताः स्युः। बहुगुणा रज्जुः। बह्वक्षरं पादम्। गुणादिराकृतिगणः॥ बहुव्रीहि समास में अवयव वाचक बहु से परे गुणादि गण पठितों को अन्तोदात्तस्वर न हो ॥१७६॥

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥१७७॥

उ०त्[५], स्वाङ्गम्[१], अपर्शु[१]। बहुव्रीहावुपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं स्यात्। प्रपृष्ठः प्रललाटः॥ बहुव्रीहि समासमें उपसर्ग से परे पर्शुवर्जित ध्रुव (अचल) स्वाङ्ग वाचक शब्दों को अन्तोदात्तस्वर हो ॥१७७॥

## वनं[१] समासे[७] ॥१७८॥

समासमात्रे उपसर्गादुत्तरं वनमन्तोदात्तं स्यात्। प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते॥ समास मात्र में उपसर्ग से परे वन उत्तरपद को अन्तोदात्तस्वर हो ॥१७८॥

## अन्तः[५] ॥१७९॥

अस्मात् परं वनमन्तोदात्तं स्यात्। अन्तर्वणो देशः॥ अन्तर शब्द से परे वन को अन्तोदात्तस्वर हो ॥१७९॥

## अन्तश्च ॥ १८० ॥

अन्तः (अ), च (अ)। उपसर्गादन्तः शब्दोऽन्तोदात्तः स्यात्। प्रान्तः। पर्यन्तः॥ उपसर्ग से परे अन्तर् शब्द को अन्तोदात्तस्वर हो ॥ १८० ॥

## न[अ] निविभ्याम्[५] ॥ १८१ ॥

आभ्यामुत्तरोऽन्तशब्दो नान्तोदात्तः स्यात्। न्यतः। व्यतः॥ नि और वि से परे अन्तर् शब्द को अन्तोदात्तस्वर न हो॥ १८१ ॥

## परेरभितो भावि मण्डलम् ॥ १८२ ॥

परेः[4], अ० वि[1], म० म्[1]। परेः परमभित उभयतो भावो यस्यास्ति, तत्कूलादि मण्डलं चान्तोदात्तं स्यात्। परिकूलम्। परितीरम्। परिमण्डलम्॥ परि से परे अभितः और उभयतः भाव जिसका हो वह कूलादि तथा मण्डलको अन्तोदात्तस्वर हो॥

## प्रादस्वाङ्गं[1] सञ्ज्ञायाम्[7] ॥ १८३ ॥

संज्ञायां विषये प्रात् परं स्वाङ्गवाचि अन्तोदात्तं स्यात्। प्रकोष्ठम्। प्रगृहम्॥ संज्ञा विषय में प्र उपसर्ग से परे अस्वाङ्ग वाचक शब्द को अन्तोदात्तस्वर हो॥ १८३॥

## निरुदकादीनि[1] च[अ] ॥ १८४ ॥

इमानि चान्तोदात्तानि स्युः। निरुदकम्। निरुपलम्॥ निरुदकादि गणपठित शब्दों को अन्तोदात्तस्वर हो॥ १८४॥

## अभेर्मुखम् ॥ १८५ ॥

अभेः[4], मुखम्[1]। अभेः परम्मुखमन्तोदात्तं स्यात्। अभिमुखः॥ अभि उपसर्ग से परे मुख को अन्तोदात्तस्वर हो॥ १८५॥

## अपाच्च ॥ १८६ ॥

अपात्[4], च (अ)। अपात् परं मुखमन्तोदात्तं स्यात्। अपमुखः। अपमुखम्। अप उपसर्ग से परे मुख को अन्तोदात्तस्वर हो॥ १८६॥

## स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनाम[1] नाम[1] च[अ] ॥ १८७ ॥

अपादीमान्यन्तोदात्तानि स्युः। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा। अपकुक्षिः। अपसीरः। अपहलम्। अपनाम॥ अप उपसर्ग से परे स्फिग पूत वीणा, अञ्जस्, अध्वन्, कुक्षि, सीर और नाम उत्तरपद को अन्तोदात्तस्वर हो॥

## अधेरुपरिस्थम् ॥ १८८ ॥

अधेः[4], उ० म्[1]। अधेः परमुपरिस्थवाचि अन्तोदात्तं स्यात्। अधिदन्तः। अधिकर्णः॥ अधि उपसर्ग से परे उपरिस्थ वाचक उत्तरपद को अन्तोदात्तस्वर हो॥ १८८॥

## अनोरप्रधानकनीयसि ॥ १८९ ॥

अनोः[4], अ० सी[1]। अनोः परमप्रधानवाचिकनीयश्चान्तोदात्तं स्यात्। अनुगतो ज्येष्ठम्-अनुज्येष्ठः। अनुमध्यमः॥ अनु उपसर्ग से परे अप्रधान वाचक और कनीयस् उत्तरपद को अन्तोदात्तस्वर हो॥ १८९॥

## पुरुषश्चान्वादिष्टः ॥ १९० ॥

पुरुषः[1], च (अ), अ० ष्टः[1]। अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः स्यात्। अन्वादिष्टः पुरुषः-अनुपुरुषः॥ अनु उपसर्ग से परे अन्वादिष्ट वाचक पुरुष शब्द को अन्तोदात्तस्वर हो॥ १९०॥

## अतेरकृतपदे ॥ १९१ ॥

अतेः[4], अ० दे[1]। अतेः परमकृदन्तं परमकृदन्तं पदशब्दश्चान्तोदात्तः स्यात्। अत्यङ्कुशो नागः। अतिपदा शक्वरी॥ अति उपसर्ग से परे अकृदन्त और पदशब्द को अन्तोदात्तस्वर हो॥ १९१॥

## नेरनिधाने ॥ १६२ ॥

नेः[५], अ० ने[७] । निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशनमित्यर्थः । तस्मिन् नेः परमुत्तरपदमन्तोदात्तं स्यात् । निमूलम् । न्यक्षम् । नितृणम् ॥ अनिधान अर्थ में नि उपसर्ग से परे उत्तरपद को अन्तोदात्तस्वर हो ॥ १६२ ॥

## प्रतेरंश्वादयस्तत्पुरुषे ॥ १६३ ॥

प्रतेः[५], अं० यः[१], त० षे[७] । तत्पुरुषे प्रतेः परेऽश्वादयोऽन्तोदात्ताः स्युः । प्रतिगतोंऽशुः-प्रत्यंशुः । प्रतिजनः । प्रतिराजा ॥ तत्पुरुष समास में प्रति उपसर्ग से परे अंश्वादि गणपठित शब्दों को अन्तोदात्तस्वर हो ॥ १६३ ॥

## उपाद् द्व्यजजिनमगोरादयः ॥ १६४ ॥

उपात्[५], द्व्य० च[१], अ० यः[१] । तत्पुरुषे उपात्परं यद् द्व्यच्कमजिनं चान्तोदात्तं स्याद् गौरादीन् विहाय । उपगतो देवम्-उपदेवः । उपेन्द्रः । उपाजिनम् ॥ तत्पुरुष समास में उपसर्ग से परे गौरादि गणपठित शब्दों को छोड़ कर द्व्यच् और अजिन उत्तरपद को अन्तोदात्तस्वर हो ॥ १६४ ॥

## सोरवक्षेपणे ॥ १६५ ॥

सोः[५],अ णे[७] । अपक्षेपणे सुशब्दात्परमुत्तरपदमन्तोदात्तं स्यात्तत्पुरुषे । अवक्षेपणम्-निन्दा । सुप्रत्यवसितः । सुरत्रपूजायामेव । वाक्यार्थस्त्वत्र निन्दा असूयया तथाभिधानात् ॥ तत्पुरुष समास में अपक्षेपण गम्यमान हो तो सु उपसर्ग से परे उत्तरपद को अन्तोदात्तस्वर हो ॥ १६५ ॥

## विभाषोत्पुच्छे ॥ १६६ ॥

विभाषा[१],उत्पुच्छे[७] । उत्पुच्छे तत्पुरुषे वाऽन्तउदात्तः स्यात् । उत्क्रान्तः पुच्छाद्-उत्पुच्छः । उत्पुच्छः ॥ तत्पुरुष समास किये उत्पुच्छ शब्द में उत्तरपद को विकल्प से अन्तोदात्तस्वर हो ॥ १६६ ॥

## द्वित्रिभ्यां[५] पाद्दन्मूर्धसु[७] बहुव्रीहौ[७] ॥ १६७ ॥

आभ्यां परेष्वेषु वाऽन्तोदात्तः स्याद् बहुव्रीहौ । द्वौ पादौ यस्य, स—द्विपात् । द्विपाद् । त्रिपाद् । त्रिपात । द्विदन् । द्विदन् । द्विमूर्द्धा । द्विमूर्द्धा । त्रिमूर्द्धा । त्रिमूर्द्धा ॥ बहुव्रीहि समास में द्वि और त्रि से परे पात् , दत् और मूर्द्धन् उत्तरपद को विकल्प से अन्तोदात्तस्वर हो ॥ १६७ ॥

## सक्थं चाक्रान्तात् ॥ १६८ ॥

सक्थम्[१], च(अ), अ०त्[५] । सक्थमिति कृतसमासान्तः, सोक्रान्ताद् वाऽन्तोदात्तः स्यात् । गौरसक्थः । गौरसक्थः । श्लक्ष्णसक्थः । श्लक्ष्णसक्थः ॥ अक्रान्त से परे सक्थि शब्द को विकल्प से अन्तोदात्तस्वर हो ॥१६८॥

## परादिश्छन्दसि बहुलम् ॥ १६९ ॥

परादिः[१], छ०सि[७], ब०म्[२] । छन्दसि परस्य सक्थ शब्दस्यादिरुदात्तो वा स्यात् । अञ्जिसक्थमालभेत । अत्र वार्त्तिकम् । परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वा-

दयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥ परादिः—तुविजाता उरुक्षया । परान्तः नियेन मुष्टिहत्यया । यन्त्रिचक्रः । पूर्वान्तः—विश्वायुर्धेहि ॥ छन्दोविषय में सक्थ शब्द के आदि को विकल्प से उदात्तस्वर हो ॥ १९९ ॥

इति षष्ठाऽध्यायस्य द्वितीयः पादः ॥

# अथ षष्ठाऽध्यायस्य तृतीयःपादः ।

## अलुगुत्तरपदे ॥ १ ॥

अ० कु[1], उ० दे[7] । अलुगधिकारः प्रागानङ् इति यावत्, उत्तरपदाधिकारस्त्वापादपरिसमाप्तेः ॥ 'आनङ् ऋतो द्वन्द्वे' इस सूत्र के पूर्व २ इस पाद की समाप्ति पर्यन्त अलुक् और उत्तरपद का अधिकार है ॥ १ ॥

## पञ्चम्याः[6] स्तोकादिभ्यः[5] ॥ २ ॥

एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्यासादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः ॥ ( तथा ब्राह्मणाच्छंसिन उपसङ्ख्यानम् ) ॥ ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि । तानि शंसतीति—ब्राह्मणाच्छंसी—ऋत्विग् विशेषः ॥ उत्तरपद परे हो तो स्तोकादि से परे पञ्चमी का अलुक् हो ॥ २ ॥

## ओजः सहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥

ओ०सः[5], तृ०याः[6] । एभ्यस्तृतीयाया अलुक् स्यादुत्तरपदे । ओजसा कृतम् । सहसा कृतम् । अम्भसा कृतम् । तमसा कृतम् । ( अञ्जस उपसङ्ख्यानम् ) ॥ अञ्जसा कृतम् । आर्जवेन कृतमित्यर्थः । ( पुंसानुजो जनुषान्ध इति च ) ॥ यस्य अग्रजः पुमान् स पुंसानुजः । जनुषान्धः—जात्यन्धः ॥ उत्तरपद परे हो तो ओजस्, सहस्, अम्भस् और तमस् से परे तृतीया का अलुक् हो ॥३॥

## मनसः[5] सञ्ज्ञायाम्[7] ॥ ४ ॥

संज्ञायां मनसस्तृतीयाया अलुक् स्यादुत्तरपदे । मनसा गुप्ता ॥ संज्ञाविषयमें मनस् शब्द से परे तृतीया का अलुक् हो ॥४॥

## आज्ञायिनि[7] च[अ] ॥ ५ ॥

आज्ञायिन्युत्तरपदे मनसस्तृतीयाया अलुक् स्यादुत्तरपदे । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥ आज्ञायिन् उत्तरपद परे हो तो मनस् शब्दसे परे तृतीया का अलुक्हो॥

## आत्मनश्च पूरणे ॥ ६ ॥

आ० नः[5], च(अ), पू० णे[7] । पूरणप्रत्ययान्ते उत्तरपदे आत्मनस्तृतीयाया अलुक् स्यात् । आत्मना पञ्चमः । आत्मना षष्ठः ॥ पूरण प्रत्ययान्त उत्तरपद परे हो तो आत्मन् शब्द से परे तृतीया का अलुक् हो ॥ ६॥

## वैयाकरणाख्यायां[7] चतुर्थ्याः[6] ॥ ७ ॥

वैयाकरणस्याख्या—वैयाकरणाख्या। आख्या सञ्ज्ञा। यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्याऽऽत्मनश्चतुर्थ्या अलुक् स्यात्। आत्मनेपदम्। आत्मनेभाषा॥ उत्तरपद परे हो तो वैयाकरणों की आख्या में चतुर्थी का अलुक् हो॥७॥

## परस्य[६] च[अ]॥ ८॥

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुक् स्यात्। परस्मैपदम्। परस्मैभाषा॥ वैयाकरणों की आख्या में पर शब्द की चतुर्थी का भी अलुक् हो॥ ८॥

## हलदन्तात्[५] सप्तम्याः[६] सञ्ज्ञायाम्[७]॥ ९॥

संज्ञायां विषये हलन्तादन्ताच्च सप्तम्या अलुक् स्यात्। युधिष्ठिरः 'गवि युधिभ्यां स्थिरः' इति षत्वम्। अरण्येतिलकाः॥ संज्ञाविषय में हलन्त और अदन्त से परे सप्तमी का अलुक् हो॥९॥

## कारनाम्नि[७] च[अ] प्राचां[६] हलादौ[७]॥ १०॥

प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् स्यात्। मुकुटे कार्षापणम्। दृषदि माषकः॥ प्राग्देशियों के मत में कारनाम वाचक हलादि उत्तरपद परे हों तो सप्तमी का अलुक् हो॥१०॥

## मध्याद्[५] गुरौ[७]॥ ११॥

मध्यादुत्तरस्याः सप्तम्या अलुक् स्याद् गुरावुत्तरपदे। मध्येगुरुः। (अन्ताच्च) अन्तेगुरुः॥ गुरु उत्तरपद परे हो तो मध्य से परे सप्तमी का अलुक् हो॥११॥

## अमूर्द्धमस्तकात् स्वाङ्गादकामे॥ १२॥

अ० त्[५], स्वा० द्[५], अ० मे[७]। अकाम उत्तरपदे मूर्द्धमस्तक वर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अलुक् स्यात्। कण्ठे कालो यस्य सः—कण्ठेकालः। उरसिलोमः॥ अकाम उत्तरपद परे हो तो मूर्द्ध मस्तक वर्जित स्वाङ्गवाचक शब्द से परे सप्तमी का अलुक् हो॥ १२॥

## बन्धे[७] च[अ] विभाषा[१]॥ १३॥

बन्धे हलदन्तात्सप्तम्या वाऽलुक् स्यात्। हस्तेबन्धः। हस्तबन्धः। चक्रेबन्धः। चक्रबन्धः॥ बन्धउत्तर पदपरे हो तो हलन्त और अदन्त से परे सप्तमी का विकल्प से अलुक् हो॥१३॥

## तत्पुरुषे[७] कृति[७] बहुलम्[२]॥१४॥

तत्पुरुषे कृदन्त उत्तरपदे सप्तम्या बहुलमलुक् स्यात्। स्तम्बेरमः। स्तम्बरमः। कर्णेजपः। कर्णजपः॥ तत्पुरुष समास में कृदन्त उत्तरपद परे होतो सप्तमी का बहुल करके अलुक्हो॥ १३॥

## प्रावृट्शरत्कालदिवां[६] जे[७]॥ १५॥

ज उत्तरपदे एषां सप्तम्या अलुक् स्यात्। प्रावृषिजः। शरदिजः। कालेजः। दिविजः॥ ज उत्तरपद परे होतो प्रावृट् शरद्, काल और दिव् की सप्तमी का अलुक् हो॥ १५॥

## विभाषा[१] वर्षक्षरशरवरात्[५]॥ १६॥

एभ्यः सप्तम्या अलुग्वा जे। वर्षेजः। वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः॥ ज उत्तरपदे होतो वर्ष क्षर शर और वरसे परे सप्तमी का विकल्प से अलुक् हो॥१६॥

## घकालतनेषु[७] कालनाम्नः[५] ॥ १७ ॥

घकालतनेषु कालनाम्नः सप्तम्या वाऽलुक् स्यात्। घे पूर्वाह्णे तरे, पूर्वाह्णतरे, पूर्वाह्णे तमे। पूर्वाह्णतमे। काले—पूर्वाह्णे काले। पूर्वाह्णकाले। तने-पूर्वाह्णे तने, पूर्वाह्णतने॥ घ संज्ञक प्रत्यय और काल तथा तन प्रत्यय परे हो तो काल नाम वाचक से परे सप्तमी का विकल्प से अलुक् हो॥१७॥

## शयवासवासिष्वकालात् ॥ १८॥

श०षु[७], अ०त्[५]। सप्तम्या वाऽलुक् स्यात्। खे शयः। खशयः। ग्रामे वासः। ग्रामवासः। ग्रामे वासी। ग्रामवासी॥ शय वास तथा वासिन् परे हो तो अकाल वाचकसे परे सप्तमीका विकल्पसे अलुक् हो॥१८॥

## नेन्सिद्धबध्नातिषु च ॥१९॥

न(अ), इ० षु[७], च (अ)। इन्नन्तादिषु सप्तम्या अलुङ् न स्यात्। स्थण्डिलशायी। काम्पिल्यसिद्धः। चक्रबन्धः॥ इन्नन्त सिद्ध तथा बध्नाति परे होतो सप्तमी का लुक् हो

## [७]स्थे च[अ] भाषायाम्[७] ॥ २० ॥

स्थे चोत्तरपदे भाषायां सप्तम्या अलुङ् न स्यात्। समस्थः। विषयमस्थः। पर्वतस्थः॥ स्थ उत्तरपद परे हो तो भाषा में सप्तमी का लुक् हो॥ २०॥

## षष्ठ्याः[६] आक्रोशे[७] ॥ २१ ॥

आक्रोशे गम्ये षष्ठ्या अलुक् स्यात्। चोरस्य कुलम्। वृषलस्य कुलम्। (वाग्दिक्पश्यद्भ्यो युक्ति-दण्डहरेषु)॥ वाचो युक्तिः। दिशो दण्डः। पश्यतोहरः॥ (आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्य कुलिकेति च)॥ अमुष्यापत्यम्-आमुष्यायणः, नडादित्वात् फक्। अमुष्य पुत्रस्य भावः-आमुष्यपुत्रिका मनोज्ञादित्वाद् वुञ्। एवम् आमुष्यकुलिका (देवानां प्रिय इति च मूर्खे)॥ अन्यत्र देवप्रियः। (शेपपुच्छलाङ्गूलेषु शुनः,)। शुनःशेपः। शुनः पुच्छः। शुनो लाङ्गूलः॥ (दिवश्च दासे) दिवोदासः॥ आक्रोश गम्यमान हो तो षष्ठी का अलुक् हो॥

## [७]पुत्रेऽन्यतरस्याम्[अ] ॥ २२॥

पुत्रेपरे षष्ठ्या अलुग्वा स्यात् निन्दायाम्। दास्याः पुत्रः। दासीपुत्रः॥ पुत्र शब्द परे होतो निन्दा गम्यमान होने पर षष्ठी का विकल्प से लुक् हो॥

## ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ २३॥

ऋतः[५], वि० भ्यः[५]। विद्यासम्बन्धयोनि सम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक् स्यात्। होतुरन्तेवासी। होतुः पुत्रः। पितुरन्तेवासी। पितुः पुत्रः॥ (विद्यायोनि सम्बन्धेभ्यस्तत् पूर्वोत्तर पदग्रहणम्)॥ नेह। होतृधनम्। पितृगृहम्॥ विद्यासम्बन्ध यथा योनिसम्बन्धवाचक ऋदन्त शब्दों से परे षष्ठी का अलुक् हो॥२३॥

## विभाषा[१] स्वसृपत्योः[७] ॥ २४॥

स्वसृपत्योः परयोः ऋदन्तात् षष्ठ्या अलुग्वा स्यात्। मातुःष्वसा। मातुः स्वसा मातृस्वसा। पितुःष्वसा। पितुःस्वसा। पितृष्वसा॥ (८।३।८४-८५)। स्वसृ तथा पति शब्द परे हो तो ऋदन्त शब्दों से परे षष्ठी का विकल्प से अलुक् हो॥ २४॥

## आनङ् ऋतो द्वन्द्वे ॥२५॥

आनङ्, ऋतः[6], द्वन्द्वे[7]। विद्यायोनिसम्बन्धवाचिनाम् ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। मातापितरौ॥(पुत्रेऽन्यतरस्याम्) इत्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः–पितापुत्रौ लहासीताम्॥ विद्या सम्बन्ध तथा योनि सम्बन्ध वाचक ऋदन्तों के द्वन्द्व समास में उत्तरपद परे होतो पूर्व को आनङ् आदेश हो॥२५॥

## देवताद्वन्द्वे[7] च[अ] ॥२६॥

देवता वाचिनां द्वन्द्वे चानङादेशः स्यादुत्तरपदे। मित्रावरुणौ। इन्द्रावरुणौ॥ (उभयत्र वायो प्रतिषेधः)॥ अग्निवायू। वाय्वग्नी॥ देवता वाचकोंके द्वन्द्व समास में उत्तरपद परे हो तो पूर्वपद को आनङ् आदेश हो ॥२६॥

## ईदग्नेः सोमवरुणयोः ॥२७॥

ईत्[1], अग्नेः[6], सो॰ण्योः। सोमवरुणयोः परयोर्देवता द्वन्द्वेऽग्नेरीकारादेशः स्यात्। अग्नीषोमौ। (८।३।८२। इति षत्वम्) अग्नीवरुणौ॥ सोम और वरुण परे होतो देवता द्वन्द्व समासमें अग्नि शब्दको ईकारादेश हो २७॥

## इद्[1] वृद्धौ[7] ॥२८॥

कृतवृद्धावुत्तरपदेऽग्नेरिकारादेशः स्याद् देवताद्वन्द्वे। आग्निवारुणी मनड्वाहीमालभेत। (देवता द्वन्द्वे च) इत्युभयपदवृद्धिः॥ कृतवृद्धि उत्तरपद परे होतो देवता द्वन्द्वसमासमें अग्निशब्दको इकारादेश हो ॥२८॥

## दिवो द्यावा ॥ २९ ॥

दिवः[6], द्यावा[1]। दिवो द्यावा स्याद् देवताद्वन्द्वे उत्तरपदे। द्यावाभूमी। द्यावाक्षामा॥ देवता द्वन्द्वसमास में उत्तरपद परे हो तो दिव् शब्द को द्यावा आदेश हो ॥२९॥

## दिवसश्च पृथिव्याम् ॥ ३० ॥

दिवसः[1], च(अ), पृ॰म्[7]। पृथिव्यामुत्तरपदे देवता द्वन्द्वे दिवो दिवसादेशः स्यात्, चाद् द्यावा। द्यौश्च पृथिवी च—दिवस्पृथिव्यौ। द्यावापृथिव्यौ ॥ पृथिवी उत्तरपद परे हो तो देवता द्वन्द्वसमास में दिव् शब्द को दिवस् तथा द्यावा आदेश हो ॥३०॥

## उषासोषसः ॥ ३१ ॥

उषासा[1], उषसः[6]। उषस् शब्दस्य उषासादेशः स्याद् देवताद्वन्द्वे। उषासा सूर्यम्। उषासा नक्तम्॥ देवता द्वन्द्वसमास में उत्तरपद परे होतो उषस् शब्दको उषासादेश हो॥

## मातरपितरावुदीचाम् ॥ ३२ ॥

मा॰रौ[1], उ॰म्[6]। मातरपितरावुदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते। मातरपितरौ॥ उत्तर देशीय आचार्यों के मत में मातृ शब्द को अरङ् आदेश करके मातर शब्द निपातन किया है॥ ३२॥

## पितरामातरा[1] च[11] छन्दसि[7] ॥ ३३ ॥

पितरामातरा इति छन्दसि निपात्यते । आमागन्तां पितरा मातरा च । चाद् विपरीतमपि । मातरापितरा ॥ छन्द विषय में मातरा और पितरा शब्द निपातित हैं ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु ॥ ३४ ॥

स्त्रियाः[6], पुंवत् (अ), भा०द्[1], अ०ङ्[1], स०णे[7], स्त्रि०म्[7], अ० षु०[7]। भाषितपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात् पञ्चम्या अलुक् षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङः भावो यत्र तथा भूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे पूरणी प्रियादि वर्जिते । दर्शनीयभार्य्यः । दीर्घचूडः ॥ पूरणी और प्रियादि वर्जित समानाधिकरण स्त्रीलिङ्ग उत्तरपद परे हो तो भाषित पुंस्क से परे ऊङ् वर्जित स्त्रीलिङ्ग को पुंवत् कार्य्य हो ॥

## तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥

त० षु०, आ० चः[५] । तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत् स्यात् । तस्याः शालायाः—ततः । तस्यां शालायां तत्र । तसिलादिषु परिगणनमत्र कार्य्यम् । त्रतसौ, तरप्तमपौ, चरट्जातीयरौ, कल्पदेशीयरौ, रूपप्पाशपौ, थल्थालौ दार्हिलौ, तिल्थातिलौ (शसि बह्वल्पार्थस्य पुंवद् भावो वाच्यः) ॥ बह्वीभ्यो देहि । बहुशो देहि । अल्पाभ्यो देहि । अल्पशो देहि । (त्वतलोर्गुणवचनस्य) ॥ शुक्लाया भावः—शुक्लत्वम् । शुक्लता ॥ (भस्याऽढे तद्धिते) ॥ हस्तिनीनां समूहः हास्तिकम् ॥ (ठक्छसोश्च)॥ भवत्याश्छात्राः भावत्काः । भवदीयाः ॥ 'पञ्चम्यास्तसिल्' इस सूत्र से लेकर 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इससे पूर्व २ जो प्रत्यय हैं उनमें भाषित पुंस्क से परे ऊङ् वर्जित स्त्रीलिङ्ग को पुंवत् कार्य्य हो ॥३५॥

## क्यङ्मानिनोश्च ॥ ३६ ॥

क्य०[७] नोः, च (अ) । एतयोः परयोः पुंवत्कार्यं स्यात् । एनी वाचरति-एतायते । श्येनीवाचरति- श्येतायते । स्वभिन्नां काञ्चिद् दर्शनीयां स्त्रियं मन्यते—दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी मैत्रः॥ क्यङ् और मानिन् प्रत्यय परे हो तो भाषित पुंस्क से परे स्त्रीलिङ्ग को पुंवत् कार्य हो ॥३६॥

## न[अ] कोपधायाः[६] ॥३७॥

कोपधायाः स्त्रिया न पुंवत् कार्यं स्यात् । पाचिकाभार्य्यः । कारिकाभार्यः । मद्रकायते । मद्रिका मानिनी ॥ (कोपधप्रतिषेधे तद्धित वुग्ग्रहणम्) ॥ नेह । पाकभार्या यस्य सः—पाकभार्यः ॥ ककार जिसकी उपधा में हो ऐसे स्त्रीलिङ्ग को पुंवत्कार्य न हो ॥

## संज्ञापूरण्योश्च ॥३८॥

सं०योः[६], च(अ) । अनयोः पुंवन्न कार्यं स्यात् । दत्ताभार्यः। दत्तामानिनी । पञ्चमी भार्यः । पञ्चमीपाशा ॥ संज्ञा तथा पूरण प्रत्ययान्त स्त्रीलिङ्ग शब्दों को पुंवत् कार्य न हो॥

## वृद्धिनिमित्तस्य[६] च[अ] [६]तद्धितस्याऽरक्तविकारे[७] ॥३९॥

वृद्धिशब्देन विहिता या वृद्धिः तद्धेतुर्यस्तद्धितः अरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् स्यात् । स्रौघ्नीभार्य्यः माथुरीभार्यः । स्रौघ्नीयते । माथुरीयते । स्रौघ्नीमानिनी ॥ वृद्धिका निमित्त जिसमें हो ऐसे रक्त तथा विकार वर्जित अर्थ में विहित तद्धितान्त स्त्रीलिङ्ग शब्द को पुंवत् कार्य न हो ॥३९॥

## स्वाङ्गाच्चेतः ॥ ४० ॥

स्वा०त्[५], च(अ), इतः[१] । स्वाङ्गाद्यः, ईकारः तदन्ता स्त्री न पुंवत् स्यात् । सुकेशी-भार्यः । दीर्घकेशीभार्यः ॥ ( अमानिनीतिवक्तव्यम् ) ॥ दीर्घकेशमानिनी ॥ स्वाङ्गवाचक से परे ईकारान्त स्त्रीलिङ्ग को पुंवत् कार्य न हो ॥ ४०॥

## जातेश्च ॥४१॥

जातेः[५], च(अ) । जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् । ब्राह्मणीभार्य्यः । क्षत्रिया भार्यः ॥ जाति वाचक स्त्रीलिङ्ग को पुंवत् कार्य न हो ॥४१॥

## पुंवत्[अ] कर्मधारयजातीयदेशीयेषु[७] ॥ ४२ ॥

कर्मधारये समासे जातीयदेशीययोश्च परतोभाषितपुंस्कात् पर ऊङ् भावः यस्मि-स्तथाभूतं पूर्वं पुंवत् स्यात् । पूरणीप्रियादिष्वप्राप्तः पुंवद् भावोऽनेन विधीयते–महान-वमी । कृष्णचतुर्दशी । महाप्रिया । तथा कोपधादेः प्रतिषिद्धः पुंवद् भावः । कर्मध र-यादौ प्रतिप्रसूयते–पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । स्रौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । एवं पाचकजातीया । पाचकदेशीया ॥ कर्मधारय समास में जातीय तथा देशीय प्रत्यय परे हों तो भाषित पुंस्क से परे ऊङ् वर्जित स्त्रीलिङ्ग को पुंवत् कार्य हो ॥४२॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषुङ्योऽनेकाचोह्रस्वः ॥४३॥

घ०षु[७], ङ्यः[६], अ० चः[६], ह्रस्वः[१] । भाषितपुंस्काद्यो ङी तदन्तस्याऽनेकाचोह्रस्वः स्यात् घादिषु परेषु । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्म-णिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता । ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावश्च निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि । तैः ( कुत्सितानि कुत्सनैः ) इति समासः ॥ घसंज्ञक, रूप, कल्प, चेलड्, ब्रुव, गोत्र, मत तथा हत परे होंतो भाषित पुंस्क से परे ङी प्रत्यान्त अनेकाच् स्त्रीवाचक शब्द को ह्रस्वादेश हो ॥४३॥

## नद्याः शेषस्यान्यतरस्याम् ॥४४॥

नद्याः[६], शेषस्य[६], अ०म् (अ)। अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च, घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा ॥ पूर्व सूत्रोक्त घादि परे हो तो अङ्यन्त नदी संज्ञक तथा ङ्यन्त एकाच् को विकल्प से ह्रस्व हो ॥४४॥

## उगितश्च ॥ ४५॥

उ०तः[५], च(अ) । उगितश्च परा या नदी तदन्तस्य घादिषु परेषु ह्रस्वो वा स्यात् । विदुषितरा । विदुषीतरा । ह्रस्वाभावपक्षे तसिलादिष्विति पुंवद्भावः ॥ पूर्वोक्त घादि प्रत्यय परे हों तो उगित से परे नद्यन्त को विकल्प से ह्रस्व हो ॥४५॥

## आन्महतः समानाधिकरणजातीययोः ॥४६॥

आत्[1], म० तः[1], स०, योः[7] । समानाधिकरणे उत्तरपदे जातीये च परे महत आकारोऽन्तादेशः स्यात्। सवर्णदीर्घे महादेवः। महाबलः। महाजातीयः॥ (महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च) ॥ महतो महत्या वा घासः-महाघासः। महाकरः। महाविशिष्टः॥ (अष्टनः कपाले हविषि)॥ अष्टाकपालः। (गवि च युक्ते)॥ गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं स्यात्। अष्टागवं शकटम्॥ समानाधिकरण उत्तरपद तथा जातीयर् प्रत्यय परे हों तो महत् शब्द को आकारादेश हो॥ ४६॥

## द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ॥४७॥

द्व्य० नः[6], स० म्[7], अ० त्योः[7] । द्वि अष्टन् इत्येतयोराकारादेशः स्यादबहुव्रीह्यशीत्योः सङ्ख्यायामुत्तरपदे। द्वौ च दश च द्वादश। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः॥ (प्राक्शताद्वक्तव्यम्)॥ नेह-द्विशतम्। द्विसहस्रम्।। अष्टशतम्। अष्टसहस्रम्॥ बहुव्रीहि समास और अशीति को छोड़कर सङ्ख्यावाचक उत्तरपद परे हो तो द्वि और अष्टन् शब्द को आकारादेश हो॥ ४७॥

## त्रेस्त्रयः ॥४८॥

त्रेः[6], त्रयः[1] । त्रि शब्दस्य त्रयः स्यादबहुव्रीह्यशीत्योः सङ्ख्यायामुत्तरपदे त्रयश्च दश च त्रयोदश। त्रयश्च विंशतिश्च त्रयोविंशतिः। त्रयस्त्रिंशत्॥ बहुव्रीहि समास और अशीति वर्जित सङ्ख्यावाचक शब्द परे होतो त्रि शब्द को त्रय आदेश हो॥ ४८॥

## विभाषा[1] चत्वारिंशत्प्रभृतौ[7] सर्वेषाम्[6] ॥ ४९ ॥

चत्वारिंशत् प्रभृतौ सङ्ख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः। सर्वेषां द्व्यष्टनो त्रेश्च प्रागुक्तं वा स्यात्। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। अष्टचत्वारिंशत्। अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत्। एवं पञ्चाशत्षष्टिसप्ततिनवतिषु॥ बहुव्रीहि समास और अशीति वर्जित चत्वारिंशत् आदि सङ्ख्यावाचक उत्तरपद परे हो तो द्वि अष्टन् और त्रि शब्द को आकार तथा त्रय आदेश विकल्प से हों॥ ४९॥

## हृदयस्यहृल्लेखयदणलासेषु ॥ ५० ॥

हृ०स्य[6] हृत्[1],ले०षु[7] । हृदयस्य हृदादेशः स्याल्लेखादिषु परेषु। हृदयं लिखतीति-हृल्लेखः। हृदयस्य प्रियम्-हृद्यम्। हृदयस्येदम्-हार्दम्। हृदयस्य लासः-हृल्लासः। लेखेत्यण्तस्य ग्रहणम्। घञि तु हृदयलेखः॥ लेख, यत्, अण् तथा लास उत्तरपद परे हो तो हृदय शब्द को हृत् आदेश हो॥ ५०॥

## वा[अ] शोकष्यञ्रोगेषु[7] ॥ ५१ ॥

शोकष्यञ् रोगेषु परेषु हृदयस्य हृदादेशो वा स्यात्। हृच्छोकः। हृदयशोकः। सौहार्द्यम्। सौहृदय्यम्। हृद्रोगः। हृदयरोगः॥ शोक, ष्यञ् तथा रोग उत्तरपद परे हो तो हृदय शब्द को विकल्प से हृत् आदेश हो॥ ५१॥

## पादस्य पदाऽऽज्यातिगोपहतेषु ॥ ५१ ॥

पादस्य[6], पद[1], आ० षु[7] । एषूत्तरपदेषु पादस्य पदेति अदन्त आदेशः स्यात्। पादाभ्यामजतीति-पदाजिः। पदातिः। (आज्यातिश्चां पादे च)॥ इतीण् प्रत्ययः।

अजेर्व्यभावो निपातनात् । पदगः । पदं पहतः । पदोपहतः ॥ आजि, आति ग और उपहत उत्तरपद परे हों तो पाद शब्द को पद आदेश हो ॥ ५२ ॥

## पद्यत्यतदर्थे ॥ ५३ ॥

पद्¹, यति⁷, अ० र्थे⁷ । अतदर्थे यति परे पादस्य पत् स्यात् । पादौ विध्यन्ति-पद्याः शर्कराः । पद्याः कण्टकाः ॥ ( इके चरतावुपसङ्ख्यानम् ) ॥ पादाभ्यां चरति-पदिकः । पर्पादित्वात् ष्ठन् ॥ अतदर्थ यत्प्रत्यय परे होंतो पाद शब्दको पद् आदेशहो॥

## हिमकाषिहतिषु⁷ च॰ ॥ ५४ ॥

पषूत्तरपदेषु पादस्य पत् स्यात् । पद्धिमम् । पत्काषी । पद्भ्यां हतिः-पद्धतिः ॥ हिम, काषिन् और हति परे हो तो पाद शब्द को पद् आदेश हो ॥ ५४ ॥

## ऋचः⁶ शे⁷ ॥ ५५ ॥

ऋचः पादस्य पत् स्याच्छे परे । गायत्रीं-पच्छः शंसति । पादम्पादमित्यर्थः ॥ शकारादि प्रत्यय परे हो तो ऋक् सम्बन्धी पाद शब्द को पत् आदेश हो ॥ ५५ ॥

## वा॰ घोषमिश्रशब्देषु⁷ ॥ ५६ ॥

पषूत्तरपदेषु पादस्य पद् वा स्यात् । पद्घोषः । पादघोषः । पन्मिश्रः, पादमिश्रः । पच्छब्दः । पादशब्दः ( निष्के चेति वाच्यम् ) ॥ पन्निष्कः । पादनिष्कः ॥ घोष (शब्द) मिश्र तथा शब्द उत्तरपद परे हों तो पाद शब्द को विकल्प से पद् आदेश हो ॥ ५६ ॥

## उदकस्योदः संज्ञायाम् ॥ ५७ ॥

उ० स्य⁶, उदः¹, स० म्⁷ । उदमेघः । उदवाहः । ( उत्तरपदस्य चेति वाच्यम् ) ॥ क्षीरोदः । नीलोदः ॥ संज्ञा विषयमें उत्तरपद परे हो तो उदक शब्दको उद आदेशहो॥

## पेषंवासवाहनधिषु⁷ च॰ ॥ ५८ ॥

पषूत्तर पदेषूदकस्योदः स्यात् । उदपेषं पिनष्टि ( स्नेहने पिष इति णमुल् ) उदकस्य वासः-उदवासः। उदकस्य वाहनः उदवाहनः। उदकं धीयते यस्मिन् स उदधिर्घटः॥ पेषम् , वास, वाहन तथा धि उत्तरपद परे हों तो उदक शब्दको उद आदेश हो ॥५८॥

## ⁷एकहलादौ ⁷पूरयितव्येऽन्यतरस्याम्॰ ॥ ५९ ॥

पूरयितव्ये हलादौ वोदकस्योदः स्यात् । उदकुम्भः । उदककुम्भः । उदपात्रम् । उदकपात्रम् ॥ पूरयितव्य वाचक एक हलादि उत्तरपद परे हो तो उदक शब्दको विकल्प से उद आदेश हो ॥ ५९ ॥

## ⁷मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहेषु च॰ ॥ ६१ ॥

पषूत्तरपदेषूदकस्योदो वाऽऽदेशः स्यात् । उदकेन मन्थः-उदमन्थः । उदकमन्थः। उदकेनौदनः-उदौदनः । उदकौदनः। उदसक्तुः। उदकस्य विन्दुः-उदविन्दुः। उदकविन्दुः। उदकस्य वज्रः-उदवज्रः । उदकवज्रः । उदकं बिभर्त्तीति-उदभारः। उदकभारः । उदकं हरतीति-उदहारः । उदकहारः । उदकस्य वीवधः—उदवीवधः । उदकवीवधः । उदकं गाहत इति—उदगाहः । उदकगाहः ॥ मन्थ,ओदन,सक्तु, विन्दु, वज्र, भार, हार,वीवध ( बँगी ).तथा गाह उत्तरपद परे होतो उदक शब्दको विकल्पसे उद आदेश हो ॥६०॥

## इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥

इकः[6], ह्रस्वः[1], अङ्यः[6], गा० स्य[6] । इगन्तस्य अङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः। ब्रह्मबन्धूपुत्रः। (इयङुवङ् भाविनामव्ययानां च नेति वाच्यम्) श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ ( अभ्रुकुंसादीनामिति वक्तव्यम् ) ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेन विधियत इति व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः-कौटिल्यम् ॥ उत्तरपद परे हो तो अङ्यन्त इगन्त को विकल्प से ह्रस्व हो ॥ ६१ ॥

## ७एक[6] तद्धिते[7] च[अ] ॥ ६२ ॥

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतम्-एकरूप्यम् । उत्तरपदे । एकस्याः क्षीरम्-एकक्षीरम् ॥ तद्धित और उत्तरपद परे हो तो एका शब्द को ह्रस्वादेश हो ॥६२॥

## ङ्यापोः[6] संज्ञाछन्दसोः[7] बहुलम्[1] ॥ ६३ ॥

ङ्यन्तस्यावन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वः स्यात् । अजक्षीरम् । रेवति पुत्रः । न च भवति । नान्दीकरः । छन्दसि । न च भवति । फाल्गुनी पौर्णमासी ॥ संज्ञा तथा छन्द विषय में ङ्यन्त तथा आवन्त को बहुल करके ह्रस्व हो ॥६३॥

## त्वे[7] च[अ] ॥ ६४ ॥

त्वप्रत्यये परे ङ्यापोर्बहुलं ह्रस्वः स्यात् । अजाया भावः-अजत्वम् । अजात्वम् । रोहिण्या भावः-रोहिणित्वम् । रोहिणीत्वम् ॥ त्व प्रत्यय परे हो तो ङ्यन्त और आबन्त को बहुल करके ह्रस्व हो ॥६४॥

## इष्टकेषीकामालानां[6] चिततूलभारिषु[7] ॥ ६५ ॥

चितादिषूत्तरपदेषु इष्टकादीनां यथासङ्ख्यं ह्रस्वः स्यात् । इष्टकचितम् । इषीकतूलम् । मालभारी ॥ चित, तूल तथा भारी उत्तरपद परे हो तो यथासङ्ख्य इष्टका, इषीका और माला को ह्रस्वादेश हो ॥६५॥

## खित्यनव्ययस्य ॥ ६६ ॥

खिति[7], अ०स्य[6] । खिदन्ते परेऽव्ययस्य ह्रस्वः स्यात् । कालिमन्या । हारिणिमन्या ॥ खिदन्त उत्तरपद परे हो तो अव्यय वर्जित इतर शब्द को ह्रस्वादेश हो ॥६६॥

## अरुर्द्विषदजन्तस्य[6] मुम्[1] ॥ ६७ ॥

खिदन्ते उत्तरपदे अव्ययवर्जितस्ये अरुषो द्विषतः अजन्तस्य च मुमागमः स्यात् । अरुन्तुदः । द्विषन्तपः । कालिमन्या ॥ खिदन्त उत्तरपद परे हो तो अव्यय वर्जित अरुष् द्विषत् और अजन्तों को मुम् का आगम हो ॥६७॥

## इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥

इचः[6], एकाचः[6]; अम्(१), प्र०त(अ), च(अ) । इजन्तादेकाचोऽम् स्यात् स च स्वयम्वत् खिदन्ते परे । ( औतोम्-शसोः ) नाम्मन्यः । ( यामशसोः ) स्त्रियम्मन्यः, स्त्रीम्मन्यः ।

नृ-नरम्मन्यः। भुवम्मन्यः श्रीयमात्मानं मन्यते श्रियम्मन्यं कुलम्। भाष्यकारवचनात्। श्रीशब्दस्य ह्रस्वो मुमसोरभावश्च॥ खिदन्त उत्तरपद परे होतो एकाच् इजन्तको मुम्का आगम हो और वह अम् प्रत्यय के सदृश हो॥६८॥

## वाचंयमपुरन्दरौ[१] च[अ]॥ ६९॥

वाचंयमपुरन्दरावितिनिपात्येते। वाचं यमः-मौनव्रती, मितभाषी वा। पुरन्दारयतीति-पुरन्दरः॥ वाचं यम् और पुरन्दर शब्द निपातित हैं॥६९॥

## कारे[७] सत्यागदस्य[६]॥ ७०॥

कारे उत्तरपदे सत्यस्य अगदस्य च मुमागमः स्यात्। सत्यङ्करोतीति सत्यस्य वा कारः—सत्यङ्कारः। अगदङ्कारः॥ (अस्तोश्चेति वक्तव्यम्)॥ अस्तुङ्कारः (धेनोर्भव्यायाम्)॥ धेनुम्भव्या॥ (लोकस्य पृणे)॥ लोकम्पृणः। पृण इति—मूल विभुजादित्वात् कः॥ (इत्येऽनभ्याशस्य)॥ अनभ्याशमित्य दूरतः परिहर्त्तव्य इत्यर्थः॥ (भ्राष्ट्राग्न्योरिन्धे) भ्राष्ट्रमिन्धः। अग्निमिन्धः॥ (गिलेऽगिलस्य)॥ तिमीलिङ्गः॥ (गिलगिले च)॥ तिमिङ्गिलगिलः॥ (उष्णभद्रयोः करणे)॥ उष्णंकरणम्। भद्रंकरणम्॥ कार शब्द उत्तरपद परे होतो सत्य और अगद शब्द को मुमागम हो॥७०॥

## श्येनतिलस्य[६] पाते[७] ञे[७]॥ ७१॥

श्येन तिल-एतयोर्मुमागमः स्यात् ञप्रत्यये परे पातशब्दोत्तरपदे। श्येनपातोऽस्यां क्रीडायां वर्त्तते-श्यैनम्पाता मृगया। तिलपातोऽस्यां वर्त्तते-तैलम्पाता॥ ञ प्रत्यय परे हो तो पातशब्द के उत्तरपद होने पर श्येन और तिल शब्द को मुम् का आगम हो॥

## रात्रेः[६] कृति[७] विभाषा[१]॥७२॥

रात्रेः कृदन्त उत्तरपदे मुमागमो वा स्यात्। रात्रिञ्चरः। रात्रिचरः। रात्रिमटः। रात्र्यटः॥ कृदन्त उत्तरपद परे होतो रात्रि शब्दको विकल्पसे मुम्का आगम हो॥७२॥

## [१]नलोपोनञः[६]॥ ७३॥

नञो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणः—अब्राह्मणः॥ उत्तरपद परे हो तो नञ् के नकार का लोप हो॥ ७३॥

## तस्मान्नुडचि॥ ७४॥

तस्मात्[५], नुट्[१], अचि[७]। लुप्तनकारान्नञ् उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। अनुष्ट्रः॥ उस लुप्त नकार नञ् से परे अजादि उत्तरपदको नुट्का आगमहो॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु[७] प्रकृत्या[३]॥७५॥

एषु नञ् प्रकृत्या स्यात्। न भ्राजत इति—नभ्राट्। भ्राजते क्विबन्तस्य नञ्समासः। न पातीति—नपात्। शत्रन्तः न वेत्तीति-न वेदाः। इत्यसुन्नन्तः। सत्सु साधवः-सत्याः। नसत्याः—असत्याः। न असत्याः—नासत्याः। न मुञ्चतीति—नमुचिः। न कुलमस्य—नकुलः। नास्य खमस्तीति—नखम्। न स्त्री न पुमान् नपुंसकम्। न क्षरते क्षीयते वा—नक्षत्रम्। नक्रामतीति—नक्रः। नास्मिन्नकमिति—नाकम्॥ नभ्राट्, नपात्, नवेदाः,

नासत्या, नमुचि, नकुल, नख,नपुंसक,नक्षत्र,नक्र तथा नाक शब्दों में नञ् प्रकृतिसे रहे॥

## एकादिश्चैकस्य चादुक् ॥ ७६ ॥

एकादिः[1], च(अ), एकस्य[6], च(अ), आदुक्[1]। एकादिर्नञ् प्रकृत्या स्यात्। एक शब्दस्यादुगागमः। नञो विंशत्या समासे कृते एकशब्देन सह (तृतीया) इति योग-विभागात् समासः। अनुनासिक विकल्पः। एकेन न विंशतिः—एकान्नविंशतिः। एकादूनविंशतिः। एकोनविंशतिरित्यर्थः॥ एक शब्द जिसके आदि में हो ऐसा नञ् प्रकृति से रहे और एक शब्द को आदुक् का आगम हो॥७६॥

## नगोऽप्राणिष्वन्यतरस्याम् ॥ ७७ ॥

नगः[1], अ० षु[7], अ० म्(अ)। नग इत्यत्र नञ् प्रकृत्या वा स्यात्। नगाः, अगाः—पर्वताः। नगाः, अगाः—वृक्षाः॥ प्राणि वर्जित उत्तरपद परे हो तो नग का नञ् विकल्प प्रकृति से रहे॥ ७७॥

## सहस्य[6] सः[1] संज्ञायाम्[7] ॥ ७८ ॥

संज्ञायां विषये सहस्य सः स्यादुत्तरपदे। सपलाशम्। सशिंशपम्॥ संज्ञाविषय में सह शब्द को स आदेश हो उत्तरपद परे हो तो॥७८॥

## ग्रन्थान्ताधिके[7] च[अ] ॥ ७९ ॥

अनयोः परयोः सहस्य सः स्यादुत्तरपदे। ससंग्रहं व्याकरणमधीते। सद्रोणा-खारी॥ ग्रन्थ तथा अधिक अर्थ में वर्त्तमान सह शब्द को स आदेश हो॥७९॥

## [7]द्वितीये च[अ] अनुपाख्ये[7] ॥ ८० ॥

अनुमेये द्वितीये सहस्य सः स्यात्। साग्निः कपोतः॥ परोक्षार्थ बोधक द्वितीय परे हो तो सह शब्द को स आदेश हो॥ ८०॥

## [7]अव्ययीभावे[7] चाऽकाले[7] ॥ ८१ ॥

अकालेऽव्ययीभावे सहस्य सः स्यात्। सचक्रम्॥ कालवाचक से भिन्न उत्तरपद परे हो तो अव्ययीभाव समास में सह शब्द को स आदेश हो॥८१॥

## वोपसर्जनस्य ॥ ८२ ॥

वा०(अ) उ० स्य[6]। बहुव्रीह्यवयवस्य सहस्य सः वा स्यात्। पुत्रेण सह—सपुत्रः, सहपुत्रो वा, आगतः॥ बहुव्रीहि अवयव वाचक सह शब्द को विकल्प से स आदेश हो॥

## [1]प्रकृत्याऽऽशिषि[7] ॥ ८३ ॥

आशिषि विषये सहशब्दः प्रकृत्या स्यात्। स्वस्ति राज्ञे सह पुत्राय। सहाऽमात्याय॥ (अगोवत्सहलेष्विति वाच्यम्)॥ सगवे। सवत्साय। सहलाय॥ आशीर्वाद विषय में सहशब्द प्रकृति से रहे॥ ८३॥

## समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु ॥८४॥

स० स्य[6], छ० सि[7], अ० षु[7]। छन्दसि विषये मूर्द्धादि वर्जितेषु उत्तरपदे समा-नस्य सः स्यात्॥ अनुसखा—सयूथ्यः। योनः सनुत्यः—तत्रभव इत्यर्थे (सगर्भ सयूथ

सनुनायत् ) ॥ छन्दोविषय में मूर्द्धादि गणपठित तथा उदर्क से भिन्न उत्तरपद परे हों तो समान शब्द को सकारादेश हो ॥ ८४ ॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु॰ ८५

एषु द्वादशसूत्तरपदेषु समानस्य सस्स्यात् । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः । ज्योतिस् आदि उत्तरपद परे हों तो सह शब्द को सकारादेश हो ॥८५॥

## चरणे॰ ब्रह्मचारिणि॰ ॥८६॥

चरणे समानत्वेन गम्ये ब्रह्मचारिण्युत्तरपदे समानस्य सः स्यात् । चरणः-शाखा । ब्रह्म—वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति—ब्रह्मचारी । समानो ब्रह्मचारी-सब्रह्मचारी ॥ चरण गम्यमान हो तथा ब्रह्मचारिन् शब्द भी परे हो तो समान शब्द को सकारादेश हो ॥ ८६ ॥

## ॰तीर्थे ये॰ ॥ ८७ ॥

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः—एकगुरुक इत्यर्थः । ( समानतीर्थे वासी ) इति यत् ॥ यत् प्रत्ययान्त तीर्थ उत्तरपद परे हो तो समानशब्द को सकारादेश हो ॥ ८७ ॥

## विभाषोदरे ॥ ८८ ॥

विभाषा', उदरे॰ । यादौ प्रत्यये विवक्षिते समानस्य वा सः स्यात् । सोदर्यः । समानोदर्यः । समानोदरे शयित इति यत् ॥ यत् प्रत्ययान्त उदर शब्द परे होतो समान शब्द को विकल्प से सकारादेश हो ॥ ८८ ॥

## दृग्दृशवतुषु' ॥ ८९ ॥

एषु परेषु समानस्य सः स्यात् । सदृक् । सदृशः ॥ ( दृक्षे चेति वक्तव्यम् ) ॥ सदृक्षः । वतुरुत्तरार्थः ॥ दृक्, दृश तथा वतु प्रत्यय परे हों तो समान शब्द को सकारादेश हो ॥ ८९॥

## इदङ्किमोरीश्की ॥ ९० ॥

दृक्दृशवतुषु परेषु इदम ईश, किमः की, स्यात् । ईदृक् । ईदृशः । इयान् । कीदृक् । कीदृशः । कियान् । किमिदंभ्यां वो घ इति वतुप् । ( दृक्षे चेति वक्तव्यम् ) ॥ ईदृक्षः । कीदृक्षः ॥ दृक् दृश तथा वतु प्रत्यय परे हों तो इदम् और किम् शब्द को यथाक्रम ईश और की आदेश हो ॥ ९० ॥

## ⁵आसर्वनाम्नः⁶ ॥ ९१ ॥

सर्वनाम्न आकारादेशः स्याद् दृक्दृशवतुषु । तादृक् । तादृशः । तावान् । यादृक् । यादृशः । यावान ॥ ( दृक्षे च ) तादृक्षः । यादृक्षः ॥ दृक् दृश तथा वतु प्रत्यय परे हों तो सर्वनाम को आकारादेश हो ॥ ९१ ॥

## विष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये ॥ ९२ ॥

वि०योः', च(अ), टे.', अद्रि', अ० तौ॰, अ० ये॰ । विष्वग्देवयोः सर्वनाम्नश्चटे-

रद्र्यादेशः स्याद् वप्रत्ययान्तेऽञ्चतौ परे । विष्वगञ्चतीति—विष्वद्र्यङ् । देवद्र्यङ् । सर्वनाम्नः । तद्र्यङ् । यद्र्यङ् ॥ वप्रत्ययान्त अञ्चति उत्तरपद परे हो तो विष्वक्, देव तथा सर्वनाम के टि भाग को अद्रि आदेश हो ॥ ९२ ॥

## समः[६] समि[१] ॥ ९३ ॥

वप्रत्ययान्तेऽञ्चतौ परे समः सम्यादेशः स्यात् । सम्यक् । सम्यञ्चौ । सम्यञ्चः । वप्रत्ययान्त अञ्चति परे हो तो सम् को समि आदेश हो ॥ ९३ ॥

## तिरसस्तिर्यलोपे ॥ ९४ ॥

तिरसः[६], तिरि[१], अलोपे[७] । अलुप्ताऽकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः ॥ वप्रत्ययान्त अञ्चति उत्तरपद परे हो तो अलोप विषय में तिरस् शब्द को तिरि आदेश हो ॥ ९४ ॥

## सहस्य[६] सध्रिः[१] ॥ ९५ ॥

वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्रिः स्यात् । सध्र्यङ् । सध्र्यञ्चौ । सध्र्यञ्चः ॥ वप्रत्ययान्त अञ्चति उत्तरपद परे होनो सह शब्द को सध्रि आदेश हो ॥ ९५ ॥

## [७]सधमादस्थयोश्छन्दसि[७] ॥ ९६ ॥

छन्दसि विषये एतयोरुत्तरपदयोः सहस्य सध आदेशः स्यात् । सोमः सधस्थम् । इन्द्रत्वास्मिन्त्सधमादे ॥ छन्दोविषय में माद तथा स्थ उत्तरपद परे हो तो सह शब्द को सध् आदेश हो ॥ ९६ ॥

## [५]द्व्यन्तरुपसर्गेभ्योऽपः[६] ईत्[१] ॥ ९७ ॥

अप इति कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्योऽपस्य चेत् स्यात् । द्विर्गता आपो यस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । समापोदेवयजनम्, इति तु समा आपो यस्मिन्निति बोध्यम् । ( अवर्णान्ताद् वा ) प्रेपम् । परेपम् । प्रापम् । परापम् ॥ 'द्वि अन्तर और उपसर्ग से परे अप् शब्द को ईकारादेश हो ॥ ९७ ॥

## ऊदनोर्देशे ॥ ९८ ॥

ऊत्[१], अनोः[५], देशे[७] । अनोः परस्य-अपस्य ऊत् स्याद् देशाभिधाने । अनूपो-देशः ॥ देश अर्थ में अनु से परे अप शब्द को ऊकारादेश हो ॥ ९८ ॥

## अषष्ठ्यतृतीयास्थस्याऽन्यस्यदुगाशीराशास्थाऽऽस्थितोत्सुकोतिकारकरागच्छेषु ॥ ९९ ॥

अ० स्य[६], अन्यस्य[६], दुक्[१], आ० षु[७] । अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः । अन्यदीयः ॥ आशिष, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग और छ प्रत्यय परे हों तो अषष्ठीस्थ तथा अतृतीयास्थ से अन्य शब्द को दुक् का आगम हो ॥ ९९ ॥

## [७]अर्थे विभाषा[१] ॥ १०० ॥

अर्थे शब्देपरे अन्यस्य वा दुगागमः स्यात्। अन्यदर्थः। अन्यार्थः॥ अर्थ शब्द उत्तर पद परे हो तो अन्य शब्द को विकल्प से दुक् का आगम हो॥ १००॥

## कोः[6] कत्[1] [7]तत्पुरुषेऽचि[7] ॥ १०१ ॥

अजादावुत्तरपदे कु इत्येतस्य कत् स्यात् तत्पुरुषे समासे। कुत्सितोऽश्वः--कदश्वः। कदन्नम्। (औ च) कुत्सिताश्रयः कत्त्रयः॥ तत्पुरुष समास में अजादि उत्तरपद परे हो तो कु शब्द को कत् आदेश हो॥ १०१॥

## [7]रथवदयोश्च[अ] ॥ १०२ ॥

एतयोरुत्तरपदयोः कोः कदादेशः स्यात्। कद्रथः। कद्वदः॥ रथ और वद उत्तरपद परे हों तो कुशब्द को कत् आदेश हो॥ १०२॥

## तृणे[7] च[अ] जातौ[7] ॥ १०३ ॥

तृणे उत्तरपदे जातौ चाभिधेयायां कोः कदादेशः स्यात्। कत्तृणम्॥ जाति अभिधेय हो और तृण उत्तरपद परे हो तो कु शब्द को कत् आदेश हो॥ ३॥

## का[1] पथ्यक्षयोः[7] ॥ १०४ ॥

अनयोरुत्तरपदयोः कोः काऽऽदेशः स्यात्। कापथः। काक्षः॥ पथिन् तथा अक्ष उत्तरपद परे हो तो कु शब्द को का आदेश हो॥ १०४॥

## ईषदर्थे ॥ १०५ ॥

ईषद् (अ), अर्थे[7]। ईषदर्थे वर्त्तमानस्य कोः कादेशः स्यात्। ईषज्जलम्--काजलम्। कामधुरम्। अजादावपि परत्वात् कादेशः--काम्लः॥ ईषद् (कुछ) अर्थ में वर्त्तमान कु शब्द को का आदेश हो॥ १०५॥

## विभाषा[1] पुरुषे[7] ॥ १०६ ॥

पुरुषशब्द उत्तरपदे कोः का वादेशः स्यात्। कापुरुषः। कुपुरुषः॥ पुरुष उत्तरपद परे हो तो कु शब्द को विकल्प से का आदेश हो॥ १०६॥

## कवञ्चोष्णे ॥ १०७ ॥

कवङ्[1], च (अ) उष्णे[7]। उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात्। कवोष्णम्। कोष्णम्। कदुष्णम्॥ उष्ण उत्तरपद परे हो तो कु शब्द को कवङ् तथा का विकल्प से आदेश हो॥ १०७॥

## [7]पथि [अ]चच्छन्दसि[7] ॥ १०८ ॥

छन्दसि विषये पथि उत्तरपदे कोः कवं काच वा स्यात्। कवपथः। कापथः। कुपथः॥ छन्द विषय में पथिन् शब्द उत्तरपद परे हो तो कु शब्द को कवङ् तथा का आदेश विकल्प से हो॥ १०८॥

## पृषोदरादीनि[1] यथोपदिष्टम्[1] ॥ १०९ ॥

पृषोदर प्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः। पृषद् उदरं पृषोदरम्--नलोपः। वारिवाहको--बलाहकः--पूर्वपदस्य वः, उत्तरपदादेश्च लत्वम्॥ पृषोदरादि गणपठित शिष्ट यथोपदिष्ट निपातित हैं॥ १०९॥

## सङ्ख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ ॥ ११० ॥

सङ्० स्य[६], अह्नस्य[६], अहन्[१], अ०म्(अ), ङौ[७] । सङ्ख्यादि पूर्वस्याह्नस्याहनादेशो वा स्यात् ङौ परे । द्व्यह्नि । द्व्याहनि । द्व्यह्ने । व्यगतमहः-व्यह्नः । व्यह्नि । व्यहनि । व्यह्ने । सायमह्नः-सायाह्नः । सायाह्नि । सायाहनि । सायाह्ने ॥ ङि विभक्ति परे हो तो सङ्ख्यादि तथा सायम् पूर्व हैं, जिसके ऐसे अह्न शब्दके स्थान में विकल्प से अहन् आदेश हो ॥ ११० ॥

## [७]ढ्रलोपे पूर्वस्य[६] [१]दीर्घोऽणः[६] ॥१११॥

ढकाररेफयोर्लोपो यस्मिन् सढ्रलोपः तत्र पूर्वस्याणोदीर्घः स्यात् । लीढम् । मीढम् । पुनारमते । अग्नीरथः ॥ लोप निमित्त ढ और रेफ परे हों तो पूर्व अण् को दीर्घ हो ॥

## सहिवहोरोदवर्णस्य ॥११२॥

स० होः[६], ओत्[१], अ० स्य[६] । ढ्रलोपे सति अनयोरवर्णस्य ओत् स्यात् । सोढा । सोढुम् । सोढव्यम् । वोढा । वोढुम् । वोढव्यम् ॥ लोप निमित्त ढकार तथा रेफ परे हो तो सह और वह के अवर्ण को ओकारादेश हो ॥११२॥

## साढ्यै साढ्वा साढेति निगमे ॥११३॥

साढ्यै[१], साढ्वा[१], साढा[१], इति (अ) निगमे[७] । इमे शब्दा निगमे निपात्यन्ते । साढ्यै समन्तात् । साढ्वा शत्रून् । सहेः क्त्वा प्रत्यये ओत्वाभावः । पक्षे क्त्वाप्रत्ययस्य यौभावः । साढेति तृचि रूपम् ॥ निगम ( वेद ) विषय में साढ्यादिशब्द निपतित हैं ॥

## संहितायाम्[७] ॥११४॥

अधिकारोऽयम् । द्व्यचो तस्तिङ इति यावत् ॥ इस के आगे ( ६।३।१३५) सूत्र तक जो कथन किया जावेगा वह संहिता में होगा यह अधिकार है ॥११४॥

## कर्णे[७] लक्षणस्याविष्टाष्ट[६] पञ्चमणिभिन्नछिन्नच्छिद्रस्रुव स्वस्तिकस्य[६] ॥११५॥

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः स्यात् विष्टादीन् विहाय । द्विगुणाकर्णः । त्रिगुणाकर्णः ॥ कर्ण शब्द उत्तरपद परे हो तो विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न छिन्न, छिद्र, स्रुव और स्वस्तिक को छोड़कर लक्षण वाचक को दीर्घ हो ॥११५॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु[७] क्वौ[७] ॥११६॥

एषु क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः स्यात् । उपानत् । 'नहोधः'-इति हस्य धत्वम् । 'खरि च'-इति धस्य तत्वम् । नीवृत् । प्रावृट् । मर्माविध् नीरुक् । ऋतीषट् । तरीतट् ॥ नहि, वृति, वृषि, व्यधि, रुचि, सहि तथा तनि क्विप् प्रत्ययान्त उत्तरपद परे हों तो पूर्वपदको दीर्घ हो ॥

## वनगिर्योः[७] संज्ञायां[७] कोटरकिंशुलुकादीनाम्[६] ॥११७॥

संज्ञायां विषये कोटरादीनां वने परे किंशुलुकादानां गिरौ परे दीर्घः स्यात् । कोटरावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । (८ । ४ । ४) इति णत्वम् । गिरौ । किंशुलुकागिरिः । अञ्जनागिरिः ॥ संज्ञा विषय में वन तथा गिरि परे हो तो यथाक्रम कोटरादि तथा किंशुलादि गणपठित शब्दों को दीर्घ हो ॥११७॥

## वले[७] ॥११८॥

संज्ञायां विषये वलप्रत्ययपरे पूर्वस्य दीर्घः स्यात् । कृषीवलः ॥ संज्ञा विषय में वलप्रत्यय परे हो तो पूर्वपदको दीर्घ हो ॥११८॥

## मतौ[७] [६]बह्वचोऽनजिरादीनाम्[६] ॥११९॥

संज्ञायां विषये मतौ परे बह्वचोऽजिरादि वर्जितस्य दीर्घः स्यात् । उदुम्बरावती । अमरावती ॥ संज्ञा विषय में मतुप् प्रत्यय परे हो तो अजरादि गणपठित वर्जित बह्वच् को दीर्घ हो ॥११९॥

## शरादीनां[६] च[अ] ॥१२०॥

संज्ञायां विषये शरादीनां च मतौ दीर्घः स्यात् । शरावती । वंशावती ॥ संज्ञाविषय में मतुप् प्रत्यय परे हो तो शरादियों को दीर्घ हो ॥१२०॥

## इको वहेऽपीलोः ॥१२१॥

इकः[६], वहेः[७], अपीलोः[६] । पीलुवर्जितस्येगन्तस्य दीर्घः स्याद् वहे । ऋषीवहम् । कपीवहम् । ( अपील्वादीनामिति वाच्यम् ) तेनेह नो । दारुवहम् ॥ वह उत्तरपद परे हो तो पीलु वर्जित इगन्त पूर्वपद को दीर्घ हो ॥१२१॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥१२२॥

उ०स्य[६], घञि[७], अ०ष्ये[७], ब० म्[१] । घञन्ते परे उपसर्गस्य बहुलं दीर्घः स्यात्, नतु मनुष्ये । परीपाकः । परिपाकः ॥ घञन्त परे हो तो उपसर्ग को बहुल करके दीर्घ हो मनुष्य परे हो तो नहो ॥१२२॥

## इकः[६] काशे[७] ॥१२३॥

उपसर्गस्येगन्तस्य दीर्घः स्यात् काशे । वीकाशः । नीकाशः । अनूकाशः ॥ काश उत्तरपद परे हो तो इगन्त उपसर्ग को दीर्घ हो ॥१२३॥

## दस्ति ॥१२४॥

दः[६], ति[७] । इगन्तस्योपसर्गस्य दीर्घस्स्याद् दादेशो यस्तकारस्तदादावुत्तरपदे । ( खरि च )- इति चर्त्वमाश्रयात् सिद्धम् । नीत्तम् । वीत्तम् । परीत्तम् ॥ दा धातु के स्थान में हुआ त् परे हो तो इगन्त उपसर्ग को दीर्घ हो ॥१२४॥

## अष्टनः[६] सञ्ज्ञायाम्[७] ॥१२५॥

संज्ञायां विषयेऽष्टनो दीर्घः स्यात् । अष्टावक्रः । अष्टापदम् ॥ संज्ञाविषय में उत्तर-पद परे हो तो अष्टन् शब्द को दीर्घादेश हो ॥१२५॥

## छन्दसि[७] च[अ] ॥१२६॥

छन्दसि चाऽष्टनो दीर्घः स्यात् । अष्टापदो ॥ उत्तरपद परे हो तो छन्दो विषय में भी अष्टन् शब्द को दीर्घादेश हो ॥१२६॥

## चितेः[६] कपि[७] ॥१२७॥

कपि परे चितेर्दीर्घः स्यात् । एकचितीकः ॥ कप् प्रत्यय परे हो तो चिति शब्द को दीर्घादेश हो ॥१२७॥

## विश्वस्य[६] वसुराटोः[७] ॥१२८॥

वसुराटोः परयोः विश्वशब्दस्य दीर्घः स्यात्। विश्वावसुः। विश्वाराट्॥ वसु तथा राट् परे हो तो विश्व शब्द को दीर्घादेश हो ॥१२८॥

## नरे[७] संज्ञायाम्[७] ॥१२९॥

संज्ञायां विषये नरे परे विश्वस्य दीर्घः स्यात्। विश्वानरः॥ नर शब्द परे होतो संज्ञा विषय में विश्व शब्द को दीर्घादेश हो ॥१२९॥

## मित्रे[७] चर्षौ[७] ॥१३०॥

मित्रे चोत्तरपदे ऋषावभिधेये विश्वस्य दीर्घः स्यात्। विश्वामित्रः॥ मित्र शब्द उत्तरपद परे होतो ऋषि वाच्य होने पर विश्वशब्द को दीर्घादेश हो ॥१३०॥

## मन्त्रेसोमाश्वेन्द्रियविश्वदेव्यस्य[६] मतौ[७] ॥१३१॥

एषां दीर्घः स्यान्मन्त्रे मतौ परे। सोमावती। अश्वावती। इन्द्रियावती। विश्वदेव्यावती॥ मन्त्र विषयमें मतुप् प्रत्यय परे होतो सोम, अश्व, इन्द्रिय और विश्वदेव्य शब्द को दीर्घादेश हो ॥१३१॥

## ओषधेश्चविभक्तावाप्रथमायाम् ॥१३२॥

ओषधेः[६], च(अ), वि०तौ[७], अ०म्[७]। ओषधीशब्दस्य विभक्तावप्रथमायां परतो दीर्घः स्यान् मन्त्रे। ओषधीषु। ओषधीभ्यः॥ प्रथमा वर्जित विभक्ति परे होतो ओषधि शब्द को दीर्घादेश हो ॥१३२॥

## [७]ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणाम्[६] ॥१३३॥

ऋचि विषये एषां दीर्घः स्यात्। आतूनइन्द्र। नूमर्तः। उतवा घा स्यालात्। मक्षूगोमन्तमीमहे। भरता जातवेदसम्। तंगि निथा देशस्य ङित्वपक्षे ग्रहणम्। कूमनः। अत्रागौः। उरूष्याणः॥ ऋग्वेद विषय में तु, नु, घ, मक्षु, तङ्कु, त्र और उरुष्य शब्द को दीर्घाऽदेश हो ॥१३३॥

## इकः[६] सुञि[७] ॥१३४॥

मन्त्रे इगन्तस्य सुञि परे दीर्घः स्यात्। अभीषुणः सखीनाम्। सुञ इति षः। नश्च धातुस्थोरुषुभ्य इति णः॥ सुञ् (निपात) परे होतो ऋचा विषयमें इगन्तको दीर्घ हो॥

## द्व्यचोऽतस्तिङः ॥१३५॥

द्व्यचः[६], अतः[६], तिङः[६]। ऋग्विषये द्व्यचस्तिङन्तस्यातो दीर्घः स्यात्। विद्मा हिन्वा सत्पतिं शरणीनाम्॥ ऋचा विषयमें द्व्यच् तिङन्तके अकारको दीर्घाऽदेश हो॥

## निपातस्य[६] च[अ] ॥१३६॥

ऋग्विषये निपातस्य च दीर्घः स्यात्। एवाते। अच्छाते॥ ऋग्विषय में निपात को दीर्घ हो॥ १३६॥

## अन्येषामपिदृश्यते ॥१३७॥

अ०म्[६], अपि(अ), द०ते(क्रि)। अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः।

यत्र दीर्घत्वं न विहितं दृश्यते च तत्राऽनेन ग्रहीतव्यमिति । केशाकेशि । दण्डादण्डि । मुष्टीमुष्टि । पूरुषः । श्वापदः ॥ दीर्घ विधानसे भिन्न इतरोंको भी दीर्घ देखा जाता है ॥

चौ[७] ॥१३८॥

चौ परे पूर्वस्य दीर्घः स्यात् । दधीचः पश्य । मधूचः । मधूचे ॥ अञ्चति का अकार परे हो तो पूर्वपद को दीर्घादेश हो ॥१३८॥

सम्प्रसारणस्य[६] ॥१३९॥

अस्य दीर्घः स्यात् । कारीषगन्धीपुत्रः ॥ उत्तरपद परे हो तो सम्प्रसारणान्त पूर्वपद को दीर्घ हो ॥ १३९ ॥

इति षष्ठाऽध्यायस्य तृतीयः पादः ॥

---

# अथ षष्ठाऽध्यायस्य चतुर्थः पादः ।

अङ्गस्य[६] ॥ १ ॥

अधिकारोऽयमासप्तमाऽध्यायपरिसमाप्तेः ॥ इसके आगे जो कुछ कथन किया जायगा, वह अङ्गको हो, यह अधिकार सप्तमाध्यायकी समाप्ति पर्यन्त जानना चाहिये ॥

हलः[५] ॥ २ ॥

अङ्गावयवाद्धलः परं यत् सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् । हूनः । जीनः ॥ अङ्गावयव हल् से परे सम्प्रसारण अङ्ग को दीर्घादेश हो ॥ २ ॥

नामि[७] ॥ ३ ॥

नामि परेऽजन्तस्याऽङ्गस्य दीर्घः स्यात् । बालानाम् । अग्नीनाम् । वायूनाम् । कर्तॄणाम् ॥ नाम् ( नुट् सहित आम् ) परे हो तो अङ्ग को दीर्घादेश हो ॥ ३ ॥

न[अ] तिसृचतसृ[लुप्त६] ॥ ४ ॥

अनयोर्नामि दीर्घो न स्यात् । तिसृणाम् । चतसृणाम् । नाम् परे हो तो तिसृ और चतसृ अङ्गों को दीर्घादेश न हो ॥ ४ ॥

छन्दस्युभयथा ॥ ५ ॥

छ० सि०, उ० था (अ) । छन्दसि विषये तिसृ चतस्रोर्नामि दीर्घो वा स्यात् । तिसृणाम् । तिसॄणाम् । चतसृणाम् । चतसॄणाम् ॥ छन्दोविषय में नाम् परे हो तो तिसृ तथा चतसृ अङ्गों को विकल्प से दीर्घ हो ॥ ५ ॥

नृ[लु०६] च[अ] ॥ ६ ॥

नृ इत्यस्य नामि दीर्घो वा स्यात । नृणाम् । नॄणाम् ॥ नाम् परे हो तो नृ शब्द को विकल्प से दीर्घादेश हो ॥ ६ ॥

नोपधायाः[६] ॥ ७ ॥

नान्तस्याऽङ्गस्योपधाया दीर्घः स्यान्नामि परे । पञ्चानाम् । सप्तानाम् । अष्टानाम् । नवानाम् ॥ नाम् परे हो तो नान्त अङ्ग की उपधा को दीर्घादेश हो ॥ ७ ॥

## [७]सर्वनामस्थाने [७]चाऽसम्बुद्धौ[७] ॥ ८ ॥

नान्तस्याऽङ्गस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने च परे। राजा। राजानौ। राजानः। राजानम्। राजानौ। सामानि सन्ति। सामानि पश्य॥ सम्बुद्धि भिन्न सर्वनामस्थान परे हो तो नान्त अङ्ग की उपधा को दीर्घादेश हो॥ ८॥

## वा[अ] षपूर्वस्य[६] निगमे[७] ॥ ९ ॥

निगमे षपूर्वस्याचो नोपधाया वा दीर्घः स्यादसम्बुद्धौ सर्वनाम स्थाने परे। तक्षाणम्। तक्षणम्॥ सम्बुद्धि वर्जित सर्वनाम स्थान परे हो तो षकार है, पूर्व जिसके ऐसे नान्त अङ्ग की उपधा को विकल्प से दीर्घादेश हो॥ ९॥

## सान्तमहतः[६] संयोगस्य[६] ॥ १० ॥

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनाम स्थाने परे। श्रेयान्। श्रेयांसौ। श्रेयांसः। श्रेयांसम्। श्रेयांसौ। श्रेयांसि। यशांसि। महतः। महान्। महान्तौ। महान्तः। महान्तम्। महान्तौ॥ सम्बुद्धि वर्जित सर्वनाम स्थान परे हो तो सान्त संयोग और महत् शब्द की उपधाको दीर्घादेश हो॥ १०॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्[६] ॥११॥

एषामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे। आपः सन्ति। तृन्। कर्त्ता, कर्त्तारौ, कर्त्तारः—कटान्। तृच्। कर्त्ता, कर्त्तारौ, कर्त्तारः—कटस्य। स्वरे विशेषः। स्वसृ। स्वसा। स्वसारौ। स्वसारः। स्वसारम्। स्वसारौ। नप्तृ। नप्ता। नप्तारौ। नप्तारः। नप्तारम्। नप्तारौ। नेष्टृ। नेष्टा। नेष्टारौ। नेष्टारः। त्वष्टृ। त्वष्टा। त्वष्टारौ। त्वष्टारः। क्षत्तृ। क्षत्ता। क्षत्तारौ। क्षत्तारः। होतृ। होता। होतारौ। होतारः। पोतृ। पोता। पोतारौ। पोतारः। प्रशास्तृ। प्रशास्ता। प्रशास्तारौ। प्रशास्तारः॥ सम्बुद्धि वर्जित सर्वनाम स्थान परे हो तो अप् तृन्नन्त, तृजन्त, स्वसृ, नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ और प्रशास्तृ अङ्गों की उपधा को दीर्घादेश हो॥ ११॥

## इन्हन्पूषार्यम्णां[६] शौ[७] ॥१२॥

एषामन्तानामङ्गानामुपधाया दीर्घः स्याच्छौ परे। बहुदण्डीनि। बहुवृत्रहाणि। बहुपूषाणि। बह्वर्यमाणि॥ शि परे हो तो इन्, हन्, पूषन् तथा अर्यमन्नन्त अङ्गों की उपधा को दीर्घादेश हो॥ १२॥

## सौ[७] च[अ] ॥१३॥

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे। धनी। वृत्रहा। पूषा। अर्य्यमा॥ सम्बुद्धि वर्जित सु परे हो तो भी इन् हन् पूषन् तथा अर्यमन् अङ्गों की उपधा को दीर्घादेश हो॥ १३॥

## [६]अत्वसन्तस्य [अ]चाऽधातोः[६] ॥१४॥

धातुभिन्नस्याऽत्वसन्तस्य चाऽसम्बुद्धौ सौ परे दीर्घः स्यात्। भवान्। कृतवान्। असन्तस्य। सुपयाः। सुयशाः॥ सम्बुद्धि वर्जित सु परे हो तो धातुवर्जित अत्वन्त और असन्त अङ्गों की उपधा को दीर्घादेश हो॥ १४॥

## अनुनासिकस्य[६] क्विझलोः[७] क्ङिति[७] ॥१५॥

अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति परे । प्रशान् । शान्तिः । शंशान्तः । यङ्लुगन्तादयं तस् ॥ क्विप् और झलादि कित् तथा ङित् प्रत्यय परे हो तो अनुनासिकान्त अङ्ग की उपधा को दीर्घादेश हो ॥ १५ ॥

## अज्झनगमां[६] सनि[७] ॥१६॥

अजन्तानां हन्तेः अजादेशगमेश्च दीर्घः स्याज्झलादौ सनि परे । चिकीर्षति । जिघांसति । अधिजिगांसते—पठितुमिच्छतीत्यर्थः ॥ झलादि सन् परे हो तो अजन्त हन् तथा इङ् धातु के स्थान में आदेश हुए गमि अङ्ग को दीर्घ हो ॥१६॥

## तनोतेर्विभाषा ॥१७॥

त० तेः[६], वि० षा[१] । तनोतेरङ्गस्योपधाया दीर्घो वा स्याज्झलादौ सनि परे । तितांसति । तितंसति । तितनिषति 'तनिपति दरिद्राणाम्' इतीड् विकल्पः ॥ झलादि सन् प्रत्यय परे हो तो तनोति अङ्ग की उपधा को दीर्घादेश हो ॥१७॥

## क्रमश्च क्त्वि ॥१८॥

क्रमः[६], च(अ), क्त्वि[७]। क्रम उपधाया दीर्घो वा स्याज्झलादौ क्त्वि परे । क्रान्त्वा । क्रन्त्वा । झलि किम् ? । क्रमित्वा ॥ झलादि क्त्वा प्रत्यय परे हो तो क्रम अङ्ग की उपधा को विकल्प से दीर्घादेश हो ॥ १८ ॥

## च्छ्वोः शूडनुनासिके च ॥१९॥

च्छ्वोः[६], शूट्[१], अ० के[७], च(अ) । सतुक्कस्य छस्य वस्य च क्रमात्—श ऊठ् इमावादेशौ स्यातामनुनासिके क्वौ झलादौ च क्ङिति । प्रश्नः । स्योनः ।। सिवेरौणादिके न प्रत्यये लघुपधगुणात् पूर्वमूट् क्रियते । क्वौ छस्य । शब्दप्राट् । वकारस्य । अक्षद्यूः । झलादौ छस्य पृष्टः । पृष्टवान् । पृष्ट्वा । वकारस्य । द्यूतः । द्यूतवान् । द्यूत्वा ॥ अनुनासिक, क्विप् और झलादि कित् ङित् प्रत्यय परे हो तो तुक् सहित छकार तथा वकार के स्थान में क्रम से श और ऊठ् आदेश हों ॥ १९ ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥२०॥

ज्व० म्[६], उप०याः[६], च(अ) । ज्वरादीनामुपधावकारयोरूठ् स्यात्, क्वौ, झलादावनुनासिकादौ च प्रत्ययपरे । जूः । जुरौ । जुरः । जूर्त्तिः । तूः । तुरौ । तुरः । तूर्त्तिः । स्रूः । स्रुवौ । स्रुवः । स्रूनः । स्रूतवान् । स्रूतिः । ऊः । उवौ । उवः । ऊतिः । मूः । मुवौ । मुवः। मूनः। मूतवान् । मूतिः ॥ क्विप् और झलादि अनुनासिकादि प्रत्यय परे हों तो ज्वर,त्वर,स्रिवि, अव और मव अङ्गकी उपधा तथा वकारके स्थानमें ऊठ् आदेशहो॥

## राल्लोपः ॥२१॥

रात्[५], लोपः[१] । रेफात् परयोश्छ्वोर्लोपः स्यात् क्वौ, झलादावनुनासिके च प्रत्यये परे । मुर्छा । मूः, मुरौ, मुरः । मूर्त्तः, मूर्त्तवान् । मूर्त्तिः । वकारस्य । तूः, तुरौ, तुरः । तूर्णः, तूर्णवान् । तूर्त्तिः ॥ क्विप् और झलादि अनुनासिक प्रत्यय परे हों तो रेफ से परे छकार तथा वकार का लोप हो ॥२१॥

## असिद्धवदत्राऽऽभात् ॥२२॥

असिद्धवत्(अ), अत्र(अ); आभात्[४]। अधिकारोऽयम् ॥ इस पाद की समाप्ति तक असिद्धवत् का अधिकार है अर्थात् उत्तरोत्तर की अपेक्षा पूर्व किया कार्य असिद्ध हो॥

## श्नान्नलोपः ॥ २३ ॥

श्नात्[४], नलोपः[१]। श्नमः परस्य नस्य लोपः स्यात्। अनक्ति भनक्ति ॥ श्नम् से परे नकार का लोप हो ॥२३॥

## अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥

अ०म्[४], हलः[१], उ०याः[१], क्ङिति[७]। अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपः स्यात् क्ङिति परे। स्रस्तः। ध्वस्तः। स्रस्यते। ध्वस्यते। सनीस्रस्यते। दनीध्वस्यते ॥ कित् ङित् प्रत्यय परे हो तो अनिदित और हलन्त अङ्गों की उपधा नकार का लोप हो ॥ २४ ॥

## दंशसञ्जस्वञ्जां[६] शपि[७] ॥ २५ ॥

एषां शपि परे उपधाया नकारस्य लोपः स्यात्। दशति। सजति। परिष्वजते ॥ शप् प्रत्यय परे हो तो दंश सञ्ज और स्वञ्ज अङ्गों के उपधा नकार का लोप हो ॥२५॥

## रञ्जेश्च ॥ २६ ॥

रञ्जेः[६], च(अ)। रञ्जेश्च शपि परे उपधाया नकारस्य लोपः स्यात्। रजति। रजतः। रजन्ति ॥ शप् परे हो तो रञ्ज अङ्ग के उपधा नकार का लोप हो ॥ २६ ॥

## घञि[७] च[अ] भावकरणयोः[७] ॥ २७ ॥

भावकरणवाचिनि घञि परे रञ्जेरुपधाया नकारस्य लोपः स्यात्। भावे—आश्चर्यो रागः। विचित्रो रागः। करणे। रज्यतेऽनेनेति—रागः ॥ भाव तथा करणवाचक घञ् प्रत्यय परे हो तो रञ्ज अङ्ग के उपधा नकार का लोप हो ॥२७॥

## स्यदो जवे ॥ २८ ॥

स्यदः[१], जवे[७]। जवे वाच्ये स्यद इति घञि निपात्यते। स्यन्देर्नलोपो वृद्ध्यभावश्च। स्यदो वेगः। अन्यत्र स्यन्दः ॥ जव वाच्य हो तो नकार का लोप करके घञ् प्रत्ययान्त स्यद यह निपातन किया है ॥ २८ ॥

## अवोदैधौद्मप्रश्रथहिमश्रथाः[१] ॥ २९ ॥

इमे निपात्यन्ते। अवोदः—अवक्लेदनम्। एधः—इन्धनम्। ओद्मः—उन्दनम्। प्रश्रथः—विमोचनम्। हिमश्रथः—हिमविमोचनम् ॥ अवोद, एध, ओद्म, प्रश्रथ तथा हिमश्रथ घञ् प्रत्ययान्त निपातित हैं ॥२९॥

## नाञ्चेः पूजायाम् ॥ ३० ॥

न(अ), अञ्चेः[६], पू० म्[७]। पूजायामर्थे अञ्चेर्नकारस्य लोपो न स्यात्। अञ्चिता अस्य गुरवः ॥ पूजार्थ में अञ्चति अङ्ग के उपधा नकार का लोप न हो ॥३०॥

## क्त्वि[७] स्कन्दिस्यन्दोः[६] ॥ ३१ ॥

क्त्वि परे अनयोर्नलोपो न स्यात्। स्कन्त्वा। स्यन्त्वा। स्यन्दित्वा। ऊदित्वादिड् वा ॥ क्त्वा प्रत्यय परे हो तो स्कन्द और स्यन्द के नकार का लोप न हो ॥३१॥

## जान्तनशाम्[6] विभाषा[अ] ॥ ३१ ॥

क्त्वि प्रत्यय परे जान्तानां नशेश्च न लोपो वा स्यात्। भक्त्वा। भङ्क्त्वा। रक्त्वा। रङ्क्त्वा। नष्ट्वा। नंष्ट्वा। इट्पक्षे नशित्वा॥ क्त्वा प्रत्यय परे हों तो जकारान्त और नश् अङ्ग के नकार का विकल्प से लोप हो॥ ३२॥

## भञ्जेश्च चिणि ॥ ३३ ॥

भञ्जेः[6], च(अ), चिणि[7]। चिणि परे भञ्जेश्च नलोपो वा स्यात्। अभाजि, अभञ्जि॥ चिण् प्रत्यय परे हो तो भञ्ज अङ्ग के नकार का लोप विकल्प से हो॥ ३३॥

## शास इदङ्हलोः ॥ ३४ ॥

शासः[6], इत्[1], अ०लोः[7]। शास उपधाया इत् स्यादङि, हलादौ क्ङिति च परे। अशिषत्। अशिषताम्। अशिषन्। हलादौ किति। शिष्टः। शिष्टवान्। ङिति। शिष्टस्तौ। वयं शिष्मः (क्वौ च शास इत्वं भवतीति वाच्यम्)॥ आर्यान्—शास्तीति—आर्यशीः। मित्रशीः॥ अङ् तथा हलादि कित् ङित् प्रत्यय परे हों तो शास् अङ्ग की उपधा को इकारादेश हो॥ ३४॥

## शा[1] हौ[7] ॥ ३५ ॥

हौ परे शासः शा इत्यादेशः स्यात्। अनुशाधि। प्रशाधि॥ हि परे हो तो शास् अङ्ग को शा आदेश हो॥ ३५॥

## हन्तेर्जः ॥ ३६ ॥

हन्तेः[6], जः[1]। हौ परे हन्तेर्ज इत्यादेशः स्यात्। जहि शत्रून्॥ हि परे हो तो हन् धातु के स्थान में ज आदेश हो॥३६॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥

अ० म्[6], अनु० पः[6], झलि[7], क्ङिति[7]। अनुदात्तोपदेशानां वनतेस्तनोत्यादीनां चानुनासिकलोपः स्याज् झलादौ क्ङिति प्रत्यय परे। यमु—यत्वा। यतः। यतवान्। यतिः। रमु—रत्वा। रतः। रतवान्। रतिः। यमि, रमि, गमि, नमि, हनि, मन्यतयोऽनुदात्तोपदेशाः। तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु, तनोत्यादयः॥ झलादि कित् ङित् प्रत्यय परे हो तो अनुदात्तोपदेश वनति और तनोत्यादिकों के अनुनासिक का लोप हो॥३७॥

## वा[अ] ल्यपि[7] ॥ ३८ ॥

अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि परे। प्रत्यय। प्रयम्य। प्ररत्य। प्ररम्य। प्रणत्य। प्रणम्य। आगत्य। आगम्य। आहत्य। मकारान्तमन्तरो नित्यलोपः॥ ल्यप् प्रत्यय परे हो तो अनुदात्तोपदेश वनति तथा तनोत्यादि अङ्गों के अनुनासिक का लोप विकल्प से हो॥३८॥

## न क्तिचि दीर्घश्च ॥ ३९ ॥

न(अ), क्तिचि[7], दीर्घः[1], च(अ)। क्तिचि प्रत्यये परेऽनुदात्तोपदेशादीनां दीर्घानुना-

सिकलोपौ न स्याताम्। यन्तिः। वन्तिः। तन्तिः॥ क्तिच् प्रत्यय परे हो तो अनुदात्तोपदेशादि अङ्गों के अनुनासिक का लोप और इनको दीर्घादेश न हो ॥३९॥

## गमः[६] क्वौ[७] ॥ ४० ॥

गमः क्वौ परेऽनुनासिकलोपः स्यात्। अङ्गगत्। कलिङ्गगत्। (गमादीनामिति वक्तव्यम्)॥ संयत्। परीतत्॥ (ऊङ् च गमादीनामिति वक्तव्यम्)॥ लोपश्च। अग्रेगूः। भ्रमु—अग्रेभ्रूः॥ क्विप् प्रत्यय परे होतो गम् धातु के अनुनासिक का लोपहो॥

## विड्वनोरनुनासिकस्यात् ॥ ४१ ॥

विटि वनि च परे, अनुनासिकस्य आत् स्यात्। विजायत इति–विजावा। ओण्–अवावा। विटि। अब्जाः। गोजाः॥ विट् तथा वन् प्रत्यय परे हों तो अनुनासिकान्त अङ्ग को आकारान्तादेश हो ॥४१॥

## जनसनखनाम्[६] सञ्झलोः[७] ॥ ४२ ॥

एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ च क्ङिति। जातः। जातवान्। जातिः। सिषासति। सातः। सातवान्। सातिः। खातः। खातवान्। खातिः॥ झलादि सन् और झलादि कित् ङित् प्रत्यय परे हो तो जन्, सन् तथा खन् अङ्गों को आकारादेश हो। ॥४२॥

## ये[७] विभाषा[अ] ॥ ४३ ॥

यादौ क्ङिति परे जनसनखनामात्वं वा स्यात्। जायते। जन्यते। जाजायते। जञ्जन्यते। सायते सन्यते। सासायते। संसन्यते। खायते। खन्यते। चाखायते। चङ्खन्यते॥ यकारादि कित् ङित् प्रत्यय परे होतो जन् सन् तथा खन् अङ्गों को विकल्प से आकारादेश हो ॥ ४६॥

## तनोतेर्यकि ॥ ४४ ॥

तनोतेः[६], यकि[७]। यकि परे तनोतेराकारोऽन्तादेशो वा स्यात्। तायते। तन्यते॥ यक् प्रत्यय परे हो तो तनु अंग को विकल्प से आकारादेश हो ॥ ४४॥

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥

सनः[६], क्तिचि[७], लोपः[१], च(अ), अस्य[६], अ०म् (अ)। सनोतेः, क्तिचि प्रत्यये परे आत्वं वा लोपश्च वा स्यात्। सातिः। सतिः। सन्तिः॥ क्तिच् प्रत्यय परे होतो सन् अङ्ग को आकारादेश तथा नकार का लोप विकल्पसे हो॥

## आर्द्धधातुके[७] ॥ ४६ ॥

अधिकारोऽयं न ल्यपीति यावत्॥ न ल्यपि (६।४।६९) इस सूत्रतक जो कथन किया जायगा वह आर्द्धधातुक विषय में हो यह अधिकार है॥ ४६॥

## भ्रस्जोरोपधयोरमन्यतरस्याम् ॥ ४७ ॥

भ्रस्जः[६], रोप्योः[६], रम्[१], अ०म् (अ)। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यात्। भ्रष्टा। भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्, भ्रष्टव्यम्। भर्ष्टव्यम्। भ्रज्जनम्, भर्ज्जनम्॥ भ्रस्ज अङ्ग के रेफ और उपधा को विकल्प से अम् का आगम हो॥ ४७॥

## अतो लोपः ॥ ४८ ॥

अतः[6], लोपः[1] । आर्द्धधातुके परे अकारान्तस्याङ्गस्य लोपः स्यात् । चिकीर्षिता । चिकीर्षितुम् । चिकीर्षितव्यम् ॥ आर्धधातुक परे हो तो अकारान्त अङ्ग का लोप हो ४८

## यस्य[6] हलः[5] ॥ ४९ ॥

हलः परस्य यस्य लोपः स्यादार्धधातुके । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् ॥ आर्द्धधातुकपरे होतो हल् से उत्तर यकार का लोप हो ॥ ४९ ॥

## क्यस्य[6] विभाषा[1] ॥ ५० ॥

हलः परस्य क्यस्य लोपो वा स्यादार्धधातुके । क्यच् क्यङोः सामान्येन ग्रहणम् । समिध्यिता । समिधिता । दृषद्यिता । दृषदिता । समिधमात्मन इच्छति, समिध इवाचरीति वा क्यच् क्यङौ यथायोगं कर्त्तव्यौ ॥ आर्धधातुक परे हो तो हल्—से उत्तर क्य प्रत्यय के यकार का विकल्प से लोप हो ॥ ५० ॥

## णेरनिटि ॥ ५१ ॥

णेः[6], अ०टि[7] । अनिडादावार्धधातुके परे णेर्लोपस्स्यात् । अततक्षत् । अररक्षत् । आशिशत । आटिटत् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते ॥ अनिडादि आर्धधातुक परे हो तो णि का लोप हो ॥ ५१ ॥

## निष्ठायाम्[7] सेटि[7] ॥ ५२ ॥

निष्ठायां सेटि णेर्लोपः स्यात् । कारितम् । हारितम् । गणितम् । लक्षितम् ॥ सेट् निष्ठा प्रत्यय परे होतो णि का लोप हो ॥ ५२ ॥

## जनिता[1] मन्त्रे[7] ॥ ५३ ॥

मन्त्रविषये इडादौ तृचि णिलोपो निपात्यते । येनः पिता जनिता । लोके जनयिता ॥ मन्त्र विषय में जनिता यह शब्द निपातित है ॥ ५३ ॥

## शमिता[1] यज्ञे[7] ॥ ५४ ॥

यज्ञकर्म्मणि शमितेति इडादौ णि लोपो निपात्यते । शमिता । शमीयतेत्यर्थः ॥ यज्ञ कर्म्म में शमिता शब्द निपातित है ॥ ५४ ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥

अय्[1], अ०षु[7] । आम् अन्त, आलु, आय्य, इत्नु, इष्णु; एषु, णेरयादेशः स्यात् । कारयाञ्चकार । मण्डयन्तः । स्पृहयालुः । गृहयाय्यः । स्तनयित्नुः । पोषयिष्णवः ॥ आमादि प्रत्यय परेहोतो णि को अय् आदेश हो ॥ ५५ ॥

## ल्यपि[7] लघुपूर्वात्[5] ॥ ५६ ॥

ल्यपि परे लघुपूर्वात् परस्य णेरयादेशः स्यात् । प्रशमय्य । विगणय्य । प्रणमय्य । प्रबेभिदय्य । लघुपूर्वात् किं सम्प्रधार्य ॥ ल्यप् परे होतो लघुपूर्व से परे णि को अय् आदेश हो ॥ ५६ ॥

## विभाषापः ॥ ५७ ॥

णि०षा,(अ) आपः[४] । ल्यपि परे प्राप्नोतेर्णेरयादेशो वा स्यात् । प्रापय्य । प्राप्य ॥ ल्यप् परे होतो आप्लृ अङ्ग से परे णि को अय् आदेश विकल्प से हो ॥ ५७ ॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

यु० वोः[६], दीर्घः[१], छ०न्दसि[७] । छन्दसि ल्यपि परे अनयोर्दीर्घः स्यात् । वियूय । विप्लूय । ॥ छन्दो विषय में ल्यप् परे होतो यु तथा प्लु अङ्ग को दीर्घादेश हो ॥ ५८ ॥

## क्षियः[६] ॥ ५९ ॥

ल्यपि परे क्षियो दीर्घः स्यात् । प्रक्षीय । उपक्षीय ॥ ल्यप् परे होतो क्षि अङ्ग को दीर्घादेश हो ॥ ५९ ॥

## निष्ठायामण्यदर्थे ॥ ६० ॥

नि०म्[७], अ० र्थे[७] । ण्यदर्थो भावकर्मणी ततोऽन्यत्रनिष्ठायां क्षियो दीर्घः स्यात् । आक्षीणः । प्रक्षीणः । ( ८ । २ । ४६ ) इति निष्ठा तस्य नः ॥ अण्यदर्थ निष्ठा प्रत्यय परे होतो क्षि अङ्ग को दीर्घादेशहो ॥ ६० ॥

## वाऽऽक्रोशदैन्ययोः[७] ॥ ६१ ॥

आक्रोशे, दैन्ये च गम्ये क्षियोनिष्ठायां दीर्घो वा स्यात् । क्षीणायुर्भव, क्षितायुर्वा । क्षीणोऽयं ब्रह्मचारी, क्षितो वा ॥ आक्रोश तथा दैन्य गम्यमान होतो क्षि अङ्ग को निष्ठा प्रत्यय के परे दीर्घादेश हो ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन् ग्रहदृशां-वाचिण्वदिट् च ॥ ६२ ॥

स्य० षु[७], भा० णोः[७], उ० शे[७], अ० म्[६], वा (अ), चि० त (अ), इट्[१], च (अ), स्यादिषु भावकर्मविषयेषु परेषु, उपदेशे योऽच् तदन्तानां हनादीनां च, चिणीवाङ्ग कार्य्यं वा स्यात् यदाचिण्वत् तदा इडागमश्च । चायिष्यते । चेष्यते । दायिष्यते । दास्यते । शामिष्यते । शमिष्यते । शमयिष्यते । घानिष्यते । हनिष्यते । ग्राहिष्यते । ग्रहीष्यते । ग्रहोऽलिटि दीर्घ इति प्रकृतस्येटोदीर्घत्वम् । दर्शिष्यते । द्रक्ष्यते । सिच्यज-न्तानाम् । अचायिषातामू । अचेषाताम् । अदायिषाताम् । अदिषाताम् । अशामिषाताम् । अशमिषाताम् । अघानिषाताम् । अवधिषाताम् । अहसाताम् । अग्राहिषाताम् । अग्र-हिषाताम् । अग्रहीषाताम् । अदर्शिषाताम् । अदृक्षाताम् । सीयुटि चायिषीष्ट । चेषीष्ट । दायिषीष्ट । दासीष्ट । शामिषीष्ट । शमिषीष्ट । घानिषीष्ट, वधिषीष्ट । ग्राहिषीष्ट, ग्रहि-षीष्ट । दर्शिषीष्ट, दृक्षीष्ट । तासौ । चायिता, चेता । दायिता, दाता । शामिता , शमिता । घानिता । हन्ता । ग्राहिता । ग्रहीता । दर्शिता । द्रष्टा ॥ भाव तथा कर्मवाचक स्य सिच् सीयुट् तथा तासि परे हो तो उपदेश में अजन्त, हन् , ग्रह और दृश अङ्ग को विकल्प से चिण्वत् कार्य्य तथा इडागम हो ॥

## दीङो युडचि क्ङिति ॥ ६३ ॥

दीङः[६], युट्[१], अचि[७], क्ङिति[७] । दीङो युडागमःस्यादजादौ क्ङिति परे । उपदि-दीये । उपदिदीयाते । उपदिदीयिरे ॥ अजादि कित् ङित् प्रत्ययपरे होतो दीङ्धातु को युट्का आगम हो ॥६३॥

## आतोलोप इटि च ॥ ६४॥

आतः[६], लोपः[१], इटि[७], च(अ)। अजाद्योरार्धधातुकयोः क्ङितोः इटि च परतः आकारस्य लोपः स्यात्। पपिथ। तस्थिथ। पपतुः। पपुः। धनदः। बलदः। प्रदा। प्रधा॥ अजादि तथा इडादि कित्-ङित् आर्द्धधातुकपरे होतो आकारान्त अङ्गका लोपहो॥

## ईद्यति ॥ ६५॥

ईत्[१], यति[७]। यति परे आतः ईत् स्यात्। देयम्। धेयम्। पेयम्। हेयम्॥ यत् प्रत्यय परे होतो आकारान्त अङ्गको ईकारादेश हो ॥६५॥

## घुमास्थागापाजहातिसाम्[६] हलि[७] ॥६६॥

एषामातः ईत् स्यात् हलादौ क्ङित्यार्धधातुके परे। दीयते। धीयते। देदीयते। देधीयते। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। गीयते। जेगीयते। अध्यगीष्ट। पीयते। पेपीयते। हीयते जेहीयते। अवसीयते। अवसेसीयते॥ हलादि कित् ङित् आर्द्ध-धातुक प्रत्यय परे हों तो घु संज्ञक मा, स्था, गा, पा, जहाति तथा स अङ्गों को ईकारादेश हो ॥६६॥

## एर्लिङि ॥६७॥

एः[१], लिङि[७]। घु संज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किङ्ति लिङि परे। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्॥ कित् ङित् लिङ् परे हो तो घुसंज्ञक तथा मादि अङ्गों को एकारादेश हो ॥ ६७ ॥

## [५]वाऽन्यस्य[६] संयोगादेः[६] ॥६८॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरातो वैत्वं स्यादार्धधातुके क्ङिति लिङि परे। ग्लेयात् ग्लायात्। म्लेयात्। म्लायात्॥ कित् ङित् सम्बन्धी लिङ् परे होतो घु आदि से भिन्न इतर संयोगादि आकारान्त अङ्गों को विकल्पसे एकारादेश हो॥ ६८॥

## न[अ] ल्यपि[७] ॥ ६९॥

ल्यपि परे घुमादेरीत्वं न स्यात्। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय॥ ल्यप् परे हों तो घु संज्ञक तथा मा आदि अङ्गों को ईका-रादेश न हो ॥६९॥

## मयतेरिदन्यतरस्याम् ॥ ७० ॥

मयतेः[६],इत्[१], अ०(अ)म्। मेङ इकारोऽन्तादेशो वा स्याल्ल्यपि। अपमित्य याचते। अपमाय वा॥ ल्यप् परे हों तो मयति अङ्गको विकल्प से इकारादेश हो ॥ ७०॥

## [७]लुङ्लङ्लृङ्क्ष्वडुदात्तः[१] ॥ ७१ ॥

एतेषु परेषु अङ्गस्याडागमः स्यात् सचोदात्तः। अकार्षीत् अकरोत्। अकरिष्यत्॥ लुङ् लङ् तथा लृङ् परे होतो अङ्ग को अट् का आगम हो और वह उदात्त हो ॥ ७१॥

## आडजादीनाम् ॥७२॥

आट्[१], अ० म्[६]। अजादीनामाडागमः स्याल्लुङादिषु परेषु। ऐहिष्ट। ऐहत। ऐहिष्यत्॥ अजादि अङ्गों को आट् का आगम हो लुङ्, लङ् तथा लृङ् परे होतो ॥७२॥

## छन्दस्यपि दृश्यते ॥७३॥

छन्दसि॰, अपि(अ), दृश्यते(क्रि॰)। छन्दसि विषयेऽप्याडागमो दृश्यते। अनजादीनामित्यर्थः। आनक्। आवः आनगिनि नशेः आव इति वृजोलुङि मन्त्रे घसह्वरेति लेर्लुक्॥ अजादि अङ्गों के अन्यत्र भी छन्दोविषय में आट्का आगम देखा जाता है ॥ ७३ ॥

## न माङ्योगे ॥ ७४॥

लुङ्लङ्लृङ्क्षु परेषु माङ्योगे अडाटौ न स्याताम्। मामवान् कार्षीत्। मास्मकरोत्। अप्रयोगाल्लृङ् उदाहरणं न ॥ लुङ् लङ् तथा लृङ् परे होतो माङ के योगमें अट् और आट्का आगम न हो ॥७४॥

## बहुलं छन्दस्यमाङ्योगेऽपि ॥७५॥

ब॰ म॰। छ॰ सि॰, अ॰ ग॰, अपि(अ)। छन्दसि विषये माङ्योगेऽमाङ्योगेऽपि बहुलमडाटौ स्तः। जनिष्ठा उग्रः। मावः क्षेत्रे परबीजान्यवाप्सुः॥ छन्दो विषय में माङ् का योग होनेपर तथा न होनेपर बहुलकरके अट् और आट् का आगम होता है ॥७५॥

## इरयोरे ॥ ७६॥

इ॰ यः॰, रे॰। छन्दसि विषये इरे इत्यस्य स्थाने रे इत्ययमादेशः स्यात्। प्रथमं दध्रे आपः॥ छन्दोविषय में इरे को बहुल करके रे आदेश हो ॥ ७६॥

## अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७॥

अचि॰, श्नु॰ म॰, य्वोः॰, इ॰ङौ॰। श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्य इयङुवङौ स्यातामजादौ प्रत्यये परे। प्राप्नुवन्ति। चिक्षीयतुः। चिक्षीयुः। लुलुवतुः। लुलुवुः। भ्रुवौ। भ्रुवः॥ अजादि प्रत्ययपरे होतो श्नुप्रत्ययान्त इवर्णान्त तथा उवर्णान्त धातु और भ्रू इस अङ्ग को इयङ् उवङ् आदेश हो ॥७७॥

## अभ्यासस्याऽसवर्णे ॥७८॥

असवर्णेऽचिपरेऽभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्याताम्। इयेष। उवोष॥ असवर्णी अच् परे होतो अभ्यास के इवर्ण तथा उवर्ण को इयङ् और उवङ् आदेशहो॥

## स्त्रियाः ॥७९॥

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्ययेपरे। स्त्रियौ। स्त्रियः॥ अजादि प्रत्यय परे हो तो स्त्री शब्दको इयङ् आदेश हो ॥७९॥

## वाऽम्शसोः ॥८०॥

अमि शसि च परे स्त्रिया इयङादेशो वा स्यात्। स्त्रियम्। स्त्रीम्। स्त्रियः। स्त्रीः॥ अम् तथा शस्परे होतो स्त्रीशब्द को विकल्प से इयङ् आदेश हो ॥८०॥

## इणोयण् ॥ ८१॥

इणः॰, यण्॰। अजादौ प्रत्यये परे इणोयण् स्यात्। यन्ति यन्तु। आयन्॥ अजादि प्रत्यय परे होतो इण् अङ्गको यण् आदेश हो ॥८१॥

## एरनेकाचोऽसंयोगपूर्वस्य ॥८२॥

ए:[६],अ०च:[६], अ०स्य[६]। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तोयोधातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यणादेशः स्यादजादौ प्रत्यये परे। कुमार्यौ। कुमार्यः॥ धातु का अवयव संयोग पूर्व जिसके न हो ऐसे अनेकाच् अङ्गके इवर्ण को यण् आदेश हो अजादि प्रत्यय परे हो तो ॥८२॥

## ओः[६] सुपि[७] ॥ ८३ ॥

धात्ववयवसंयोग पूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यणादेशः स्यादजादौ सुपि परे। खलप्वौ। खलप्वः॥ अजादि सुप् परे हो तो धातु का अवयव संयोग पूर्व जिसके न हो ऐसे अनेकाच् अङ्ग के अवयव को यण् आदेश हो ८३

## वर्षाभ्वश्च ॥ ८४ ॥

वर्षाभ्वः[६], च(अ)। वर्षाभ्व उवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ। वर्षाभ्वः। (दृन् करपुनः पूर्वस्य भुवो यण् वक्तव्यः)॥ दृन्भ्वम्। दृन्भ्वः। इत्यादि। खलपूवत्॥ अजादि सुप् परे हो तो वर्षाभू अङ्ग को यण् आदेश हो॥ ८४॥

## न[अ] भूसुधियोः[६] ॥ ८५ ॥

अनयोर्यण् न स्यादचि सुपि। प्रतिभुवौ। प्रतिभुवः। सुधियौ। सुधियः॥ अजादि सुप् परे हो तो भू और सुधी अङ्ग को यण् आदेश न हो॥ ८५॥

## छन्दस्युभयथा ॥ ८६ ॥

छ० सि[७], उभयथा(अ)। भूसुधियोर्यण् स्यादियङुवङौ च। वनेषु चित्रं विभ्वम्। विभुवं वा। सुध्यो हव्यमग्ने, सुधियो वा। ( तन्वादीनां छन्दसि बहुलम् )॥ तन्वं पुषेम। तनुवं वा। त्र्यम्बकम्। त्रियम्बकम्॥ छन्दोविषय में भू तथा सुधी अङ्ग को यण् और इयङ् तथा उवङ् आदेश हों॥ ८६॥

## हुश्नुवोः[६] सार्वधातुके[७] ॥ ८७ ॥

जुहोतेः श्नुप्रत्ययान्तस्याऽनेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके परे। जुह्वति। जुह्वतु। अजुह्वन्। सुन्वन्ति। सुन्वन्तु। असुन्वन्॥ अजादि सार्वधातुक परे हो तो संयोग जिसके पूर्व न हो ऐसे अनेकाच् हु और श्नु अङ्ग को यण् आदेश हो॥ ८७॥

## भुवोवुग् लुङ्लिटोः ॥ ८८ ॥

भुवः[६], वुक्[१], लु०टोः[७]। भुवोवुगागमः स्याल्लुङि लिटि चाजादौ परे। अभूवन्। अभूवम्। लिटि। बभूव। बभूवतुः। बभूवुः॥ अजादि लुङ् तथा लिट् परे हो तो भू अङ्ग को वुक् का आगम हो ॥८८॥

## ऊदुपधायागोहः ॥ ८९ ॥

ऊत्[१], उ० या०[६], गोहः[६]। गुह उपधाया ऊत् स्यादजादौ प्रत्यये परे। गूहति। गूहते॥ अजादि प्रत्यय परे हो तो गुह अङ्ग की उपधा को ऊकारादेश हो॥ ८९॥

## दोषोणौ ॥ ९० ॥

दोषः[६], णौ[७]। दुष्यतेरुपधाया ऊत् स्याण्णौपरे। दूषयति॥ णि परे हो तो दोष (दुष) अङ्ग की उपधा को ऊकारादेश हो॥ ९०॥

## वा[अ] चित्तविरागे[७] ॥ ९१ ॥

चित्तविकारेऽर्थे दोष उपधाया वोत् स्याण्णौ परे। चित्तं दूषयति, दोषयति वा॥ णि परे हो तो चित्त विराग (अप्रीतता) अर्थ में दोष अङ्ग की उपधा को विकल्प से ऊकारादेश हो॥ ९१॥

## मिताम्[६] ह्रस्वः[१] ॥ ९२ ॥

मितामुपधाया ह्रस्वः स्याण्णौ परे। घटयति। व्यथयति। जनयति। रजयति। शमयति। क्षपयति॥ णि परे हो तो मितादिगण पठित अङ्गों की उपधा को ह्रस्व हो॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चि०लोः[७],दीर्घः[१],अ०म् (अ) चिण्परे णमुल् परे च णौ परे मितामुपधाया दीर्घो वा स्यात्। अशमि। अशामि। अतमि। अतामि। शमं शमम्। शामं शामम्। तमं तमम्। तामं तामम्॥ चिण् और णमुल् परे हैं जिससे ऐसा णि परे हो तो मितादि गण पठित अङ्गों की उपधा को विकल्प से दीर्घ हो॥ ९३॥

## खचि[७] ह्रस्वः[१] ॥ ९४ ॥

खच्परे णौपरे उपधाया ह्रस्वः स्यात्। द्विषन्तं परं वा तापयतीति-द्विषन्तपः॥ खच है परे जिससे ऐसा णि परे होतो अङ्गकी उपधा को ह्रस्व हो॥ ९४॥

## ह्लादो निष्ठायाम्॥ ९५ ॥

ह्लादः[६], नि०म्[७]। ह्लादोऽङ्गस्योपधाया निष्ठायां ह्रस्वः स्यात्। प्रह्लन्नः। प्रह्लन्नवान्॥ निष्ठापरे होतो ह्लादि अङ्ग की उपधा को ह्रस्वादेश हो॥ ९५॥

## छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छादेः[६], घे[७],अ० स्य[६]। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद् घे परे। दन्ताश्छाद्यन्तेऽनेनेति—दन्तच्छदः। प्रच्छदः॥ घ प्रत्यय परे हो तो दो उपसर्ग रहित छादि अङ्ग की उपधा को ह्रस्वादेश हो॥ ९६॥

## इस्मन्त्रन्क्विषु[७] च[अ] ॥९७॥

एषु परेषु छादेरुपधाया ह्रस्वः स्यात्। छदिः। छद्म। छत्रम्। तनुच्छत्॥ इस्, मन्, त्रन्, तथा क्विप् परे होतो छादि अङ्ग की उपधा को ह्रस्वादेश हो॥ ९७॥

## गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

ग०म्[६], लोपः[१], क्ङिति[७], अ० ङि[७]। एषामुपधायालोपः स्यादजादौ क्ङिति परे, नत्वङि। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जज्ञे। जज्ञाते। जज्ञिरे। चख्नतुः, चख्नुः। जक्षतुः, जक्षुः॥ अङ् वर्जित अजादि कित् ङित् प्रत्यय परे होतो गम, हन, जन, खन तथा घस् अङ्गों की उपधाका लोप हो॥ ९८॥

## तनिपत्योश्छन्दसि ॥ ९९ ॥

त० त्योः[६], छ० सि[७]। अनयोश्छन्दसि विषये उपधाया लोपः स्यादजादौ क्ङिति।

वितत्निरे कवयः । शकुना इवपप्तिम ॥ अजादि कित् ङित् प्रत्यय परे होतो छन्द विषय में तन तथा पत अङ्गो की उपधाका लोप हो ॥ ९९ ॥

## घसिभसोर्हलि च ॥ १०० ॥

घ० सोः[६], हलि[७], च (अ) । छन्दसि विषयेऽनयोरुपधाया लोपः स्याद्धलादावजादौच क्ङिति परे । सग्धिश्चमे । बब्धान्तेहरी धाना ॥ हलादि तथा अजादि कित् ङित् प्रत्यय परे होतो छन्दो विषय में घस् तथा भस् अङ्गों की उपधा का लोप हो १००

## हुझल्भ्यो हेर्धिः ॥ १०१ ॥

हु० भ्यः[५], हेः[६], धिः[१] ॥ होर्झलन्तेभ्यश्च हेर्धिः स्यात् । जहुधि । भिन्धि । छिन्धि । अद्धि ॥ हु और झलन्त अङ्गों से परे हि को धि आदेश हो ॥ १०१ ॥

## श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु० भ्यः[५], छन्दसि[७] । एभ्य उत्तरस्य छन्दसि विषये हेर्धिः स्यात् । श्रुधीहवम् । शृणुधी गिरः । पूर्धि । कृधि । वृधि ॥ छन्द विषय में श्रु शृणु, पॄ, कृ तथा वृ अङ्गों से परे हि को धि आदेशहो ॥ १०२ ॥

## अङितश्च ॥ १०३ ॥

अङितः[५], च (अ) । छन्दसि अङितश्च हेर्धिः स्यात् ॥ रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । युयोध्यस्मज्जुहुराणमेनः ॥ छन्दो विषय में अङित अङ्ग से परे हि को धि आदेश हो ॥ १०३ ॥

## चिणो लुक् ॥१०४॥

चिणः[५], लुक्[१] । चिणः परस्य प्रत्ययस्य लुक् स्यात् । अकारि । अहारि । अलावि । अपाठि ॥ चिण् से परे प्रत्यय का लुक् हो ॥ १०४ ॥

## अतोहेः ॥ १०५ ॥

अतः[५], हेः[६], । अतः परस्य हेर्लुक् स्यात् । भव । पठ । गच्छ । पिब ॥ अदन्त अङ्ग से परे हि का लुक् हो ॥ १०५ ॥

## उतश्चप्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उतः[५], च(अ), प्रत्ययात्[५], अ०त्[५] । असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक् स्यात् । कुरु । चिनु । सुनु । शृणु ॥ संयोग जिसके पूर्व नहो ऐसा जो उकार प्रत्यय तदन्त अङ्गसे परे हिका लुक्हो ॥ १०६ ॥

## लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

लोपः[१], च (अ) अस्य[६], अ० म् ,(अ) म्वोः[७] । असंयोगपूर्वोयः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः । चिन्वः, चिनुवः । चिन्मः, चिनुमः ॥ व तथा म प्रत्यय परे हों तो असंयोग पूर्वक उकार प्रत्यय का विकल्प से लोपहो ॥ १०७ ॥

## नित्यम्[२] करोतेः[५] ॥ १०८ ॥

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद् म्वोः परयोः । कुर्वः । कुर्मः ॥ व तथा म प्रत्यय परे होंतो डुकृञ् धातु से परे उकार प्रत्यय का नित्य लोप हो ॥ १०८ ॥

## ये[7] च[अ] ॥ १०९ ॥

कृञ उलोपः स्याद् यादौ प्रत्यये परे। कुर्यात । कुर्याताम् । कुर्युः ॥ यकारादि प्रत्यय परे होतो कृञ् अङ्ग से परे उकार प्रत्यय का लोपहो ॥ १०६ ॥

## अत उत् सार्वधातुके ॥ ११० ॥

अतः[6], उत्[1] सा०के[7] । उप्रत्ययान्तस्य कृञोऽकारस्य उत स्यात्सार्वधातुके क्ङिति परे। कुरुतः । कुर्वन्ति ॥ कित् ङित् सार्वधातुक प्रत्यय परे होतो उप्रत्ययान्त कृञ् अङ्ग के अकार के स्थान में उकारादेश हो ॥ ११० ॥

## श्नसोरल्लोपः ॥ १११ ॥

श्नसोः[6], अ०पः[1] । श्नस्याऽस्तेश्चाकारस्य लोपस्स्यात् सार्वधातुके क्ङिति परे। रुन्धः । रुन्धन्ति । भिन्तः । भिन्दन्ति । स्तः । सन्ति ॥ कित् ङित् सार्वधातुक प्रत्यय परे होतो श्नम् और अस्ति के अकारका लोप हो ॥ १११ ॥

## श्नाभ्यस्तयोरातः ॥ ११२ ॥

श्ना० योः[6], आतः[6] । अनयोराते लोपः स्यात् क्ङिति सार्व धातुके परे। लुनते । लुनताम् । मिमते । मिमताम् ॥ कित् ङित् सार्वधातुक प्रत्यय परे हों तो श्ना प्रत्यय तथा अभ्यस्त संज्ञक धातुओं के आकारका लोप हो ॥ ११२ ॥

## ईहल्यघोः ॥ ११३ ॥

ई[1], हलि[7], अघोः[6] । श्नाभ्यस्तयोरात ईत स्याद्धलादौ क्ङिति सार्वधातु के परे नतु घुसंज्ञकस्य । लुनीतः । पुनीतः । लुनीते । अभ्यस्तानाम् । मिमीते मिमीषे । मिमीध्वे ॥ हलादि कित् ङित् सार्वधातुक प्रत्यय परे होतो श्ना प्रत्यय तथा अभ्यस्त संज्ञक अङ्गों के आकार को ईकारादेश हो ॥ ११३ ॥

## इद्[1] दरिद्रस्य[6] ॥ ११४ ॥

दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके परे। दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः ॥ हलादि कित् ङित् सार्वधातुक परे होतो दरिद्रा धातु के आकारको इकारादेश हो ॥ ११४ ॥

## भियोऽन्यतरस्याम् ॥ ११५ ॥

भियः[6], अ०म् (अ) । भियो वेकारः स्याद्धलादौ क्ङिति सार्वधातुके परे। बिभितः, बीभीतः । बिभिथः, बिभीथः । बिभिवः, बिभीवः । बिभिमः, बिभीमः॥ हलादि-कित् ङित् सार्वधातुक प्रत्यय परे होतो भी अङ्गको विकल्प से इकारादेश हो ॥ ११५॥

## जहातेश्च ॥ ११६ ॥

जहातेः[6], च(अ) । जहातेश्चेत् स्याद् वा हलादौ क्ङिति सार्वधातुके परे। जहितः, जहीतः । जहिथः, जहीथः ॥ हलादि कित् ङित् सार्वधातुक परे होतो जहाति अङ्गको विकल्प से इकारादेश हो ॥ ११६ ॥

## आ[1] च[अ] हौ[7] ॥ ११७ ॥

जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि, जहिहि, जहीहि ॥ हि परे होतो जहाति (ओहाक्) अङ्गको आ, इ तथा ईकार आदेश हो ॥ ११७ ॥

## लोपो यि ॥ ११८ ॥

लोपः[१], यि[७] । जहातेरालोपः स्याद्यादौ सार्वधातुके परे । जह्यात् । जह्याताम् । जह्युः ॥ यकारादि कित् ङित् सार्वधातुक प्रत्ययपरे होतो जहाति अङ्गके आकार का लोप हो ॥ ११८ ॥

## घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घ्वसोः[६], एत् [१], हौ[७], अ०पः[१], च(अ) । घोरस्तेश्च एत्वं स्याद् हौ परे अभ्यास-लोपश्च । देहि । धेहि । एधि ॥ हि परे होतो घु संज्ञक तथा अस्ति अङ्ग को एत्व और अभ्यास का लोप हो ॥ ११९ ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥

अतः[६], ए०ध्ये[७], अ०देः[६], लिटि[७] । लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवय-वस्याऽसंयुक्तहल् मध्यस्थस्याऽकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि परे । देधे । देधाते । देधिरे । पेचतुः । पेचुः ॥ कित् लिट् परे हो तो अनादेशादि अङ्ग के एक हल् मध्यस्थ अकार को एकारादेश तथा अभ्यास का लोप हो ॥ १२० ॥

## थलि च[अ] सेटि[७] ॥ १२१ ॥

थलि च सेटि परेऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकारादेशः स्यात्, अभ्यासलोपश्च । पेचिथ । शेकिथ ॥ सेट् थल् परे हो तो अनादेशादि अङ्ग एक हलम-ध्यस्थ अकार को एकारादेश तथा अभ्यास का लोप हो ॥१२१॥

## तॄफलभजत्रपश्च ॥ १२२ ॥

तॄ०पः[६], च(अ) । एषामातः स्थाने एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपाते । त्रेपिरे ॥ कित् लिट् तथा सेट् थल् परे हो तो तॄ, फल, भज और त्रपूष् अङ्ग के अकार को एकारादेश तथा अभ्यास का लोप हो ॥१२२॥

## राधो हिंसायाम् ॥ १२३ ॥

राधः[६], हिंसायाम्[७] । राधेर्हिंसायाम् एत्वाभ्यासलोपौ स्याताम्—किति लिटि, सेटि थलि च । अपरेधतुः । अपरेधुः । अपरेधिथ ॥ कित् लिट् तथा सेट् थल् परे हों तो हिंसा अर्थमें वर्त्तमान राधधातु के अकार को एकारादेश और अभ्यास का लोपहो॥

## वा[अ] जॄभ्रमुत्रसाम्[६] ॥ १२४ ॥

एषामेत्वाभ्यासलोपौ वा स्याताम् किति लिटि सेटि थलि च परे । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ ॥ कित् लिट् तथा सेट् थल परे हो तो जॄ भ्रमु तथा त्रस् अङ्गों के अच् को विकल्प से एकारादेश और अभ्यास का लोप हो ॥१२४॥

## फणाम्[६] च[ग] सप्तानाम्[६] ॥ १२५ ॥

एषामेत्वाभ्यासलोपौ वा स्याताम्—किति लिटि सेटि थलि च परे। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणुः। पफणिथ। रेजतुः। रेजुः। रेजिथ। रराजतुः। रराजुः। रराजिथ। भ्रेजे। भ्रेजाते। भ्रेजिरे। बभ्राजे। बभ्राजाते। बभ्राजिरे। भ्रेशे। भ्रेशाते। भ्रेशिरे। बभ्राशे। बभ्राशाते। बभ्राशिरे। भ्लेशे। भ्लेशाते। भ्लेशिरे। बभ्लाशे, बभ्लाशाते। बभ्लाशिरे। स्येमतुः। स्येमुः। स्येमिथ। सस्यमतुः। सस्यमुः। सस्यमिथ। स्वेनतुः। स्वेनुः। स्वेनिथ। सस्वनतुः। सस्वनुः। सस्वनिथ॥ कित् लिट् तथा सेट् थल् परे होतो फणादि सात धातुओं के अवर्ण को विकल्प से एत्व तथा अभ्यास का लोप हो॥ १२५॥

## न[ग] शसददवादिगुणानाम्[६] ॥ १२६ ॥

शसेर्ददेर्वकारादीनाम्, गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न स्याताम्। विशशसतुः। विशशसुः। विशशसिथ। ददे। ददाते। ददिरे। ववमतुः। ववमुः। ववमिथ। गुणस्य। विशशरतुः। विशशरुः। विशशरिथः॥ कित् लिट् तथा सेट् थल् परे हों तो शस, दद, वादि और गुण भूत अङ्गों के अकार को एत्व तथा अभ्यास का लोप न हो॥१२६॥

## अर्वणस्त्रसावनञः ॥ १२७ ॥

अर्वणः[६], तृ[१], असौ[७], अनञः[६]। नञा रहितस्यार्वन्नित्यस्य तृ इत्यन्तादेशः स्यात्, न तु सौ परे। अर्वन्तौ। अर्वन्तः॥ सु से भिन्न प्रत्यय परे हो तो नञ् वर्जित से परे अर्वन् शब्द को तृ आदेश हो॥१२७॥

## मघवा[१] बहुलम्[१] ॥ १२८ ॥

मघवञ्छब्दस्य तृवेत्यन्तादेशः स्यात्। मघवान्। मघवन्तौ। मघवन्तः। मघवा, मघवानौ। मघवानः॥ मघवन् शब्द को विकल्प से तृ आदेश हो॥१२८॥

## भस्य[६] ॥ १२९ ॥

अधिकारोऽयम्। आ अध्यायपरिसमाप्तेः॥ इस अध्याय की समाप्ति तक भसंज्ञा का अधिकार है॥ १२९॥

## पादः[६] पत्[१] ॥ १३० ॥

पाच्छब्दान्तं भसंज्ञकं यदङ्गं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात्। सुपदः पश्य॥ भ संज्ञक पादान्त अङ्ग को पत् आदेश हो॥१३०॥

## वसोः[६] सम्प्रसारणम्[१] ॥ १३१ ॥

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। विदुषा॥ वस्वन्त भ संज्ञक अङ्ग को सम्प्रसारण हो॥ १३१॥

## वाह ऊठ् ॥ १३२ ॥

वाहः[५], ऊठ्[१]। भस्य वाहः सम्प्रसारणमूठ् स्यात्। विश्वौहः। प्रष्ठौहः॥ वाह् अन्त भसंज्ञक अङ्ग को ऊठ् सम्प्रसारण हो॥ १३२॥

## श्वयुवमघोनामतद्धिते ॥ १३३ ॥

श्व०म्[6], अ०ते[7] । श्वन्, युवन्, मघवन् इत्येतेषां भसञ्ज्ञकानामतद्धिते परे सम्प्रसारणं स्यात् । शुनः । शुना । शुने । यूनः । यूना । यूने । मघोनः । मघोना । मघोने ॥
तद्धित वर्जित प्रत्यय परे होतो भसंज्ञक श्वन्, युवन् तथा मघवन् अङ्गको सम्प्रसारणहो॥

## अल्लोपोऽनः ॥ १३४ ॥

अ०पः[1], अनः[6] । अनित्येवमन्तस्य भस्य अकारलोपः स्यात् । राज्ञः । राज्ञा । राज्ञे॥
अन्नन्त भसंज्ञक अङ्ग के अकार का लोप हो ॥१३४॥

## षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥

ष०म्[6], अणि[7] । षपूर्वोयोऽन्—तस्य हनादेश्च—भस्याते लोपः स्यादणि परे । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । धृतराज्ञोऽपत्यम्—धार्तराज्ञः ॥ अण् प्रत्यय परे हो तो षकार है पूर्व जिसके ऐसे अन्नन्त, हन्नन्त तथा धृतराजन् भसंज्ञक अङ्गों के अकार का लोप हो ॥ १३५ ॥

## विभाषा[1] ङिश्योः[7] ॥ १३६ ॥

ङिश्योः परयोः अनोवाऽकारलोपः स्यात् । राज्ञि,राजनि । साम्नि,सामनि॥साम्नी, सामनी ङि और शीविभक्ति परे हो तो अन्नन्त अङ्ग के अकार का लोप विकल्प सेहो ॥

## न[अ] संयोगाद्[५] वमन्तात्[५] ॥ १३७ ॥

वकारमकारान्तसंयोगात्परस्यानोऽकारलोपो न स्यात् । यज्वनः । यज्वना । ब्रह्मणः। ब्रह्मणा ॥ वकारान्त और मकारान्त संयोग से परे अन्नन्त अङ्ग के अकार का लोप नहो॥

## अचः[1] ॥ १३८ ॥

लुप्तनकारस्याञ्चतेर्भस्याऽकारस्य लोपः स्यात् । दधीचः पश्य 'चौ' इति दीर्घत्वम् ॥
लुप्तनकार भसंज्ञक अञ्चति धातु के अकार का लोप हो ॥१३८॥

## उद ईत् ॥ १३९ ॥

उदः[5], ईत्[1] । उच्छब्दात् परस्य लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य ईत् स्यात् । उदीचः । उदीचा ॥ उत् शब्द से परे लुप्तनकार भसंज्ञक अञ्चति धातु के अकार को ईकारादेश हो ॥ १३९ ॥

## आतो धातोः ॥ १४० ॥

आतः[6],धातोः[6] । आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्यलोपः स्यात् । विश्वपः । विश्वपा । विश्वपे ॥ भसंज्ञक आकारान्त धातु का लोप हो ॥ १४० ॥

## मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

मन्त्रेषु[7], आङि[7], आदेः[6], आत्मनः[6] । मन्त्रेषु आङि परे आत्मन्छब्दस्यादेर्लोपः स्यात् । त्मना देवेषु ॥ मन्त्र विषय में आङ् ( टा ) विभक्ति परे हो तो आत्मन् शब्द के आदि का लोप हो ॥ १४१ ॥

## तिविंशतेर्डिति ॥ १४२ ॥

ति (लु०)[१], विंशतेः[६], डिति[७]। विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति। विंशत्या क्रीतः—विंशकः। विंशं शतम्॥ डित् प्रत्यय परे हो तो भसंज्ञक विंशति शब्द के ति का लोप हो॥ १४२॥

## टेः[६] ॥ १४३॥

डिति परे भस्य टेर्लोपः स्यात्। कतरत्, डु। कुमुद्वान्॥ डित् प्रत्यय परे हो तो भसंज्ञक के टि भाग का लोप हो॥ १४३॥

## नस्तद्धिते॥ १४४॥

नः[६], त०ते[७]। नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते परे। उपराजम्। अध्यात्मम्॥ तद्धित प्रत्यय परे हो तो नकारान्त भसंज्ञक अङ्ग के टि भाग का लोप हो॥ १४४॥

## अह्नष्टखोरेव॥ १४५॥

अह्नः[६], टखोः[७], एव(अ)। टिलोपः स्यात्। नान्यत्र। उत्तमाहः। द्वे अहनी भृतः—द्व्यहीनः क्रतुः। तद्धितार्थे द्विगुः॥ ट तथा ख प्रत्यय के ही परे अहन् शब्द के टि भाग का लोप हो॥ १४५॥

## ओर्गुणः॥ १४६॥

ओः[६], गुणः[१]। उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते परे। शङ्कव्यं दारु। पिचव्यः कर्पासः। कमण्डलव्यम् पित्तलम्॥ तद्धित प्रत्यय परे हो तो उवर्णान्त भसंज्ञक अङ्ग को गुणादेश हो॥ १४६॥

## ढे लोपेऽकद्र्वाः॥१४७॥

कद्रूभिन्नस्य उवर्णान्तस्य भस्य लोपस्स्याड्ढे परे। कामण्डलेयः। कमण्डलुशब्द-श्चतुष्पाज्जातिविशेषे॥ ढ प्रत्यय परे होतो कद्रू शब्द वर्जित भसंज्ञक उवर्णान्त अङ्ग का लोप हो॥१४७॥

## यस्येति च॥१४८॥

यस्य[६], ईति[७], च(अ)। भस्येवर्णाऽवर्णयोर्लोपः स्यादीकारे तद्धिते च परे। इवर्णा-न्तस्य ईकारे दाक्षी। इवर्णान्तस्य तद्धिते-दुलि-दौलेयः। अवर्णान्तस्य ईकारे-कुमारी। अवर्णान्तस्यतद्धिते-दाशरथिः॥ ईकार और तद्धित प्रत्यय परे होतो भसंज्ञक इवर्णान्त और उवर्णान्त अङ्गका लोप हो॥१४८॥

## सूर्यतिष्यागस्त्यमत्स्यानाम्[६] यः[६], उपधायाः[६]॥१४९॥

एषामङ्गस्योपधाया यस्य लोपः स्यादीकारे तद्धिते च परे। सूर्येणैकादिक् सौरी। तैषमहः। तैषीरात्रीः। आगस्ती। मत्सी। (मत्स्यस्य ङ्याम्)॥ (सूर्यागस्त्ययोश्छे च ङ्याम्)॥ सौरीयः सौरी। आगस्तीयः। आगस्ती॥ (तिष्यपुष्ययोर्नक्षत्राणि)॥ तिष्येण नक्षत्रेण युक्तः कालः तैषः। पौषः॥ ईकार और तद्धित प्रत्यय परे होतो भसंज्ञक सूर्य, तिष्य, अगस्त्य तथा मत्स्य अङ्गों के उपधा यकार का लोप हो॥१४०॥

## हलस्तद्धितस्य॥१५०॥

हलः[५], त० स्य[६]। हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे। गार्गी। वात्सी॥ ई परे होतो हल्से परे तद्धित के उपधा यकारका लोप हो॥ १५०॥

## आपत्यस्य[6] च[अ] तद्धितेऽनाति[7] ॥१५१॥

हल उत्तरस्याऽऽपत्ययकारस्य लोपः स्यात्तद्धिते परे नत्वाकारे। गर्गाणां समूहः—गार्गकम् ॥ अकार भिन्न तद्धित प्रत्यय परे हो तो हल् से परे अपत्यन्त सम्बन्धी यकारका लोप हो ॥१५१॥

## क्यच्व्योश्च ॥१५२॥

क्यच्व्योः[7], च(अ)। हल उत्तरस्य आपत्ययकारस्य लोपः स्यात्—क्ये च्वौ च परे। वात्सीयति। गार्गीयति। गार्गीभवति। वात्सीभवति ॥ क्य और च्वि प्रत्यय परे हो तो हल्से उत्तर अपत्य सम्बन्धी यकारका लोप हो ॥१५२॥

## बिल्वकादिभ्यश्छस्य लुक् ॥१५३॥

बि० भ्यः[5], छस्य[6], लुक्[1]। नडाद्यन्तर्गताबिल्वकादयः। तेभ्यश्छस्य लुक् स्यात्तद्धिते परे। बिल्वा यस्यां सन्ति सा—बिल्वकीया। तस्यां भवा बैल्वकाः। वेत्रकीयाः—वैत्रकाः ॥ तद्धित प्रत्ययपरे होतो बिल्वादि गणपठित से परे छकारका लुक् हो ॥१५३॥

## तुरिष्ठेमेयस्सु ॥१५४॥

तुः[6], इ० सु[7]। तृशब्दस्य लोपः स्यादिष्ठेमेयस्सु परेषु। अतिशयेन कर्त्ता-करिष्ठः। दोहीयसी धेनुः। इमनिज्ग्रहणमुत्तरार्थम् ॥ इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे होतो तृ शब्दका लोप हो ॥१५४॥

## टेः[6] ॥ १५५ ॥

भस्य टेर्लोपः स्यादिष्ठेमेयस्सु परेषु। पटिष्ठः। पटिमा। पटीयान्। लघिष्ठः। लघिमा। लघीयान् ॥ इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे हो तो भसंज्ञक टि का लोप हो ॥

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणाम्[6] यणादिपरं[1] पूर्वस्य[6] च[अ] गुणः[1]

एषां यणादि परं लुप्यते, पूर्वस्य च गुणः स्यादिष्ठादिषु परेषु। स्थूल-स्थविष्ठः। स्थवीयान्। इमनिच् तु पृथ्वादिष्वपठितेभ्यो न भवत्यनभिधानात्। दूर—दविष्ठः, दवीयान्। युवन्-यविष्ठः, यवीयान्। ह्रस्वः—ह्रसिष्ठः, ह्रसिमा, ह्रसीयान्। क्षिप्र—क्षेपिष्ठः, क्षेपिमा, क्षेपियान्। क्षुद्र—क्षोदिष्ठः, क्षोदिमा, क्षोदीयान् ॥ इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे होतो स्थूल, दूर, युवन्, ह्रस्व, क्षिप्र और क्षुद्र अङ्गों के यणादि पर का लोप तथा पूर्व इक् को गुणादेश हो ॥१५६॥

## प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणाम्[6] प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः[1] ॥ १५७ ॥

प्रियादीनां क्रमात् प्रादयः स्युरिष्ठादिषु परेषु। प्रिय—प्रेष्ठः, प्रेमा, प्रेयान्। स्थिर-स्थेष्ठः, स्थेमा, स्थेयान्। स्फिर-स्फेष्ठः, स्फेयान्। उरु-वरिष्ठः, वरिमा, वरीयान्। बहुल-बंहिष्ठः, बंहिमा, बंहीयान्। गुरु गरिष्ठः, गरिमा, गरीयान्। वृद्ध—वर्षिष्ठः, वर्षीयान्। तृप्र—त्रपिष्ठः, त्रपीयान्। दीर्घ द्राघिष्ठः, द्राघिमा, द्राघीयान्। वृन्दारक-वृन्दिष्ठः, वृन्दीयान्। प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषामिमनिज् न भवतीति नो दाह्रियते ॥ इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे हों तो प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु,

वृद्ध, तृप्र दीर्घ और वृन्दारक अङ्गों को क्रमशः प्र, स्थ, स्फ, वर, बंहि, गर्, वर्षि, त्रप्, द्राघि, और वृन्द आदेश हों ॥ १५७ ॥

## बहोर्लोपो भू च बहोः ॥१५८॥

बहोः[५], लोपः[१], भू[१], च(अ) बहोः[६]। बहोः परयोरिमेयसोर्लोपः स्याद् बहोश्च भूरादेशः। भूमा। भूयान् ॥ बहु शब्दसे परे इमनिच् तथा ईयसुन् प्रत्ययों का लोप हो और बहुशब्द को भू आदेश हो ॥१५८॥

## इष्ठस्य[६] यिट्[१] च[अ] ॥ १५९ ॥

बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च। भूयिष्ठः॥ बहुशब्दसे इष्ठन् प्रत्ययको यिट्का आगम और बहुके स्थानमें भू आदेश हो॥१५९॥

## ज्यादादीयसः ॥१६०॥

ज्यात्[५], आत्[१], ईयसः[६]। ज्यादुत्तरस्य ईयस आत् स्यात्। ज्यायान् ॥ ज्य शब्द से परे ईयसुन् प्रत्यय के ईकारको आकारादेश हो ॥१६०॥

## र ऋतो हलादेर्लघोः ॥ १६१ ॥

रः[१], ऋतः[६], हलादेः[६], लघोः[६]। हलादेर्लघोर्ऋकारस्य रः स्यात् इष्ठे मेयस्सु परेषु। पृथोभावः—प्रथिष्ठः। प्रथिमा। प्रथीयान् ॥ इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे हों तो हलादि अङ्गके लघु ऋकारको र आदेश हो ॥१६१॥

## विभाषर्जोश्छन्दसि ॥१६२॥

विभाषा(अ), ऋजोः[६], छन्दसि[७]। छन्दसिविषये ऋजुशब्दस्य ऋतः स्थाने रोवा स्याद् इष्ठेमेयस्सु परेषु। रजिष्ठम्। ऋजिष्ठं वा ॥ छन्दविषय में इष्ठनादि प्रत्यय परे होतो ऋजु शब्द के ऋकार को विकल्पसे र आदेश हो ॥ १६२॥

## प्रकृत्यैकाच् ॥१६३॥

प्रकृत्या[३], एकाच्[१]। इष्ठादिषु परेषु एकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान् ॥ इष्ठनादिप्रत्यय परे होंतो एकाच् प्रकृति से रहे ॥१६३॥

## इनण्यनपत्ये ॥१६४॥

इन्[१], अणि[७], अनपत्ये[७]। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्। युवतीनां समूहः यौवनम् ॥ अपत्यसे भिन्न अर्थमें अण् प्रत्यय परे हो तो इन्नन्त अङ्ग प्रकृति से रहे १६४

## गाथिविदथिकेशिगणिपणिनश्च ॥१६५॥

गा०नः[१], च(अ)। इमे चाऽणि प्रकृत्या स्युः। गाथिनोऽपत्यम्—गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः। अण् प्रत्यय परे होतो गाथिन्, विदथिन्, केशिन्, गणिन्, और पणिन् प्रकृति से रहें ॥१६५॥

## संयोगादिश्च ॥१६६॥

सं० दिः[१], च(अ)। संयोगादिश्चेन् प्रकृत्या स्यादणि परे। चक्रिणोऽपत्यम्—चाक्रिणः ॥ अण् प्रत्यय परे हों तो संयोगादि इन्नन्त अङ्ग प्रकृति से रहे ॥ १६६ ॥

## अन्[१] ॥१६७॥

अणि अन् प्रकृत्या स्यात्। राजनः॥ अण् प्रत्यय परे हो तो अन् प्रकृति से रहे॥

## [7]ये [6]चाऽभावकर्मणोः[7] ॥१६८॥

यादौ तद्धिते परे अन् प्रकृत्या स्यान्नतु भावकर्मणोः। राजन्यः॥ भाव कर्म वर्जित यकारादि प्रत्यय परे हो तो अन्नन्त अङ्ग प्रकृति से रहे॥ १६८॥

## [1]आत्माध्वानौ खे[7] ॥१६९॥

इमौ खे प्रकृत्या स्याताम्। आत्मनेहितम्—आत्मनीनम्। अध्वानमलङ्गामी—अध्वनीनः॥ ख प्रत्यय परे हो तो आत्मन् और अध्वन् शब्द प्रकृति से रहें॥ १६९॥

## न मपूर्वोऽपत्येऽवर्म्मणः ॥१७०॥

न(अ), मपूर्वः[1], अपत्ये[7], अ० णः[1]। मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि परे। भाद्रसामः॥ वर्मन् शब्द को छोड़कर मकार जिसके पूर्व हो ऐसा अन्नन्त प्रकृति से न रहे अण प्रत्यय परे हो तो॥ १७०॥

## ब्राह्मोऽजातौ ॥१७१॥

ब्राह्मः[1], अजातौ[7]। योगविभागोऽत्र क्रियते। (ब्राह्मः) इति निपात्यते अनपत्येऽणि। ब्राह्मं—हविः। ततः (अजातौ)। अपत्ये जातावणि ब्रह्मणोष्टिलोपो न स्यात्। ब्रह्मणोऽपत्यं-ब्राह्मणः॥ अजाति अपत्यार्थ में अण् प्रत्ययान्त ब्राह्मशब्द निपातित है॥१७१॥

## कार्मस्ताच्छील्ये ॥१७२॥

कार्मः[1], ता० ल्ये[7]। कार्म इति ताच्छील्ये णे टिलोपो निपात्यते। कर्मशीलः—कार्म्मः॥ ण प्रत्ययान्त ताच्छील्य अर्थ में कार्म शब्द निपातित है॥ १७२॥

## औक्षमनपत्ये ॥१७३॥

औक्षम्[1], अनपत्ये[7]। अत्राऽणि टिलोपो निपात्यते। औक्षम्पदम्॥ अनपत्य अर्थ में औक्ष यह निपातित है॥ १७३॥

## दाण्डिनायन हास्तिनायनाऽऽथर्वणिकजैह्माशिनेयवाशिनायनि भ्रौणहत्य धैवत्य सारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥१७४॥

इमानि निपात्यन्ते॥ दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वाशिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय और हिरण्मय शब्द निपातित हैं॥

## ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥१७५॥

ऋ० नि[1], छ०सि[7]। छन्दसीमानि निपात्यन्ते। ऋतौभवम्—ऋत्व्यम्। वास्तुनि भवम्—वास्त्व्यम्। वास्त्वं च। मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्य शब्दाद् विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्य येन सवितारथेन॥ छन्दविषय में ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी और हिरण्य शब्द निपातित हैं॥ १७५॥

इति जीवारामोपाध्याय कृतायां पाणिनि सूत्रवृत्तौ षष्ठाध्यायस्य चतुर्थः पादः समाप्तोऽयमध्यायः।

# अथ सप्तमाध्यायस्य प्रथमः पादः ।

## युवोरनाकौ ॥१॥

युवोः[६], अनाकौ[१] । यु वु-एतयोरनुनासिकयोः क्रमादन, अक, इमावादेशौ स्याताम् । नन्दनः । रमणः । सायंतनः । चिरन्तनः । ण्वुल्तृचौ । कारकः । हारकः । वासुदेवकः । आर्जुनकः । वासुदेवार्जुनाभ्यामिति वुन् ॥ अङ्ग से परे यु और वु को यथाक्रम अन और अक आदेश हों ॥ १ ॥

## आयनेयीनीयियः[१] फढखछघाम्[६] प्रत्ययादीनाम्[६] ॥२॥

प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः । नाडायनः । सौपर्णेयः । आत्मनीनम् । त्वदीयम् । क्षत्रियः ॥ अङ्ग से परे प्रत्यय के आदि फ, ढ, ख, छ और घ को यथाक्रम आयन्, एय्, ईन्, ईय् और इय् आदेश हों ॥२॥

## झोऽन्तः ॥३॥

झः[६], अन्तः[१] । प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । भवन्ति । 'अतो गुणे' ॥ अङ्ग से परे प्रत्यय के आदि झकार को अन्त आदेश हो ॥३॥

## अदभ्यस्तात् ॥४॥

अत्[१], अ०त्[५] । अभ्यस्तादङ्गादुत्तरस्य झकारस्य अदादेशः स्यात् । ददति । ददतु । दधति । दधतु ॥ अभ्यस्त अङ्गों से परे झकार को अ आदेश हो ॥ ४ ॥

## आत्मनेपदेष्वनतः ॥५॥

आ०षु[७], अनतः[५] । अनकारात् परस्याऽऽत्मनेपदेषु झस्य अदादेशः स्यात् । चिन्वते ॥चिन्वताम् ॥ आत्मनेपद विषय में अकार भिन्न अङ्ग से परे प्रत्यय के झकार को अकारादेश हो ॥ ५ ॥

## शीङो रुट् ॥६॥

शीङः[५], रुट्[१] । शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेरताम् । अशेरत ॥ शीङ् अङ्ग से परे झकार के स्थानमें आदेश हुये अकार को रुट् का आगमहो॥

## वेत्तेर्विभाषा ॥७॥

वेत्तेः[५], वि०षा[१] । वेत्तेः परस्य झादेशस्यातो वा रुडागमः स्यात् । संविद्रते । संविदते ॥ वेत्ति अङ्ग से परे झकार के स्थान में हुये अकार को विकल्प से रुट् का आगम हो ॥ ७ ॥

## बहुलम्[२] छन्दसि[७] ॥८॥

छन्दसि विषये बहुलं रुडागमः स्यात् । लोपस्त आत्मनेपदेष्विति पक्षे तलोपः । धेनवे दुह्रे । लोपाभावे घृतं दुह्रते । न च भवति । अदुहत ॥ छन्दोविषय में प्रत्यय को रुडागम बहुलता से हो ॥ ८ ॥

## अतो भिस ऐस् ॥९॥

अतः[५], भिसः[६], ऐस्[१]। अकारान्तादङ्गात् परस्य भिस ऐस्स्यात्। पुरुषैः॥ अकारान्त अङ्गसे परे भिस् प्रत्यय को ऐस् आदेश हो ॥९॥

## बहुलं[२] छन्दसि[७] ॥१०॥

छन्दसि बहुलं भिस ऐसादेशः स्यात्। नद्यैः देवेभिः॥ सर्वेभिः॥ छन्दोविषय में बाहुल्यसे भिस् को ऐस् आदेश हो ॥१०॥

## नेदमदसोरकोः ॥ ११॥

न(अ), इ०सोः[६], अकोः[६]। अककारयोरिदमदसोर्भिस् ऐस् न स्यात्। एभिः। अमीभिः॥ ककार भिन्न इदम् और अदस् शब्द के भिस् को ऐस् आदेश न हो॥ ११॥

## टाङसिङसामिनात्स्याः ॥१२॥

टा०म्[६], इ० स्याः[१]। अकारान्तादङ्गात्परेषां टाङसिङसाम् क्रमादिनादयः स्युः। वृक्षेण। वृक्षात्। वृक्षस्य॥ अकारान्त अङ्गसे परे टा, ङसि और ङस्को यथाक्रम इन आत् और स्य आदेश हों ॥१२॥

## ङेर्यः ॥१३॥

ङेः[६], यः[१]। अकारान्तादङ्गस्य परस्य ङे इत्येतस्य य इत्ययमादेशः स्यात्। धर्म्माय॥ अकारान्त अङ्गसे परे ङे को य आदेश हो ॥१३॥

## सर्वनाम्नः[५] स्मै[१] ॥१४॥

अतः सर्वनाम्नः, उत्तरस्य ङे स्मै स्यात्। सर्वस्मै। विश्वस्मै। यस्मै। कस्मै॥ अकारान्त सर्वनामसे परे ङे को स्मै आदेश हो ॥१४॥

## [६]ङसिङ्योः स्मात्स्मिनौ[१] ॥१५॥

अतः सर्वनाम्नः, उत्तरयोरेतयोरेतौ स्याताम्। सर्वस्मात्। सर्वस्मिन्॥ अकारान्त अङ्गसे परे ङसि और ङि को यथाक्रम स्मात् और स्मिन् आदेश हों ॥ १५॥

## पूर्वादिभ्यो नवभ्यो वा ॥१६॥

पू० भ्यः[५], न०भ्यः[५], वा(अ)। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्याताम्। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे॥ पूर्वादि (पूर्व, पर, अपर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर) नव सर्वनाम शब्दों से परे ङसि और ङि को यथाक्रम स्मात् और स्मिन् आदेश हों ॥१६॥

## जसः[६] शी[१] ॥१७॥

अदन्तात् सर्वनाम्नः परस्य जसः शी स्यात्। (अनेकालत्वात् सर्वादेशः) सर्वे। विश्वे। ये। के। ते॥ अदन्त सर्वनामसे परे जस् को शी आदेश हो ॥१७॥

## औङ् आपः ॥१८॥

औङः[६], आपः[५]। आबन्तादङ्गात् परस्य, औङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा प्राचाम्। यशोदे। गङ्गे॥ आबन्त अङ्गसे परे औङ् को शी आदेश हो॥ १८॥

## नपुंसकाच्च ॥१९॥

न०त्[4], च(अ) । अस्मात् परस्य औङः शी स्यात् । धने । पात्रे ॥ नपुंसक अङ्गसे परे औङ् को शी आदेश हो ॥१९॥

## जश्शसोः[6] शिः[1] ॥२०॥

क्लीबादुत्तरस्याऽनयो शिः स्यात् । वनानि सन्ति । वनानि पश्य ॥ नपुंसक अङ्गसे परे जस् और शस् को शि आदेश हो ॥२०॥

## अष्टाभ्य औश् ॥२१॥

अ०भ्यः[4], औश्[1] । कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । अष्टौ सन्ति । अष्टौ पश्य ॥ कृताकार अष्टन् शब्दसे परे जस् और शस् को औश् आदेश हो ॥२१॥

## षड्भ्यो लुक् ॥२२॥

षड्भ्यः[4], लुक्[1] । षट्संज्ञकेभ्यःपरयोर्जश्शसोर्लुक् स्यात् । षट् सन्ति । षट् पश्य। पञ्च सन्ति । पञ्च पश्य ॥ षट् संज्ञकसे परे जस् और शस् का लुक् हो ॥ २२॥

## स्वमोर्नपुंसकात् ॥२३॥

स्वमोः[7], न० त्[4] । क्लीबादङ्गात् परयोः स्वमोर्लुक् स्यात् । दध्यस्ति । दध्यानय । मध्वस्ति । मध्वानय ॥ नपुंसक अङ्गसे परे सु और अम् का लुक् हो ॥२३॥

## अतोऽम् ॥२४॥

अतः[4], अम्[1] । अतोऽङ्गात् क्लीबात् परयो स्वमोरम् स्यात् । कुण्डमस्ति । पुस्तकं पश्य ॥ अदन्त नपुंसक अङ्गसे परे सु और अम् को अम् आदेश हो ॥२४॥

## [1]अद्ड्डतरादिभ्यः[5] पञ्चभ्यः[5] ॥२५॥

पञ्चभ्यः क्लीबेभ्यः परयोः स्वमोरद्ड्डादेशः स्यात् । कतरत् तिष्ठति । कतरत् पश्यति । कतमत् । इतरत् । अन्यतरत् अन्यत् ॥ इतरादि पञ्च सर्वनामों से परे सु तथा अम् को अद्ड् आदेश हो ॥२५॥

## नेतराच्छन्दसि ॥ २६॥

न(अ), इ०त्[4], छन्दसि[7]। इतरशब्दात् परयोः स्वमोश्छन्दसि अद्ड्डादेशो न स्यात । वार्त्रघ्नमितरम् ॥ छन्दो विषय में इतर शब्द से परे सु तथा अम् को अद्ड् आदेश न हो॥

## युष्मदस्मद्भ्यां ङसोऽश् ॥२७॥

यु० म्[4], ङसः[6], अश्[1] । त्वद्‌म् । तव ७।२।९६। मम ॥ युष्मद् और अस्मद् शब्दों से परे ङस् विभक्ति को अश् आदेश हो ॥ २७ ॥

## ङे प्रथमयोरम् ॥२८॥

ङे[1](लु०), प्र०योः[6], अम्[1]। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमा द्वितीययोश्चाऽमादेशः स्यात् । तुभ्यम् । मह्यम् । त्वम् । अहम् । युवाम् । आवाम् । यूयम् । वयम् । त्वाम् । माम् । युवाम् । आवाम् ॥ युष्मद् और अस्मद् शब्द से परे ङे तथा प्रथमा, द्वितीया विभक्तियों के स्थानमें अम् आदेश हो । (७।२।९५) ॥२८॥

## शसो नः ॥२९॥

शसः[५], नः[१] । युष्मदस्मद्भ्यां परस्य शसो नकारादेशः स्यात् । युष्मान् ब्राह्मणान् । अस्मान् क्षत्रियान् । युष्मान् कुलानि । अस्मान् कुलानि ॥ युष्मद् तथा अस्मद्से परे शस् विभक्तिको नकारादेश हो ॥२९॥

## भ्यसोऽभ्यम् ॥३०॥

भ्यसः[६], अभ्यम्[१], भ्यसोऽभ्यम् , आदेशः स्यात् । युष्मभ्यम् । अस्मभ्यम् ॥युष्मद् तथा अस्मद् से परे भ्यस् को अभ्यम् आदेश हो ॥ ३० ॥

## पञ्चम्या अत् ॥३१॥

प०म्याः[६], अत्[१] । युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥ युष्मद् और अस्मद् शब्दोंसे परे पञ्चमी विभक्तिके भ्यस् को अकारादेश हो॥

## एकवचनस्य[६] च[अ] ॥३२॥

युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्येकवचनस्य अत् स्यात् । त्वत् । मत् ॥ युष्मद् और अस्मद् से परे पञ्चमीके एक वचनको अकारादेश हो ॥३२॥

## सामः[६] आकम्[१] ॥३३॥

युष्मदस्मद्भ्यामुत्तरस्य साम आकम् स्यात् । युष्माकम् । अस्माकम् ॥ युष्मद् और अस्मद्से परे साम ( सुट् सहित आम् ) को आकम् आदेशहो ॥ ३३॥

## आत औ णलः ॥३४॥

आतः[५], औ[१], णलः[६] । आकारान्तादङ्गात् परस्य णल औकारादेशः स्यात् । दधौ । पपौ ॥ आकारान्त अङ्गने परे णल् को औकारादेश हो ॥३४॥

## तुह्योस्तातङाशिष्यन्यतरस्याम् ॥३५॥

तुह्योः[६], तातङ्[१], आशिषि[७], अ०म् (अ) । आशिषि तुह्योस्तातङादेशो वा स्यात् । जीवितात् भवान् , जीवतु वा । जीवतात् त्वम् , जीव वा ॥ आशीर्वाद अर्थमें तु और हि को विकल्पसे तातङ् आदेश हो ॥३५॥

## विदेः शतुर्वसुः ॥३६॥

विदेः[५], शतुः[६], वसुः[१] । वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन् । विद्वान् ॥ ज्ञानार्थ विद धातुसे परे शतृ प्रत्यय को विकल्प से वसु आदेश हो ॥ ३६ ॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥३७॥

समासे[७], अ०र्वे[७], क्त्वः[६], ल्यप्[१] । अनञ्पूर्वे समासे क्त्वो ल्यबादेशः स्यात् । प्रकृत्य । प्रहृत्य । पार्श्वतः कृत्य । नानाकृत्य । द्विधाकृत्य ॥ अनञ् पूर्व समास में अङ्गसे परे क्त्वा प्रत्यय को ल्यप् आदेश हो ॥३७॥

## क्त्वापिच्छन्दसि ॥ ३८ ॥

क्त्वा[१], अपि(अ), छन्दसि[७] । छन्दसि विषये अनञ्पूर्वे समासे क्त्वा इत्येतस्य स्थाने वा क्त्वा स्यात् । यजमानं परिधापयित्वा । उद्धृत्य जुहोति ॥ छन्दो विषय में अनञ्पूर्व समास हो तो।क्त्वा के स्थान में विकल्प से क्त्वा आदेश हो ॥३८॥

## सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥३९॥

छन्दसि विषये सुपां स्थाने सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल्, इतीमे आदेशाः स्युः । सु, पन्थाः । पन्थान इति प्राप्ते । लुक् परमे व्योमन् । व्योमनि इति प्राप्ते । पूर्वसवर्ण, मती । मत्या, इति प्राप्ते । आ, उभा यन्तारौ, उभौ यन्तारौ इति प्राप्ते । आत्, न ताद् ब्राह्मणाद् । तान् ब्राह्मणान् इति प्राप्ते । शे, न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मासु, अस्मभ्यमिति प्राप्ते । या, उरुया । धृष्णुया । उरुणा । धृष्णुनेति प्राप्ते । डा, नाभा पृथिव्याम् । नाभाविति प्राप्ते । ड्या, अनुष्ठ्या च्यावयतात् । अनुष्ठानमनुष्ठेति प्राप्ते । याच्, साधुया । साध्विति सोर्लुक् प्राप्ते । आल्, वसन्ता यजेत । वसन्ते इति प्राप्ते । ( इयाडि याजीकाराणामुपसङ्ख्यानम् ) इया, उर्विया । दार्विया । उरुणा । दारुणेति प्राप्ते । डियाच्, सुक्षेत्रिया । सुगात्रिया । सुक्षेत्रिणा, सुगात्रिणेति प्राप्ते । ईकारः, दृतिं न शुष्कंसरसी शयानम् । सरसि इति प्राप्ते । ( आङ्याजयारामुपसङ्ख्यानम् ) आङ्, प्रबाहवा । प्रबाहुनेति प्राप्ते । अयाच्, स्वप्नया । स्वप्नेनेति प्राप्ते । अयार, सिन्धुमिव नावया । नावेति प्राप्ते ॥ छन्द विषय में सुपों के स्थान पर सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच् और आल् आदेश हों ॥ ३९ ॥

## अमो मश् ॥ ४० ॥

अमः[6], मश्[1] । छन्दसि विषये मिबादेशस्यामो मशादेशः स्यात् । शित्वात्सर्वादेशः। अस्तिसिच इति ईट् । वधीं वृत्रम् । अवधिषमिति प्राप्ते ॥ छन्दविषय में मिप् के स्थान में हुये अम् को मश् आदेश हो ॥४०॥

## लोपस्त आत्मनेपदेषु ॥ ४१ ॥

लोपः[1], तः[6], आ०पु[7] । छन्दसि विषये आत्मनेपदेषु यस्तकारस्तस्य लोपः स्यात्। अदुह । अदुहतेति प्राप्ते । दक्षिणतः शये । शेते इति प्राप्ते ॥ छन्दोविषय में आत्मनेपद के तकार का लोप हो ॥ ४१ ॥

## ध्वमो ध्वात् ॥ ४२ ॥

ध्वमः[6], ध्वात्[1] । छन्दसि विषये ध्वमोध्वादादेशः स्यात् । अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते ॥ छन्दोविषय में अङ्ग से परे ध्वम् को ध्वात् आदेश हो ॥

## यजध्वैनमिति च ॥ ४३ ॥

य०म्[1], इति, च(अ) । एनमित्यस्मिन् परे ध्वमोऽन्तलोपो निपात्यते । यजध्वैनम् । यजध्वमेनमिति प्राप्ते ॥ छन्दो विषय में एनम् के परे यजध्वम् के मकार का लोप करके यजध्वैनम्, निपातित किया है ॥ ४३ ॥

## तस्य[6] तात्[1] ॥४४॥

लोटः मध्यमपुरुषबहुवचनस्य स्थाने तात् आदेशः स्यात् । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते ॥ छन्दो विषय में लोट् के मध्यम पुरुष के तकार के स्थान में तात् आदेश हो ॥ ४४ ॥

## तप्तनप्तनथनाश्च ॥ ४५ ॥

त०नाः¹, च(अ) । छन्दसि विषये तस्थाने इमे स्युः । शृणोतु ग्रावाणः । शृणु इति प्राप्ते । संवरत्रा दधातन । धत्तेति प्राप्ते । जुजुष्टन । जुषध्वमिति प्राप्ते । छन्दसात्वा शत्रुः । विश्वे देवासो मरुतो यतिष्ठन ॥ छन्दो विषय में तकार के स्थान में तप्, तनप्, तन और थन आदेश हों ॥ ४५ ॥

## इदन्तो मसि ॥ ४६ ॥

इदन्तः¹, मसि¹ । छन्दसि विषये मस् शब्द इकारान्तः स्यात् । इकार उच्चारणार्थः । नमोभरन्त एमसि । त्वमस्माकं तवस्मसि । इमः इति प्राप्ते ॥ छन्दो विषय में मस् शब्द इकारान्त हो ॥ ४६ ॥

## क्त्वो यक् ॥ ४७ ॥

क्त्वः⁶, यक्¹ । छन्दसि विषये क्त्वो यक् स्यात् । दत्वाय सविता धियः । दत्वा इति प्राप्ते ॥ छन्दो विषय में क्त्वा के स्थान में यक् आगम हो ॥ ४७ ॥

## इष्ट्वीनमिति च ॥ ४८ ॥

इष्ट्वीनम्¹, इति(अ), च(अ) । छन्दसि विषये क्त्वाप्रत्ययस्य ईनम् अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । इष्ट्वा इति प्राप्ते ॥ छन्दो विषय में क्त्वाप्रत्ययान्त यज धातु के अन्त्य को ईन आदेश करके इष्ट्वीनम् निपातन किया है ॥ ४८ ॥

## स्नात्व्यादयश्च ॥ ४९ ॥

स्ना०यः¹, च(अ) । आदि शब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्नात्वी पीत्वी । स्नात्वा । पीत्वेति प्राप्ते ॥ छन्दो विषय में स्नात्वी सदृश शब्दों के आकार को ईकार निपातित किया है ॥ ४९ ॥

## आज्जसेरसुक् ॥ ५० ॥

आत्⁵, जसेः⁶, असुक्¹ । छन्दसि विषयेऽवर्णान्तादङ्गात् परस्य जसेरसुगागमः स्यात् । देवासः । ब्राह्मणासः । देवाः । ब्राह्मण इति प्राप्ते ॥ छन्द विषय में अवर्णान्त अंग से परे जस् विभक्ति को असुक् का आगम हो ॥ ५० ॥

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ।

अ०म्⁶, आ०तौ⁷, क्यचि⁷ । एषां क्यचि परे असुगागमः स्यात् । ( अश्ववृषयोर्मैथुनेच्छायाम् ) ॥ अश्वस्यति वडवा । वृषस्यति—गौः ॥ ( क्षीरलवणयोर्लालसायाम् ) क्षीरस्यति—बालकः । लवणस्यति—उष्ट्रः । ( सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ) दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति ॥ आत्म प्रीति विषय में क्यच् प्रत्यय परे होतो अश्व, क्षीर, वृष और लवण अङ्ग को असुक् का आगम हो ॥ ५१ ॥

## आमि⁷सर्वनाम्नः⁶ सुट्¹ ॥ ५२ ॥

अवर्णान्तात् सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । सर्वासाम् । विश्वासाम् । यासाम् । तासाम् ॥ अवर्णान्त सर्वनामसे विहित आम् को सुट् का आगम हो ॥ ५२ ॥

## त्रेस्त्रयः ॥ ५३ ॥

त्रेः[६], त्रय[१] । त्रिशब्दस्य त्रय आदेशः स्यादामि परे । त्रयाणाम् ॥ आम् विभक्ति परे हो तो त्रिशब्द को त्रय आदेश हो ॥ ५३ ॥

## ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्र०णः[५], नुट्[१] । ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गादुत्तरस्याऽऽमो नुडागमः स्यात् । बालानाम् । अग्नीनाम् । भानूनाम् । कर्तॄणाम् । कुमारीणाम । वधूनाम् । यशोदानाम् ॥ ह्रस्वान्त नद्यन्त और आबन्त अङ्ग से परे आम् को नुट् का आगम हो ॥ ५४ ॥

## षट्चतुर्भ्यश्च ॥ ५५ ॥

षट्[१], चतुर्भ्यः[५], च (अ) । षट् संज्ञकेभ्यश्चतुरश्चोत्तरस्यामो नुडागमः स्यात् । षण्णाम् । पञ्चानाम् । सप्तानाम् । अष्टानाम् । नवानाम् । दशानाम् । चतुर्णाम् ॥ षट् संज्ञक और चतुर् शब्द से परे आम् विभक्ति को नुट् का आगम हो ॥ ५५ ॥

## श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥

श्री०ण्योः[६], छ०सि[७] । छन्दसि विषये श्रीग्रामण्योरामो नुडागमः स्यात् । श्रीणाम् । ग्रामणीनाम ॥ छन्दो विषय में श्री और ग्रामणी की आम् विभक्ति को नुट् का आगम हो ॥ ५६ ॥

## गोः[५] पादान्ते[७] ॥ ५७ ॥

छन्दसि गोः पादान्ते वर्त्तमानादुत्तरस्यामो नुडागमः स्यात् । विद्मा हि त्वा गोपतिं शूर गोनाम् ॥ छन्दो विषय में वर्त्तमान पादान्त में गो शब्द से परे आम् को नुट् का आगम हो ॥ ५७ ॥

## इदितो नुम् धातोः ॥ ५८ ॥

इदितः[६], नुम्[१], धातोः[६] । इदितो धातोर्नुमागमः स्यात् । निन्दति । निन्दतः । निन्दन्ति ॥ इदित् धातुको नुम् का आगम हो ॥ ५८ ॥

## शे[७] मुचादीनाम्[६] ॥ ५९ ॥

शे परे मुचादीनां नुमागमः स्यात् । मुञ्चति, मुञ्चतः, मुञ्चन्ति । लुम्पति, लुम्पतः, लुम्पन्ति । लिम्पति, लिम्पतः, लिम्पन्ति ॥ श प्रत्यय परे होतो मुचादि गण पठित धातुओं को नुम् का आगम हो ॥ ५९ ॥

## मस्जिनशोर्झलि ॥ ६० ॥

म०शोः[६], झलि[७] । अनयोर्झलादौ प्रत्यये परे नुमागमः स्यात् । मङ्क्त्वा । मङ्क्तुम् । मङ्क्तव्यम् । नंष्ट्वा । नंष्टुम् । नंष्टव्यम् ॥ झलादि प्रत्यय परे होतो मस्जि और नश् अङ्ग को नुम् का आगम हो ॥ ६० ॥

## रधिजभोरचि ॥ ६१ ॥

र०भोः[६], अचि[७] । अनयोर्नुमागमः स्यादजादौ प्रत्यये परे । रन्धयति-रन्धकः । जम्भयति-जम्भकः ॥ अजादि प्रत्यय परे होतो रधि और जभि अङ्ग को नुम् का आगमहो ६१

## नेट्यलिटि रधेः ॥ ६२ ॥

न (अ), इटि[७], अ० टि[७], रधेः[६] । लिड्वर्जे इटि परे रधेर्नुमागमो न स्यात् ।

रधिता । रधितुम् । रधितव्यम् ॥ लिट् वर्जित इडादि प्रत्यय परे हो तो रध अङ्ग को नुम् का आगम न हो ॥ ६२ ॥

## रभेरशब्लिटोः ॥६३॥

रभेः[6], अ०टोः[7] । रभेर्नुमागमः स्यादचि परे नतु शब्लिटोः । आरम्भयति । आरम्भकः ॥ शप् और लिट् प्रत्यय को छोड़कर, अजादि प्रत्यय परे हो तो रभ अङ्ग को नुम् का आगम हो ॥ ६३ ॥

## लभेश्च ॥६४॥

लभेः[6], च(अ) शब्लिड्वर्जितेऽजादौ प्रत्यये परे लभेश्च नुमागमः स्यात् । लम्भयति । लम्भकः ॥ शप् तथा लिट् भिन्न अजादि प्रत्यय परे हो तो लभ अङ्ग को नुम् का आगम हो ॥ ६४ ॥

## आङो यि ॥६५॥

आङः[5], यि[7] । आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये परे । आलम्भ्यो—गौः । आलम्भ्या—वडवा ॥ यकारादि प्रत्यय परे हो तो आङ् से परे लभ अङ्ग को नुमागम हो ॥

## उपात्[5] प्रशंसायाम्[7] ॥६६॥

प्रशंसायां गम्यमानायामुपादुत्तरस्य लभेर्नुमागमः स्याद्यकारादौ, विवक्षिते । उपालम्भ्यः साधुः । उपालम्भ्या भवता विद्या । उपालम्भ्यानि धनानि ॥ प्रशंसा गम्यमान हो तो यकारादि प्रत्यय परे होने पर लभ अङ्ग को नुम् का आगम हो ॥ ६६ ॥

## उपसर्गात्[5] खल्घञोः[7] ॥६७॥

उपसर्गात् खलघञोः परयोर्नुमागमः स्यात् । ईषत् प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । घञि । प्रलम्भः । विप्रलम्भः । उपालम्भः ॥ खल् और घञ् प्रत्यय परे हों तो उपसर्ग से परे लभ अङ्ग को नुम् का आगम हो ॥ ६७ ॥

## न[अ] सुदुर्भ्यां[5] केवलाभ्याम्[5] ॥६८॥

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुमागमो न स्यात् खल्घञोः परतः । सुलभम् । दुर्लभम् । घञि । सुलाभः । दुर्लाभः ॥ खल् और घञ् प्रत्यय परे हों तो उपसर्गान्तर रहित सु तथा दुर् से परे लभ अङ्ग को नुम् का आगम हो ॥ ६८ ॥

## विभाषा[अ] चिण्णमुलोः[7] ॥६९॥

चिण्णमुलोर्लभेर्नुमागमो वा स्यात् । अलम्भि । अलाभि । लम्भं लम्भम् । लाभं लाभम् ॥ चिण् और णमुल् परे हो तो लभ अङ्ग को विकल्प से नुम् का आगम हो ॥

## [6]उगिदचां [7]सर्वनामस्थानेऽधातोः[6] ॥७०॥

उगितामङ्गानां धातुवर्जितानामञ्चतेश्च नुमागमः स्यात् सर्वनामस्थाने परे । भवतु, भवान्, भवन्तौ, भवन्तः । भवन्तम्, भवन्तौ । ईयसुन्—श्रेयान्, श्रेयांसौ, श्रेयांसः । श्रेयांसम्, श्रेयांसौ । शतृ—पठन्, पठन्तौ, पठन्तः । पठन्तम्, पठन्तौ । अञ्चतेः—प्राङ्, प्राञ्चौ, प्राञ्चः । प्राञ्चम्, प्राञ्चौ ॥ सर्वनामस्थान परे हो तो धातु वर्जित उगित तथा अञ्चति अङ्ग को नुमागम हो ॥ ७० ॥

## युजेरसमासे ॥७१॥

युजेः[६], असमासे[७] । युजेरसमासे सर्वनामस्थाने परे नुमागमः स्यात् । युङ्, ८।२।६२ युञ्जौ, युञ्जः । युञ्जम् ,युञ्जौ ॥ सर्वनामस्थान परे होतो समास वर्जित युज् अङ्ग को नुम् का आगम हो ॥ ७१ ॥

## नपुंसकस्य[६] झलचः[६] ॥७२॥

झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात् सर्वनामस्थाने परे । यशांसि । पयांसि । फलानि । त्रपूणि । वारीणि ॥ सर्वनाम स्थान परे हो तो झलन्त और अजन्त नपुंसक अङ्ग को नुम् का आगम हो ॥७२॥

## इकोऽचि विभक्तौ ॥७३॥

इकः[६], अचि, विभक्तौ[७] । इगन्तस्य क्लीबस्याऽङ्गस्य नुमागमः स्यादचिविभक्तौ परे । त्रपुणी । जतुनी । एवमजादौ सर्वत्र ॥ अजादि विभक्ति परे हो तो इगन्त नपुंसक अङ्ग को नुम् का आगम हो ॥ ७३ ॥

## [७]तृतीयादिषु [१]भाषितपुंस्कम् [अ]पुंवद्गालवस्य[६] ॥७४॥

प्रवृत्ति निमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद् वा स्याद् टादावचि परे । अनादये । अनादिने । इत्यादि । शेषं वारिवत् ॥ तृतीयादि अजादि विभक्ति परे हो तो भाषित पुंस्क नपुंसक अङ्ग को विकल्प से नुमागम हो ॥ ७४ ॥

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥७५॥

अ० म[६], अनङ्[१], उदात्तः[१] । एषामनङादेशः स्यात् टादावचि विभक्तौ, सचोदात्तः । अल्लोपो नः । अस्थ्ना । अस्थ्ने । अस्थ्नः । अस्थ्नोः २ । अस्थ्नि, अस्थनि । एवं दधि सक्थ्यक्षि ॥ तृतीयादि अजादि विभक्ति परे हो तो अस्थि,दधि,सक्थि,और अक्षि नपुंसक अङ्ग को अनङ् आदेश हो और वह उदात्त भी हो ॥ ७५ ॥

## छन्दस्यपि दृश्यते ॥७६॥

छन्दसि[७], अपि(अ), दृश्यते(क्रि०) । अस्थ्यादीनामनङ् छन्दस्यपि दृश्यते । इन्द्रो-दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः ॥ छन्दोविषय में भी अस्थि आदि शब्दों को अनङ् आदेश दीखता है ॥ ७६ ॥

## [अ]ई च् द्विवचने[७] ॥७७॥

द्विवचने परे छन्दसि विषयेऽस्थ्यादीनामीकारादेशः स्यात् । सचोदात्तः । अक्षी-भ्यान्ते ॥ छन्दोविषय में द्विवचन विभक्ति परे हो तो अस्थ्यादि अङ्गों को ईकारादेशहो॥

## नाभ्यस्ताच्छतुः ॥७८॥

न(अ), अ०त[५], शतुः[६] । अभ्यस्तादुत्तरस्य शतुर्नुम् न स्यात् । ददत्, ददतौ, ददतः । दधत् ,दधतौ, दधतः ॥ अभ्यस्तसंज्ञक से परे शतृप्रत्यय को नुमका आगम नहो॥

## [अ]वा नपुंसकस्य[६] ॥ ७९ ॥

अभ्यस्तादुत्तरोयः शता तदन्तस्य क्लीबस्य नुमागमो वा स्यात् सर्वनामस्थाने ।

ददन्ति, ददति—कुलानि। जाग्रन्ति, जाग्रति—कुलानि। अभ्यस्त संज्ञक से परे शतृ प्रत्ययान्त नपुंसक अङ्ग को विकल्प से नुम् का आगम हो॥ ८०॥

## आच्छीनद्योर्नुम्॥ ८०॥

आत्[५], शीनद्योः[७], नुम्[१]। अवर्णादुत्तरस्य शतुर्वा नुमागमः स्याच्छीनद्योः परतः। तुदन्ती, तुदती—कुले। तुदन्ती, तुदती—धीवरी॥ शी और नदी परे हो तो अवर्णान्त अङ्ग से शतृ प्रत्यय को विकल्प से नुमागम हो॥ ८०॥

## शप्श्यनोर्नित्यम्॥ ८१॥

श० नोः[६], नित्यम्[१]। शप्श्यनोरात्परस्य शतुर्नित्यं नुमागमः स्याच्छीनद्योः परतः। पचन्ती कुले। दीव्यन्ती धीवरी॥ शी तथा नदी परे हो तो शप् और श्यन् के शतृ प्रत्यय को नित्य नुम् का आगम हो॥ ८१॥

## सावनडुहः॥ ८२॥

सौ[७], अ०हः[६]। अनडुहो नुम् स्यात् सौ परे। अनड्वान्। अनड्वन्॥ सु परे हो तो अनडुह् अङ्ग को नुम् का आगम हो॥ ८२॥

## दृक्स्ववस्स्वतवसाम्[६] छन्दसि[७]॥ ८३॥

छन्दसि विषये एषां नुम् स्यात् सौ परे। ईदृङ्। स्ववान्। सुतवान्॥ छन्दोविषय में सु परे हो तो दृक्, स्ववस् तथा स्वतवस अङ्गों को नुमागम हो॥ ८३॥

## दिव औत्॥ ८४॥

दिवः[६], औत्[१]। दिविति प्रातिपदिकस्य औत् स्यात् सौ परे। द्यौः॥ सु विभक्ति परे हो तो दिव् प्रातिपदिक को औ आदेश हो॥ ८४॥

## पथिमथ्यृभुक्षामात्॥ ८५॥

प०क्षाम्[६], आत्[१]। एषामाकारान्तादेशः स्यात् सौ परे। पन्थाः। मन्थाः। ऋभुक्षाः॥ सु परे हो तो पथिन्, मथिन् और ऋभुक्षिन् अङ्गों को आकारादेश हो॥

## इतोऽत्सर्वनामस्थाने॥ ८६॥

इतः[६], अत्[१], स०ने[७]। पथ्यादेरिकारस्य स्थानेऽकारः स्यात् सर्वनामस्थाने परे। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। एवं मन्थाः, ऋभुक्षाः॥ सर्वनामस्थान परे हो तो पथिन् मथिन् यथा ऋभुक्षिन् अङ्गों के इकार को अकारादेश हो॥ ८६॥

## थो न्थः॥ ८७॥

थः[६], न्थः[१]। पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। एवम्। मन्थाः॥ सर्वनामस्थान परे हो तो पथिन् तथा मथिन् अङ्गों के थकार को न्थ आदेश हो॥ ८७॥

## भस्य टेर्लोपः॥ ८८॥

भस्य[६], टेः[६], लोपः[१]। भसञ्ज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथे। एवम् मथ्यृभुक्षोः॥ भसंज्ञक पथ्यादिकों की टि का लोप हो॥ ८८॥

## पुंसोऽसुङ् ॥ ८९ ॥

पुंसः[६], असुङ्[१] । सर्वनामस्थाने परे पुंसोऽसुङादेशः स्यात् । पुमान्, पुमांसौ, पुमांसः । पुमांसम्, पुमांसौ ॥ सर्वनाम स्थान परे होतो पुंस् शब्द को असुङ् आदेश हो ॥ ८९ ॥

## गोतोणित् ॥ ९० ॥

गोतः[५], णित्[१] । गोशब्दात् परं सर्वनामस्थानं णित्वत् स्यात् । गौः, गावौ, गावः । गावम्, गावौ ॥ गो शब्द से परे सर्वनामस्थान णित्वत् हो ॥ ९० ॥

## णलुत्तमो वा ॥ ९१ ॥

णल्[१], उ०मः[१], वा(अ) । उत्तमो णल्वा णित् स्यात् । अहं चकर-चकार वा ॥ उत्तम पुरुष का णल् विकल्प से णिद्वत् हो ॥ ९१ ॥

## सख्युरसम्बुद्धौ ॥ ९२ ॥

सख्युः[४], अ०द्धौ[७] । सख्युरङ्गात् परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात् । 'अचोऽञ्णिति' इति वृद्धिः । सखायौ, सखायः । सखायम्, सखायौ ॥ सम्बुद्धि वर्जित सर्वनामस्थान परे होतो सखि अङ्ग को णिद्वत् कार्य्य हो ॥ ९२ ॥

## अनङ् सौ[७] ॥ ९३ ॥

सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ परे । सखा ॥ सम्बुद्धि वर्जित सु परे होतो सखि अङ्ग को अनङ् आदेश हो ॥ ९३ ॥

## ऋदुशनस्पुरुदंशोनेहसां[६] च[अ] ॥ ९४ ॥

ऋदन्तानामुशनसादीनां चाऽनङादेशः स्यादसम्बुद्धौ सौ परे । कर्त्ता । हर्त्ता । माता । पिता । उशना । पुरुदंशा । अनेहा ॥ सम्बुद्धि वर्जित सु परे होतो ऋकारान्त, उशनस् पुरुदंशस् और अनेहस् अङ्ग को अनङ् आदेश हो ॥ ९४ ॥

## तृज्वत्[अ] क्रोष्टुः[६] ॥ ९५ ॥

असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दो भवतीत्यर्थः । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ ॥ सम्बुद्धि वर्जित सर्वनामस्थान परे होतो क्रोष्टु शब्द को तृजन्तवत् कार्य्य हो ॥ ९५ ॥

## [७]स्त्रियां च[अ] ॥ ९६ ॥

स्त्रियां च क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । क्रोष्ट्री, क्रोष्ट्र्यौ, क्रोष्ट्र्यः ॥ स्त्रीलिङ्ग में भी क्रोष्टु शब्दको तृजन्तवत् कार्य्य हो ॥ ९६ ॥

## विभाषा तृतीयादिष्वचि ॥ ९७ ॥

वि०षा[१], तृ०षु[७], अचि[७] । अजादिषु तृतीयादिषु विभक्तिषु परेषु, क्रोष्टुर्वा तृज्वत्कार्यं स्यात् । क्रोष्ट्रा, क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे । क्रोष्टुः, क्रोष्ट्रोः २ । क्रोष्ट्वोः । क्रोष्टरि, क्रोष्टौ ॥ अजादि तृतीयादि विभक्ति परे होतो क्रोष्टु शब्दको विकल्प से तृज्वत् कार्य्यहो ॥ ९७ ॥

## चतुरनडुहोरामुदात्तः ॥ ९८ ॥

च०ह्वोः[१], आम्[१], उदात्तः[१]। अनयोराम् स्यात् सर्वनामस्थाने परे, सचोदात्तः। चत्वारः। अनड्वान्, अनड्वाहौ, अनड्वाहः। अनड्वाहम्। अनड्वाहौ॥ सर्वनाम स्थान परे होतो चतुर् और अनडुह् अङ्ग का आम् का आगम हो॥ ९८॥

## अम्[१] सम्बुद्धौ[७] ॥ ९९॥

चतुरनडुहोरम् स्यात् सम्बुद्धौ परे। हे प्रियचत्वः। हे अनड्वन्॥ सम्बुद्धि परे होतो चतुर् और अनडुह् अङ्गको अम् का आगम हो॥ ९९॥

## ॠत इद्धातोः ॥ १००॥

ॠतः[१], इत्[१], धातोः[१]। ॠदन्तस्य धातोरङ्गस्य इकारादेशः स्यात्। किरति। गिरति। आस्तीर्णम्। हलश्चेति दीर्घः। रदाभ्यामिति निष्ठा तस्य नत्वम्। विस्तीर्णम्॥ ॠदन्त धातुके अङ्गको इकारादेश हो॥ १००॥

## उपधायाश्च ॥ १०१॥

उ०याः[१], च (अ)। धातोरुपधा भूतस्य ॠत इत् स्यात्। रपरत्वम्। (उपधायां च) इति दीर्घः। कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति॥ धातु के उपधा भूत ॠकार को भी इकारादेश हो॥ १०१॥

## उदोष्ठ्यपूर्वस्य ॥ १०२॥

उद्[१], ओ०स्य[१]॥ओष्ठ्यपूर्वो यस्माद्, ॠकाराद् असावोष्ठ्यपूर्वः तदन्तस्य धातोरङ्गस्योकारादेशः स्यात्। पिपूर्तः। (हलि चेति) दीर्घः॥ पिपुरति॥ ओष्ठ्यपूर्व है जिस वर्ण के ऐसे ॠदन्त अङ्गको उकारादेश हो॥१०२॥

## [१]बहुलं छन्दसि[७] ॥ १०३॥

छन्दसि विषये बहुलमॄकारान्तस्य धातोरङ्गस्योकारादेशः स्यात्। ततुरिः।३।२।१७१। इति कि प्रत्ययः। जगुरिः। पपुरिः। न च। पप्रितमम्॥ छन्दो विषय में ॠकारान्त अङ्ग को बाहुल्य से उकारादेश हो॥ १०३॥

इति सप्तमाध्यायस्य प्रथमः पादः॥

---

# अथ सप्तमाध्यायस्य द्वितीयः पादः।

## [७]सिचि [१]वृद्धिः परस्मैपदेषु[७] ॥ १॥

इगन्तस्याङ्गस्य वृद्धिः स्यात् परस्मैपदेषु सिचि। अचैषीत्। अलावीत्। अकार्षीत्॥ परस्मैपद में सिच् प्रत्यय परे होतो इगन्त अङ्ग को वृद्धि हो॥ १॥

## अतोल्लान्तस्य ॥ २॥

अतः[१], ल्ला०स्य[१]। ल्लान्तस्यातो वृद्धिः स्यात् परस्मैपदेषु सिचि। क्षर, अक्षारीत्। ज्वल, अज्वालात्॥ परस्मैपद में सिच् प्रत्यय परे होतो रेफ और लकार जिस के समीप हों ऐसे अकारको वृद्धि हो॥ २॥

## वदव्रजहलन्तस्याचः ॥ ३ ॥

व०स्य[६], अचः[६]। वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु। अवादीत्। अव्राजीत्। हलन्तानाम्। अभैत्सीत्। अपाक्षीत्। अच्छैत्सीत्। अरौत्सीत्॥ परस्मैपद विषय में सिच् प्रत्यय परे होतो वद, व्रज तथा हलन्त अङ्गों के अच् को वृद्धि हो॥ ३॥

## नेटि ॥ ४ ॥

न (अ), इटि[७]। इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न स्यात्। अदेवीत्। असेवीत्। अकोषीत्। अमोषीत्॥ परस्मैपद विषय में इडादि सिच् प्रत्यय परे होतो हलन्त अङ्ग को वृद्धि नहो॥ ४॥

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्[६] ॥ ५ ॥

हकारान्तानां मकारान्तानां यकारान्तानां क्षणश्वसजागृणिश्वि इत्येषामेदितां च वृद्धिर्नस्यादिडादौ सिचि परस्मैपदेषु। अग्रहीत्। अस्यमीत्। अव्ययीत्। अक्षणीत्। अश्वसीत्। अजागरीत्। ऐलयीत्। अश्वयीत्। अकटीत्॥ परस्मैपदविषय में इडादि सिच् प्रत्यय परे होतो हकारान्त, मकारान्त, यकारान्त, क्षण, श्वस, जागृ, णि, श्वि और एदित् अङ्गों को वृद्ध्यादेश न हो॥ ५॥

## ऊर्णोतेर्विभाषा ॥ ६ ॥

ऊ०तेः[६], विभाषा(अ)। ऊर्णोतेरिडादौ सिचि परस्मैपदेषु वा वृद्धिः स्यात्। और्णावीत्। और्णवीत्॥ परस्मैपद विषय में इडादि सिच् परे होतो ऊर्णुञ् धातु को विकल्प से वृद्धि हो॥ ६॥

## अतोहलादेर्लघोः ॥ ७ ॥

अतः[६], हलादेः[६], लघोः[६]। हलादेर्लघोरकारस्य इडादौ सिचि परस्मैपदेषु वृद्धिर्वा स्यात्। अखवीत्, अखावीत्। अवदीत्, अवादीत्॥ परस्मैपदविषय में इडादि सिच् परे हो तो हलादि अङ्ग के लघु अकार को विकल्प से वृद्धि हो॥ ७॥

## नेड्वशि कृति ॥ ८ ॥

न(अ), इट्[१], वशि[७], कृति[७]। वशादौ कृति प्रत्यये परे इडागमो न स्यात्। ईश्वरः॥ वशादिकृत् प्रत्यय परे होतो अङ्गको इट् का आगम न हो॥ ८॥

## तितुत्रतथसिसुसरकसेषु[७] च[अ] ॥ ९ ॥

एषां दशानां कृत्प्रत्ययानामिडागमो न स्यात्। क्तिन्क्तिचोः सामान्येन ग्रहणमिति। दीप्तिः। तन्तिः। तु। सक्तुः। त्र। पत्रम्। त। हस्तः। थ। कुष्ठम्। सि। कुक्षिः। सु। इक्षुः। सर। अक्षरम्। शल्कः। स। वत्सः॥ ति, तु, त्र, त, थ, सि, सु, सर, क और कृत् प्रत्ययान्तों को इट् का आगम न हो॥ ९॥

## एकाचउपदेशेऽनुदात्तात् ॥ १० ॥

ए०चः[५], उ० शे[७], अ०त्[५]। उपदेशे यो धातुरेकाजनुदात्तश्च तस्मादिडागमो न स्यात्। के पुनरुपदेशेऽनुदात्ता ये तथा पठ्यन्ते। त एवाऽनिट् कारिकास्वत्र विभक्ताः

प्रदर्श्यन्ते। अनिट् स्वरान्तो भवतीति दृश्यताम्, मिमांस्तु सेटः प्रवदन्ति तद्विदः। अदन्त मृदन्त मृतां च वृङ् वृञौ, श्विडी डिवर्णेष्वथ शीङ् श्रिञावपि ॥१॥ गणस्थमूदन्तमृतां च रुस्नुवौ, क्षुवन्तथोर्णोति मथो युणुक्ष्णवः। इति स्वरान्तानिपुणैः समुच्चितास्ततो हलन्तानपि सन्निबोधत ॥२॥ शकिस्तु कान्तेष्वनिडेक इष्यते, घसिश्च सान्तेषु वसिः प्रसारणी। रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥३॥ यमिर्यमन्तेष्वनिडेक इष्यते, रमिश्च यश्च श्यनि पठ्यते मनिः। नमिश्चतुर्थो हनिरेव पञ्चमो, गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥४॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः। इमेऽनिटोऽष्टौ विहमुक्त संशयाः गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥५॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्। लिशं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥६॥ रुधिः सराधिर्युधिबन्धि साधयः, क्रुधि क्षुधी शुध्यति बुध्यती व्यधिः। इमेतु धान्तादशयेऽनिटो मतास्ततः परं सिद्ध्यतिरेव नेतरे ॥ ७ ॥ शिषिं पिषिं शुष्यति पुष्यती त्विषिं, विषिं श्लिषिं तुष्यति दुष्यती द्विषिम्। इमान् दशैवोपदिशन्त्यनिड्विधौ, गणेषु षान्तान् कृषिकर्षती तथा ॥८॥ तपिं तिपिं चापि मथो वपिं स्वपिम्, लिपिं लुपिं तृप्यति दृप्यती सृपिम्। स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥ अदिंहदिं स्कन्दिभिदिच्छिदिक्षुदीन्, शदिंसदिंस्विद्यतिपद्यतीखिदिम् तुदिं नुदिं विद्यति विन्त इत्यपि, प्रतीहि दान्तान् दशपञ्चचानिटः ॥ १० ॥ पचिं वचिं विचिं रिचिं रंजिपृच्छतीन्, निजिं सिचिं मुचिभजि भञ्जि भृज्जतीन्। त्यजिं यजिं युजिं रुजिं सञ्जि मज्जतीन्। भुजिं स्वजिं सृजि मृजी विद्ध्यनिट्स्वरान् ॥ ११ ॥ उपदेश में जो एकाच् अनुदात्त धातु उससे परे प्रत्यय को इट् का आगम न हो ॥१०॥

## श्र्युकः[५] किति[७] ॥ ११ ॥

श्रिञ एकाच् उगन्ताच्च कितोनेडागमः स्यात्। श्रित्वा। श्रितः। श्रितवान्। उगन्तानाम्। युत्वा। युतः। युतवान्। लूत्वा। लूनः। लूनवान्। वृत्वा। वृतः। वृतवान् ॥ श्रिञ् और उगन्त धातुओं से परे कित् प्रत्ययको इट् का आगम न हो ॥

## सनिग्रहगुहोश्च ॥ १२ ॥

सनि[७], ग्र०होः[५],च(अ)। ग्रहेर्गुहेरुगन्ताच्च सनोनेडागमः स्यात्। जिघृक्षति। जुघुक्षति। उगन्तानाम्। रुरूषति। लुलूषति। ग्रह और गुह तथा उवर्णान्त धातुओं से परे सन् प्रत्ययको इट् का आगम न हो ॥१२॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

कृ०वः[५], लिटि[७]। एभ्यो लिटो नेडागमः स्यात्। चकृव। चकृम। ससृव। ससृम। बभृव। बभृम। ववृव। ववृम। ववृवहे। ववृमहे। तुष्टुव। तुष्टुम। दुद्रुव। दुद्रुम। सुस्रुव। सुस्रुम। शुश्रुव। शुश्रुम ॥ कृ, सृ, भृ, (वृञ् वृङ्) स्तु द्रु, स्रु और श्रु धातु से परे लिट् प्रत्यय को इट् का आगम न हो ॥१३॥

## श्वीदितो निष्ठायाम ॥ १४ ॥

श्वी० तः[५], नि०म्[७]। श्वयतेरीदितश्च निष्ठाया नेडागमः स्यात्। शूनः। शूनवान्। ईदितः। ओलजी। ओविजी। लग्नः। उद्विग्नः ॥ श्वि तथा ईदित धातुओंसे परे निष्ठा प्रत्यय को इट् का आगम न हो ॥१४॥

## यस्य[६] विभाषा[१] ॥ १५ ॥

यस्य क्वचिद् वेड् विहतस्ततो निष्ठाया नेडागमः स्यात्। विधूतः। विधूनवान् ॥ जिस धातुको कहीं विकल्प से इडागम कहा हो वह निष्ठा प्रत्यय को न हो॥ १५ ॥

## आदितश्च ॥ १६ ॥

आ०तः[४], च(अ)। आदितश्च निष्ठाया नेडागमः स्यात्। ञिमिदा—मिन्नः। मिन्नवान्। ञि क्ष्विदा। क्ष्विण्णः। क्ष्विण्णवान् ॥ आकार जिस का इत् हो ऐसे धातु से परे निष्ठा प्रत्यय को इट्का आगम न हो ॥१६॥

## विभाषा[१] भावादिकर्म्मणोः[७] ॥ १७ ॥

भावे, आदि कर्मणि च, आदितो निष्ठाया वेडागमः स्यात्। मिन्नमनेन। मेदितमनेन। प्रमिन्नः। प्रमेदितः। शक्तो घटः कर्त्तुम्, शकितो वा ॥ आदित धातुसे परे भाव तथा आदि कर्ममें विहित निष्ठाको विकल्पसे इट्का आगम हो ॥१७॥

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि[१], मन्थमनस्तमः सक्ता विस्पष्टस्वरानायासभृशेषु[७] ॥ १८ ॥

क्षुब्धादीन्यष्टावनिट्कानि मन्थादिष्वर्थेषु निपात्यन्ते ॥ मन्थ आदि अर्थों में क्षुब्ध आदि आठ शब्द अनिडात्मक निपातन किये हैं ॥१८॥

## धृषिशसी[१] वैयात्ये[७] ॥ १९ ॥

इमौ निष्ठायामविनये एवाऽनिटौ स्याताम्। धृष्टः। विशस्तः ॥ वैयात्य अर्थ में धृष और शस् धातु से परे निष्ठाको इट्का आगम न हो ॥१९॥

## दृढः[१] स्थूलबलयोः[७] ॥ २० ॥

स्थूले बलवति च दृढ इति निपात्यते। दृढोऽत्ताऽऽश्रयो भवन् ? ॥ स्थूल तथा बल अर्थमें इट्का निषेध करके दृढ यह निपातन किया है ॥२०॥

## प्रभौ[७] परिवृढः[१] ॥ २१ ॥

प्रभावर्थे परिवृढ इति निपात्यते। परिवृढे भवतो गतिरीदृशी ॥ प्रभु अर्थमें परिवृढ शब्द निपातित है ॥२१॥

## कृच्छ्रगहनयोः[७] कषः[१] ॥ २२ ॥

एतयोरर्थयोः कषेर्निष्ठाया इण् न स्यात्। कष्टो मोहः। कष्टं शास्त्रम्। दुःखगाहमित्यर्थः ॥ कृच्छ्र और गहन अर्थमें कष् धातुसे परे निष्ठा प्रत्यय को इट्का आगम न हो॥२२

## घुषिरविशब्दने ॥२३ ॥

घुषिः[१], अ०ने[७]। अविशब्दनेऽर्थे घुषेर्निष्ठाया नेडागमः स्यात्। घुष्टारज्जुः। घुष्टौपादौ ॥ घुष् धातुसे परे निष्ठा प्रत्यय को इट्का आगम न हो ॥२३॥

## अर्देः[५] सन्निविभ्यः[५] ॥ २४ ॥

एतत् पूर्वादर्देर्निष्ठायानेडागमः स्यात्। समर्णः। न्यर्णः। व्यर्णः ॥ सम्, नि, और विपूर्वक अर्द धातुसे परे निष्ठा प्रत्यय को इडागम न हो ॥२४॥

## अभेश्चाविदूर्ये ॥ २५ ॥

अभेः[५], च(अ), आ०र्ये[७]। आविदूर्येऽर्थेऽभिशब्दात्परस्यार्देर्निष्ठाया नेडागमः स्यात्। अभ्यर्णम्—नातिदूरम्। आसन्नं वा॥ आविदूर्य अर्थ में अभि पूर्वक अर्द् धातु से परे निष्ठा प्रत्यय को इडागम न हो ॥२५॥

## णेरध्ययने वृत्तम् ॥ २६॥

णेः[५], अ०ने[७], वृत्तम्[१]। णयन्ताद् वृत्तेः क्तस्येडभावो णिलुक् च अधीयानेऽर्थे निपात्यते। वृत्तं छन्दश्शास्त्रेण–सम्पादितम्। अधीतमिति यावत्॥ अध्ययन अर्थ में णयन्त वृत् धातु से परे निष्ठा प्रत्यय को इट् का अभाव और णि का लुक् करके वृत्तम् यह शब्द निपातित किया है ॥२६॥

## वा[४] दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः[१] ॥२७॥

सप्तैते णिचि निष्ठान्ता वा निपात्यन्ते। दान्तः। दमितः। शान्तः। शमितः। पूर्णः। पूरितः। दस्तः। दासितः। स्पष्टः। स्पाशितः। छन्नः। छादितः। ज्ञप्तः॥ ज्ञपितः॥ दम्, शम्, पूरी, दस्, स्पश्, छद् और ज्ञप् णयन्त धातुओं से परे निष्ठा प्रत्यय को विकल्प से इट् का अभाव करके दान्तादि शब्द निपातित किये हैं ॥२७॥

## रुष्यमत्वरसंघुषास्वनाम्[६] ॥ २८ ॥

एभ्यो निष्ठाया इड् वा स्यात्। रुष्टः। रुषितः। आन्तः। अमितः। तूर्णः। त्वरितः। संघुष्टः। संघुषितः। आस्वान्तः। आस्वनितः॥ रुषि, अम, त्वर, संघुष और आस्वन अङ्ग से परे निष्ठा प्रत्यय को विकल्प से इट् का आगम हो ॥२८॥

## हृषेर्लोमसु ॥ २९ ॥

हृषेः[५], लोमसु[७]। लोमसु विषये हृषेर्निष्ठाया वेडागमः स्यात्। हृष्टानि। हृषितानि लोमानि। (विस्मित प्रतिघातयोश्च) हृष्टो हृषितो मैत्रः। विस्मितः प्रतिहतो वेत्यर्थः॥ लोम विषय में वर्त्तमान हृष धातु से परे निष्ठा प्रत्यय को विकल्प से इडागम हो २९

## अपचितश्च ॥ ३० ॥

अ०तः[१], च(अ)। चायतेर्निपातोऽयं वा। अपचितः। अपचायितः॥ अप पूर्वक चायृ धातु से निष्ठा प्रत्यय में चि भाव और इट् का विकल्प से निषेध करके अपचित शब्द निपातन किया है ॥३०॥

## हु ह्वरेश्छन्दसि ॥ ३१ ॥

हु[१], ह्वरेः[६], छन्दसि[७]। छन्दसि विषये ह्वरेर्निष्ठायां हु आदेशः स्यात्। अहुतमसि हविर्धानम्॥ छन्दो विषयमें निष्ठा प्रत्यय परे होतो ह्वृ (कौटिल्ये) धातुको हु आदेशहो॥

## अपरिह्वृताश्च ॥ ३२ ॥

अ०ताः[१], च(अ)। छन्दसि विषये अपरिह्वृता इति निपात्यते। अपरिह्वृताः सनुयाम वाजम्॥ छन्दो विषय में अपरिह्वृताः शब्द निपातन किया है ॥३२॥

## सोमे[७] ह्वरितः[१] ॥ ३३ ॥

छन्दसि सोमे ह्वरित इति निपात्यते। मानः सोमो ह्वरितः॥ छन्दो विषय में सोम

गम्यमान हो तो हृ धातु से परे निष्ठा प्रत्यय को इडागम तथा गुण करके ह्वरित शब्द निपातित किया है ॥३३॥

## प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥

अ०ति[1], इति(अ), च(अ)। इमान्यष्टादश निपात्यन्ते। प्रसितम्। प्रस्तम् भाषायाम्। विष्कभिते, विष्कब्धे इति भा०। येनस्वस्तभितम्, स्तब्धमिति भा०। सत्येनोत्तभिता भूमिः, उत्तब्धेति भा०। चत्तावर्षेण विद्युत्, चतितेति भा०। उत्तानाया हृदयं यद्विकस्तम्, विकसितमिति भा०। एकस्त्वष्टुरश्वस्याविशस्ता, विशसितेति भा०। उत शंस्ता, शंसितेति भा०। प्रशस्ता, प्रशासितेति भा०। तरुतारं रथानाम्, तरूतारम्। तरितारम्, तरीतारमिति भा०। वरुतारम्। वरूतारम्। वरितारम्। वरीतारमिति भा० वरूत्रीभिः। अग्निरुज्ज्वलिति, उज्ज्वलतीति भा०। स्तोकं क्षरिति, क्षरतीति भा०। स्तोमं क्षमिति, क्षमतीति भा०। यः सोमं वमिति, वमतीति भा०। अभ्यमिति, अभ्यमतीति भा०॥ छन्दो विषय में प्रसित, स्कभित, स्तभित, उत्तभित, चत्त, विकस्ताः, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरूतृ, वरूत्री, उज्ज्वलिति, क्षरिति, क्षमिति, वमिति और अमिति निपातन किये हैं ॥ ३४ ॥

## आर्द्धधातुकस्येड्वलादेः ॥ ३५ ॥

आ० स्य[6], इट्[1], वलादेः[6]। वलादेरार्द्धधातुकस्येडागमः स्यात्। पविता। पवितुम्। पवितव्यम्॥ वलादि आर्धधातु को इट् का आगम हो ॥ ३५ ॥

## स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥

स्नु० मोः[6], आ० त्ते[7]। अनात्मने पदनिमित्तेऽनयोर्वलादेरार्द्धधातुकस्येडागमः स्यात्। प्रस्नविता। प्रस्नवितुम्। प्रस्नवितव्यम्। प्रक्रमिता। प्रक्रमितुम्। प्रक्रमितव्यम्॥ आत्मनेपद निमित्त प्रत्यय न परे होतो स्नु और क्रम अङ्ग से परे वलादि आर्ध धातु को इडागम हो ॥ ३६ ॥

## ग्रहोऽलिटि दीर्घः ॥ ३७ ॥

ग्रहः[5], अ०टि[7], दीर्घः[1]। ग्रहः परस्येटो दीर्घः स्यान्नतु लिटि। ग्रहीतुम्। ग्रहीता। ग्रहीतव्यम्॥ लिट् वर्जित प्रत्यय परे होतो ग्रह धातु से परे इट् प्रत्यय को दीर्घादेश हो

## वृतो वा ॥ ३८ ॥

वॄतः[5], वा(अ)। वृङ् वृञ्भ्यामॄदन्तेभ्यश्चेटो वा दीर्घः स्यान्नतुलिटि। वरीता, वरिता। प्रावरीता, प्रावरिता। ॠकारान्तेभ्यः। तरीता। तरिता। आस्तरीता। आस्तरिता॥ लिट् वर्जित प्रत्यय परे होतो वृङ् और वृञ् तथा ॠदन्त धातुओं से परे इट् प्रत्यय को विकल्प से दीर्घ हो ॥ ३८ ॥

## न[अ] लिङि[7] ॥ ३९ ॥

वॄतः परस्येटो लिङि दीर्घो न स्यात्। वरिषीष्ट। प्रावरिषीष्ट। आतरिषीष्ट। विस्तरिषीष्ट॥ लिङ् परे होतो पूर्वोक्त धातुओं से परे इट् को दीर्घ न हो ॥ ३९ ॥

## [7]सिचि च[अ] परस्मैपदेषु[7] ॥ ४० ॥

अत्र वृतः परस्येटो दीर्घो न स्यात्। प्रावारिष्टाम्, प्रावारिषुः। अनारिष्टाम्, अतारिषुः ॥ परस्मैपद विषय में सिच् प्रत्यय परे हो तो वृङादि अङ्गों से परे इट् को दीर्घादेश न हो ॥ ४० ॥

## इट्[१] सनि[७] वा[अ] ॥ ४१ ॥

वृङ् वृञ्भ्यामृदन्तेभ्यश्च सनो वेडागमः स्यात्। वुवूर्षते, विवरिषते, विवरीषते। प्राबुवूषति, प्राविवरिषति, प्राविवरीषति। ऋदन्तेभ्यः। तितीर्षति, तितरिषति, तितरीषति। तिस्तीर्षति, तिस्तरिषति, तिस्तरीषति ॥ वृङादि धातुओं से परे सन् प्रत्यय को विकल्प से इडागम हो ॥ ४१ ॥

## लिङ् सिचोरात्मनेपदेषु ॥ ४२ ॥

लि०चोः[६], आ०षु[७]। वृङ् वृञ्भ्यामृदन्तेभ्यश्च परयोर्लिङ्सिचोर्वेडागमःस्यात्तङि। वृषीष्ट, वरिषीष्ट। प्रावृषीष्ट, प्रावृरिषीष्ट। आस्तीर्षीष्ट, आस्तरिषीष्ट। सिचि। अवृत, अवरिष्ट, अवरीष्ट। प्रावृत्त, प्रावरिष्ट, प्रावरीष्ट। आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट ॥ आत्मनेपद विषय में वृङादि धातुओं से परे लिङ् और सिच् प्रत्यय को विकल्प से इडागम हो ॥ ४२ ॥

## ऋतश्च संयोगादेः ॥ ४३ ॥

ऋतः[५], च (अ), सं०देः[५]। ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोर्वेडागमः स्यात्तङि। स्तृषीष्ट, स्तरिषीष्ट। अस्तृत, अस्तरिष्ट ॥ आत्मनेपद विषय में संयोगादि ऋदन्त धातुओं से परे लिङ् और सिच् को विकल्प से इडागम हो ॥ ४३ ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥

स्व०तः[५], वा(अ)। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्य वेडागमः स्यात्। स्वर। स्वर्ता, स्वरिता। सूति। प्रसोता, प्रसविता। सूयति। सोता, सविता। धूञ्। धोता, धविता। ऊदिद्भ्यः। गाहू। विगाढा, विगाहिता। गुपू। गोप्ता, गोपिता ॥ स्वरति, सूति, सूयति, धूञ् और ऊदित धातुओं से परे वलादि आर्ध धातु को विकल्प से इडागम हो ॥ ४४ ॥

## रधादिभ्यश्च ॥ ४५ ॥

र०भ्यः[५], च(अ)। रध, नश, तृप, दृप, द्रुह, मुह, ष्णुह, ष्णिह, एभ्यो वलादेरार्द्धधातुकस्य वेडागमः स्यात्। रद्धा, रधिता। नंष्ठा, नशिता। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता। स्नोग्धा, स्नोढा, स्नोहिता। स्नेग्धा, स्नेढा, स्नेहिता ॥ रधादि आठ धातुओं से परे वलादि आर्धधातुको विकल्पसे इडागम हो ॥ ४५ ॥

## निरः[५] कुषः[५] ॥ ४६ ॥

निरः परात् कुषो वलादेरार्धधातुकस्य वेडागमः स्यात्। निष्कोष्टा, निष्कोषिता। निष्कोष्टुम्, निष्कोषितुम्। निष्कोष्टव्यम्, निष्कोषितव्यम् ॥ निर् उपसर्ग पूर्वक कुष धातु से परे वलादि आर्धधातु को विकल्प से इडागम हो ॥ ४६ ॥

## इण्निष्ठायाम्[७] ॥ ४७ ॥

निरःकुषो निष्ठाया इडागमः स्यात् । निष्कुषितः । निष्कुषितवान् ॥ निर् उपसर्ग पूर्वक कुष धातु से परे निष्ठा प्रत्यय को इडागम हो ॥ ४७ ॥

## तीषसहलुभरुषरिषः ॥ ४८ ॥

ति[७], इ०षः[५] । इषादेः परस्य तादेरार्धधातुकस्य वेडागमः स्यात् । एष्टा, एषिता । सोढा, सहिता । लोब्धा, लोभिता । रोष्टा, रोषिता । रेष्टा, रेषिता ॥ इषु, सह, लुभ, रुष और रिष् अङ्ग से परे तकारादि आर्ध धातु को विकल्प से इडागम हो ॥ ४८ ॥

## सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसानाम् ॥४९॥

सनि[७], इ०म्[६] । इवन्तेभ्यः ऋधादिभ्यश्च सनो वेडागमः स्यात् । ईडभावे ( हलन्ताच्च ) इति कित्वम् । छ्वोरिति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति । दिदेविषति । सुस्यूषति । सिसेविषति । ऋध् । अर्दिधिषति । ईर्त्सति । भ्रस्ज । बिभ्रज्जिषति । बिभर्क्षति । दम्भु । दिदम्भिषति । धिप्सति । धीप्सति । श्रि । उच्छिश्रयिषति । उच्छिश्रीषति । स्वृ । सिस्वरिषति । सुस्वूर्षति । यु । यियविषति । युयूषति । ऊर्णु । प्रोर्णुनविषति । प्रोर्णुनुविषति । प्रोर्णुनूषति । भर । भृञ्भ्वा, बिभरिषति । बुभूर्षति । ज्ञपि । जिज्ञपयिषति । ज्ञीप्सति । सन् । सिसनिषति । सिषासति ॥ इवन्त, ऋधु, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर ज्ञपि और सन् धातु से परे सन् प्रत्यय को विकल्प से इडागम हो॥

## क्लिशः[५] क्त्वानिष्ठयोः[६] ॥ ५० ॥

वेडागमः स्यात् । ( क्लिश, उपतापे )—नित्यम्प्राप्ते ( क्लिशू, विबाधने )—अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पोऽयम् । क्लिशित्वा, क्लिष्ट्वा । क्लिशितः, क्लिशितवान् । क्लिष्टः, क्लिष्टवान् ॥ क्लिश् धातु से परे क्त्वा तथा निष्ठा प्रत्यय को विकल्प से इडागम हो ॥ ५० ॥

## पूङश्च ॥ ५१ ॥

पूङः[५], च(अ)। पूङश्च क्त्वानिष्ठयोर्वेडागमः स्यात् । पवित्वा । पूत्वा । पवितः । पूतः । पूतवान् । पवितवान् ॥ पूङ् धातु से परे क्त्वा और निष्ठाप्रत्यय को विकल्प से इडागम हो

## वसतिक्षुधोरिट् ॥ ५२ ॥

व० धोः[६], इट्[१] । आभ्यां क्त्वानिष्ठयोर्नित्यमिडागमः स्यात् । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् ॥ वस और क्षुध धातु से परे क्त्वा और निष्ठा प्रत्यय को नित्य इडागम हो ॥ ५२ ॥

## [५]अञ्चेः पूजायाम्[७] ॥ ५३ ॥

पूजार्थादञ्चेः क्त्वानिष्ठयोरिडागमः स्यात् । अञ्चित्वा जानुजुहोति । अञ्चिता गुरवः॥ पूजार्थक अञ्चु धातु से परे, क्त्वा और निष्ठा प्रत्यय को इडागम हो ॥५३॥

## लुभोऽविमोहने ॥ ५४ ॥

लुभः[५], वि०ने[७] । लुभः क्त्वा निष्ठयोरिडागमः स्यान्नतु गार्ध्ये । लुभित्वा, लोभित्वा, लुभितः । गार्ध्ये—लुब्धः ॥ अविमोहन ( आकुलीकरण ) अर्थ में वर्तमान लुभ धातु से परे क्त्वा तथा निष्ठा प्रत्यय को इडागम हो ॥ ५४ ॥

## जॄव्रश्च्योः[6] क्त्वि[7] ॥ ५५ ॥

आभ्यां परस्य क्त्व इडागमः स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा ॥ जॄ और व्रश्चि धातु परे क्त्वा प्रत्यय को इडागम हो ॥ ५५ ॥

## उदितो वा ॥ ५६ ॥

उ० तः[5] । वा(अ) । उदितः परस्य क्त्वां वेडागमः स्यात् । शमित्वा । अनुनासिकस्य क्वीति दीर्घः—शान्त्वा । देवित्वा । द्यूत्वा । तमित्वा । तान्त्वा । दमित्वा । दान्त्वा ॥ उदित धातु से परे क्त्वा प्रत्यय को विकल्प से इडागम हो ॥ ५६ ॥

## सेऽसिचि कृतचृतच्छृदतृदनृतः ॥५७॥

से[7], अ० चि[7], कृ०तः[5] । एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्य वेडागमः स्यात् । कर्त्तिष्यति । कर्त्स्यति । चर्त्तिष्यति । चर्त्स्यति । छर्दिष्यति । छर्त्स्यति । तर्दिष्यति । तर्त्स्यति । नर्त्तिष्यति । नर्त्स्यति ॥ कृत, चृत, छृद, तृद और नृत, धातु से परे सिच् वर्जित सकारादि आर्द्ध धातु के प्रत्यय को विकल्प से इडागम हो ॥ ५७ ॥

## गमेरिट् परस्मैपदेषु ॥ ५८ ॥

गमेः[5], इट्[1], प० षु[7] । गमेरुत्तरस्य सकारादेरार्द्धधातुकस्येडागमः स्यात् परस्मैपदेषु । गमिष्यति । जिगमिषामि । अगमिष्यः ॥ परस्मैपद विषय में सकारादि आर्ध धातु को इडागम हो ॥ ५८ ॥

## न वृद्भ्यश्चतुर्भ्यः ॥५९॥

न अ), वृद्भ्यः[5], च० भ्यः[5] । एभ्यः परस्य सकारादेरार्द्धधातुकस्य परस्मैपदेषु नेडागमः स्यात् । वृत्—विवृत्सति । वृध्—विवृत्सति । शृधु—शिशृत्सति । स्यन्दू—स्यन्त्सति ॥ परस्मैपद विषयमें वृतु ( वर्त्तने ) वृधु ( वृद्धौ ) शृधु ( शब्दकुत्सायाम् ) और स्यन्दू ( प्रस्रवणे ) धातु से परे सकारादि आर्ध धातु को इडागम न हो ॥ ५९ ॥

## तासि[7] च[अ] क्लृपः[5] ॥ ६० ॥

क्लृपेरुत्तरस्य तासेः सकारादेरार्द्धधातुकस्य च परस्मैपदेषु नेडागमः स्यात् । कल्प्ता । कल्प्स्यति । चिक्लृप्सति॥ परस्मैपद विषय में क्लृप् धातु से परे तासि तथा सकारादि आर्धधातुक प्रत्यय को इडागम न हो ॥६०॥

## अचस्तास्वत्थल्यनिटो नित्यम् ॥६१ ॥

अचः[5], ता० त्[7], थलि[7], अ०टः[5], नित्यम्[2] । उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् तस्मात् परस्य थलोनेडागमः स्यात् । याता । ययाथ । चेता । चिचेथ । नेता । निनेथ ॥ उपदेश में जो अजन्तधातु तासि में नित्य अनिट् उससे परे थल को इडागम न हो ॥ ६१ ॥

## [7]उपदेशेऽत्वतः[5] ॥ ६२ ॥

उपदेशे योऽकारवांस्तासौ नित्यानिट् तस्मात् परस्य थलो नेडागमः स्यात् । पक्ता । पपक्थ । यष्टा । इयष्ठ । शक्ता । शशक्थ ॥ उपदेश में जो अकारवान् धातु तासि में नित्य अनिट् उससे थल् परे को इडागम नहो ॥ ६२ ॥

## ऋतो भारद्वाजस्य ॥ ६३ ॥

ऋतः[१], भा०स्य[१] । तासौ नित्यानिटः ऋदन्तादेव थलोनेडागमो भारद्वाजस्य मतेन स्मर्त्ता । सस्मर्थ । ध्वर्त्ता । दध्वर्थ ॥ तासिमें नित्य अनिट् ऋदन्त धातु से हो परे थल् को भरद्वाज के मत में इडागम न हो ॥६३॥

## बभूथाततन्थजगृम्भववर्थेतिनिगमे ॥६४॥

व०र्थ[१], इति(अ) निगमे[७]। एषां वेदे इडभावो निपात्यते । तेन लोके, थलीट् । त्वंहि होता प्रथमो बभूथ । बभूविथेति लोके येनान्तरिक्षमुर्वा ततन्थ । आतेनिथेति लोके । जगृम्भाते दक्षिणमिन्द्र हस्तम् । जगृहिमेति लोके । ववर्थ त्वंहि ज्योतिषा । ववरिथेति लोके ॥ वेद विषयमें बभूथ, आततन्थ, जगृम्भ और ववर्थ निपातित हैं ॥ ६४॥

## विभाषा[१] सृजिदृशोः[६] ॥ ६५ ॥

आभ्यां थलो वेडागमः स्यात् । संस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ ॥ सृज् और दृश् धातुसे परे थल् प्रत्ययको विकल्पसे इडागम हो ॥६५॥

## इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥

इट्[१], अ० नाम्[६] । अद्, ऋ, व्येञ्, एभ्यस्थलो नित्यमिडागमः स्यात् । आदिथ । आरिथ । विव्ययिथ ॥ अद्, ऋ और व्येञ् धातुसे परे थल्को नित्य इडागम हो ॥६६॥

## वस्वेकाजाद्घसाम् ॥ ६७ ॥

वसु(लु०)[६], ए०म्[६]। कृतद्वित्वानामेकाचाम् आदन्तानाम् घसेश्च वसोरिडागमः नेतरेषाम् । एकाच् आदिवान् । आरिवान् । आत्-ददिवान् । तस्थिवान् । घस्-जक्षिवान् ॥ कृतद्विर्वचन एकाच् आकारान्त और घस् धातुसे परे वसु प्रत्यय को इडागम हो॥६७॥

## विभाषा[१] गमहनविदविशाम्[६] ॥ ६८ ॥

एभ्यो वसोर्वेडागमः स्यात् । जग्मिवान् । जगन्वान् । मोनोधातोरिति नकारः । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् विविश्वान् ॥ गम हन् विद् और विश् धातु से परे वसु प्रत्यय को विकल्प से इडागम हो ॥६८॥॥

## सनिंससनिवांसम्[१] ॥ ६९ ॥

सनिमित्येतत् पूर्वात् सनतेः सनोतेर्वा क्वसोरिडगमः, एत्वाभ्यासलोपाभावश्च निपात्यन्ते ॥ सनिं ससनिवांसम् यह शब्द छन्दो विषयमें निपातित है ॥ ६९ ॥

## ऋद्धनोः[६] स्ये[७] ॥ ७० ॥

ऋतो हन्तेश्च स्यस्येडागमः स्यात् । करिष्यति । भरिष्यति । हनिष्यति ॥ ऋदन्त और हन् धातु से परे स्य प्रत्ययको इडागम हो ॥७०॥

## अञ्जेः[५] सिचि[७] ॥ ७१ ॥

अञ्जेः सिचो नित्यमिडागमः स्यात् । आञ्जीत् । आञ्जिष्टाम् । आञ्जिषुः ॥ अञ्ज् धातुसे परे सिच् प्रत्ययको नित्य इडागम हो ॥७१॥

## स्तुसुधूञ्भ्यः[५] परस्मैपदेषु[७] ॥७२॥

एभ्यः सिच इडागमः स्यात् परस्मैपदेषु । अस्तावीत् । असावीत् । अधावीत् ॥ परस्मैपद विषयमें स्तु, सु, और धूञ् धातुसे परे सिच् प्रत्ययको इडागम हो ॥ ७२॥

## यमरमनमाताम्[६] सक्[१] च[अ] ॥७३॥

एषां सगागमः स्यात् सिच इडागमश्च परस्मैपदेषु । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । अनंसीत् । अनंसिष्टाम् । अनंसिषुः । आकारान्तस्य । अयासीत् । अयासिष्टाम् अयासिषुः ॥ परस्मैपद विषय में यम, रम, नम और आकारान्त धातुको सक् का आगम हो और उक्त धातुओंसे परे सिच् प्रत्यय को इडागम हो ॥७३॥

## स्मिपूङ्रञ्ज्वशाम्[६] सनि[७] ॥७४॥

स्मि, पूङ्, ऋ, अञ्जू, अशू, एभ्यः सन इडागमः स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते ॥ स्मिङ्, पूङ्, ऋ, अञ्जू और अशू धातु से परे सन् प्रत्ययको इडागम हो ॥७४॥

## किरश्च पञ्चभ्यः ॥७५॥

किरः[५], च(अ) पञ्चभ्यः[५] । कॄ, गॄ, दृङ्, धृङ्, प्रच्छ, एभ्यस्सन इडागमः स्यात् । चिकरिषति । जिगरिषति । दिदरिषते । दिधरिषते । पिप्रच्छिषति ॥ किरादि (कॄ-विक्षेपे । गॄ-निगरणे । दृङ्-अनादरे । धृङ्-अवस्थाने । प्रच्छ-ज्ञीप्सायाम् । ) पांच धातुओंसे परे सन् प्रत्यय को इडागम हो ॥७५॥

## रुदादिभ्यः[५] सार्वधातुके[७] ॥७६॥

रुद्, स्वप्, श्वस्, अन्, जक्ष्, एभ्यो वलादेः सार्वधातुकस्येडागमः स्यात् । रोदिति । स्वपिति । श्वसिति । प्राणिति । जक्षिति ॥ रुदादि ( रुदिर्-अश्रु विमोचने । ञिष्वप्-शये । श्वस-प्राणने । अन च । जक्ष-भक्ष हसनयोः) पांच धातुओंसे परे वलादि आर्द्ध धातुको इडागम हो ॥७६॥

## ईशः[५] से[७] ॥७७॥

ईशः परस्य सस्य सार्वधातुकस्येडागमः स्यात् । ईशिषे । ईशिष्व ॥ ईश् धातुसे परे सार्वधातुक सकारको इडागम हो ॥७७॥

## ईडजनोर्ध्वे[७] च[अ] ॥७८॥

ईड, जन, आभ्यामुत्तरस्य सेध्वेशब्दयोः सार्वधातुकयोरिडागमः स्यात् । ईडिषे । ईडिष्व । ईडिध्वे । ईडिध्वम् । जनिषे । जनिष्व । जनिध्वे । जनिध्वम् ॥ ईड और जन् धातुसे परे से ध्वे शब्दों को इडागम हो ॥७८॥

## लिङः सलोपोऽनन्त्यस्य ॥७९॥

लिङः[६], स०पः[१], अ०स्य[६] । सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । कुर्यात् । कुर्याताम् । कुर्युः । कुर्वीत । कुर्वीयाताम् । कुर्वीरन् ॥ सार्वधातुक सम्बन्धी लिङ् लकार के अनन्त्य (अन्तिसकार वर्जित) सकारका लोपहो ॥७९॥

## अतो येयः ॥८०॥

अतः[5], या(लु०)[6], इयः[1] । अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इयादेशः स्यात् । भवेत् । भवेताम् । भवेयुः ॥ अदन्त अङ्ग से परे सार्वधातुक के या को इय् आदेश हो ॥ ८० ॥

## आतो ङितः ॥८१॥

आतः[6], ङितः[6] । आतः परस्य सार्वधातुकङितामाकारस्य इयादेशः स्यात् । यजेते । यजेथे । यजेथाम् ॥ आकारान्त अङ्ग से परे सार्वधातुक सम्बन्धी ङित् आकार को इय् आदेश हो ॥ ८१ ॥

## आने[7] मुक्[1] ॥८२॥

अङ्गस्यातो मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य ॥ आनपरे होतो अङ्ग के अकार को मुक् का आगम हो ॥८२॥

## ईदासः ॥८३॥

ईत्[1], आसः[5] । आसः परस्य आनस्य ईत् स्यात् । आदेः परस्य । आसीनो यजते ॥ आस धातु से परे आन को ईकारादेश हो ॥ ८३ ॥

## अष्टन आ विभक्तौ ॥८४॥

अष्टनः[6], आ[1], विभक्तौ[7] । हलादौ विभक्तौ अष्टन आत्वं स्यात् । अष्टाभिः अष्टाभ्यः २ । अष्टानाम् । अष्टासु ॥ हलादि विभक्ति परे होतो अष्टन् शब्द को आकारादेश हो ॥८४॥

## रायो हलि ॥८५॥

रायः[6], हलि[7] । रैशब्दस्याऽऽकारोऽन्तादेशस्स्याद्धलादौ विभक्तौ । राः । राभ्यः ३ । राभिः । राभ्यः २ ॥ हलादि विभक्ति परे होतो रै शब्द को आकारादेश हो ॥ ८५॥

## युष्मदस्मदोरनादेशे ॥८६॥

यु० दोः[6], अ०शे[7] । युष्मदस्मदोराकारादेशः स्यादनादेशे हलादौ विभक्तौ । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ॥ अनादेश ( आदेशरहित ) विभक्ति परे होतो युष्मद् और अस्मद् शब्द को आकारादेश हो ॥ ८६ ॥

## द्वितीयायाम्[7] च[अ] ॥८७॥

युष्मदस्मदोर्द्वितीयायां चाऽऽकारोऽन्तादेशः स्यात् । त्वाम् । युवाम् । युष्मान् । माम् । आवाम् । अस्मान् । आदेशार्थं वचनम् ॥ द्वितीया विभक्ति परे होतो युष्मद् और अस्मद् शब्द को आकारान्तादेश हो ॥ ८७ ॥

## प्रथमायाश्च द्विवचने भाषायाम् ॥८८॥

प्र० याः[6], च(अ), द्वि० ने[7], भा०म्[7] । अत्र युष्मदस्मदोराकारोऽन्तादेशः स्यात् । युवाम् । आवाम् ॥ लोक में प्रथमा द्विवचन विभक्ति परे होतो युष्मद् और अस्मद् शब्द को आकारादेश हो ॥ ८८ ॥

## योऽचि ॥८९॥

यः[1], अचि[7] । अनादेशेऽजादौ विभक्तौ युष्मदस्मदोर्यकारादेशः स्यात् । त्वया ।

मया । युवयोः । आवयोः । त्वयि । मयि ॥ अनादेश अजादि विभक्ति परे हो तो युष्मद् और अस्मद् शब्द को यकारादेश हो ॥ ८९ ॥

## शेषे[7] लोपः[1] ॥९०॥

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । त्वम् । अमि पूर्वः । अहम् । यूयम् । वयम् । तुभ्यम् । मह्यम् । युष्मभ्यम् । अस्मभ्यम् । त्वत् । मत् । युष्मत् । अस्मत् । तव । मम । युष्माकम् । अस्माकम् ॥ आत्व यत्व वर्जित शेष विभक्ति परे हो युष्मद् और अस्मद् शब्द के अन्त्य का लोप हो ॥ ९० ॥

## मपर्यन्तस्य[6] ॥ ९१ ॥

अधिकारोऽयम् ॥ यहां से (७।२।९८) तक मपर्यन्त का अधिकार है, अर्थात मपर्यन्त को कार्य हो ॥ ९१ ॥

## युवावौ[1] द्विवचने[7] ॥ ९२ ॥

द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवाऽऽवौ स्याताम् विभक्तौ परतः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः ॥ द्विवचन विभक्ति परे हो तो युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को युव् तथा आव् आदेश हो ॥ ९२ ॥

## यूयवयौ[1] जसि[7] ॥ ९३ ॥

मपर्यन्तस्य युष्मदस्मदोर्जसि यूयवयौ स्याताम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम ॥ जस् विभक्ति परे हो तो युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को यूय और वय् आदेश हो ॥९३ ॥

## त्वाहौ[1] सौ[7] ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तस्य त्व अह इतीमावादेशौ स्यातां सौ परे । त्वम् । अहम् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ॥ सु विभक्ति परे हो तो युष्मद् अस्मद् शब्द के मपर्यन्त भाग को त्व और अह आदेश हो ॥९४॥

## तुभ्यमह्यौ[1] ङयि[7] ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्यमह्यौ स्याताम् ङयि । तुभ्यम् । मह्यम ॥ ङे विभक्ति परे हो तो युष्मद् और अस्मद् के मपर्यन्त भाग को तुभ्य और मह्य आदेश हो ॥९५॥

## तवममौ[1] ङसि[7] ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तवममावादेशौ स्यातां ङसि । तव । मम । परमतव । परमम । अतितव । अतिमम ॥ ङस् विभक्ति परे हो तो युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को तव और मम आदेश हो ॥ ९६ ॥

## त्वमावेकवचने ॥ ९७ ॥

त्वमौ[1], ए० ने[7] । एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्यातां विभक्तौ । त्वाम् । माम् । त्वया । मया । त्वत् । मत् । त्वयि । मयि ॥ एकवचन विभक्ति परे हो तो युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को त्व और म आदेश हो ॥९७॥

## प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

प्र० योः॰, च(अ) । मपर्यन्तयोरेकार्थयोस्त्वमावादेशौ स्यातां प्रत्यये उत्तरपदे च । तवेदम् । त्वदीयम् । मदीयम् । उत्तरपदे । तव पुत्रः—त्वत् पुत्रः । मत् पुत्रः । त्वं नाथोऽस्य—त्वन्नाथः । मन्नाथः ॥ प्रत्यय और उत्तरपद परे हो तो एकवचन में वर्त्तमान युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को त्व और म आदेश हो ॥ ९८ ॥

## त्रिचतुरोः[६] स्त्रियाम्[७] तिसृचतसृ[१] ॥ ९९ ॥

स्त्रीलिङ्गयोस्त्रिचतुरोस्तिसृचतसृ इत्येतावादेशौ स्यातां विभक्तौ । तिस्रः । चतस्रः । तिसृभिः । चतसृभिः ॥ विभक्ति परे हो तो स्त्रीलिङ्ग में वर्तमान त्रि और चतुर् शब्द को तिसृ और चतसृ आदेश हो ॥ ९९ ॥

## अचि र ऋतः ॥ १०० ॥

अचि॰, रः[१], ऋतः[६] । तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादजादौ विभक्तौ । तिस्रस्तिष्ठन्ति । तिस्रः पश्य । चतस्रः पठन्ति । चतस्रः पाठय ॥ अजादि विभक्ति परे हो तो तिसृ और चतसृ शब्द के ऋकार को रेफादेश हो ॥ १०० ॥

## जराया जरसन्यतरस्याम् ॥ १०१ ॥

जरायाः[६], जरस्[१], अ० म् (अ) । जराशब्दस्य जरस् वादेशः स्यादजादौ विभक्तौ । निर्जरसौ निर्जरौ । निर्जरसः निर्जराः ॥ अजादि विभक्ति परे हो तो जरा शब्द को जरस् विकल्प से आदेश हो ॥ १०१ ॥

## त्यदादीनामः ॥ १०२ ॥

त्य० म्[६], अः[१] । एषामकारोऽन्तादेशः स्याद् विभक्तौ ॥ (द्विपर्यन्तानामेवेष्टिः) त्यद्-स्यः, त्यौ, त्ये । तद्—सः, तौ, ते । यद्—यः, यौ, ये, एतद्—एषः, एतौ, एते । इदम्—अयम्, इमौ, इमे । अदस्—असौ, अमू, अमी । द्वि—द्वौ द्वौ ॥ विभक्ति परे हो तो त्यदादिकों को अकारादेश हो ॥ १०२ ॥

## किमः[६] कः[१] ॥ १०३ ॥

किमः क आदेशः स्याद् विभक्तौ । अकच् सहितस्तात्ययमादेशः । कः, कौ, के ॥ विभक्ति परे हो तो किम् शब्द को क आदेश हो ॥ १०३ ॥

## कु तिहोः[७] ॥ १०४ ॥

किमः कुरादेशः स्यात्तादौ हादौ च विभक्तौ । कुतः । कुत्र । कुह ॥ तकारादि तथा हकारादि विभक्ति परे हो तो किम् शब्द को कु आदेश हो ॥१०४॥

## क्वाति ॥ १०५ ॥

क्व(अ), अति॰ । किमः क्वादेशः स्यादति । क्व गच्छन्ति भवन्तः । क्व पठान्यहम् ॥ अत् परे हो तो किम् शब्द को क्व आदेश हो ॥ १०५ ॥

## तदोः सः सावनन्त्ययोः ॥ १०६ ॥

तदोः[६], सः[१], सौ॰, अ० योः[६] । त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात् सौ परे । त्यद्—स्यः । तद्—सः । एतद्—एषः । अदस्—असौ ॥ सु विभक्ति परे हो तो त्यदादि शब्दों के अनन्त्य तकार, दकार को सकारादेश हो ॥ १०६ ॥

## अदस औ सुलोपश्च ॥ १०७ ॥

अदसः[६], औ[१], सुलोपः[१], च(अ)। अदस औकारोऽन्तादेशः स्यात् सौ परे, सुलोपश्च। असौ॥ सु विभक्ति परे हो तो अदस् शब्द के अन्त को औकारादेश और सु का लोप हो॥ १०७॥

## इदमो मः ॥ १०८ ॥

इदमः[६], मः[१]। इदमो मस्य मः स्यात् सौ परे। अयम्। इयम्॥ सु परे हो तो इदम् शब्द के मकार को मकार ही आदेश हो॥ १०८॥

## दश्च ॥ १०९ ॥

दः[६], च(अ)। इदमो दस्य मः स्याद् विभक्तौ। इमौ, इमे। इमम्, इमौ, इमान्॥ विभक्ति परे हो तो इदम् शब्द के दकार को मकारादेश हो॥ १०९॥

## [१]यः सौ[७] ॥ ११० ॥

इदमो दस्य यकारादेशः स्यात् सौ परे। इयम्॥ सु परे हो तो इदम् शब्द के मकार को यकारादेश हो॥ ११०॥

## इदोऽय् पुंसि ॥१११॥

इदः[६], अय्[१], पुंसि[७]। इदम इद स्थानेऽयादेशः स्यात् सौ परे पुंसि। अयम्॥ पुल्लिङ्ग में सु परे हो तो इदम् शब्द के इद भाग को अय् आदेश हो॥ १११॥

## अनाप्यकः ॥ ११२ ॥

अन्[१], अपि[७], अकः[६]। अककारस्येदम इदस्थानेऽनादेशः स्यादापि विभक्तौ। आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः। अनेन। अनयोः। अनयोः॥ आप् (तृतीयादि) विभक्ति परे हो तो ककार भिन्न इदम् शब्द के इद भाग को अन् आदेश हो॥

## हलि[७] लोपः[१] ॥ ११३ ॥

अककारस्येदम इदो लोपः स्यादापि हलादौ विभक्तौ। आभ्याम्। एभिः। एभ्यः। एभ्यः। एषाम्। एषु॥ आप् (तृतीयादि) हलादि विभक्ति परे हो तो ककार भिन्न इदम् शब्द के इद भाग का लोप हो॥ ११३॥

## मृजेर्वृद्धिः ॥ ११४ ॥

मृजेः[६], वृद्धिः[१]। मृजेरिकोवृद्धिः स्याद्धातुप्रत्यये परे। मार्ष्टि। मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्॥ मृज धातु के इक् को वृद्धि हो धातु प्रत्यय परे हो तो॥ ११४॥

## अचो ञ्णिति ॥ ११५ ॥

अचः[६], ञ्णिति[७]। ञिति, णिति च प्रत्यये परेऽजन्ताङ्गस्य वृद्धिः स्यात्। कारः। हारः। सखायौ। सखायः॥ ञित्, णित् प्रत्यय परे हों तो अजन्त अङ्ग को वृद्धि हो॥

## अत उपधायाः ॥ ११६ ॥

अतः[६], उ० धाः[६]। उपधाया अतोवृद्धिः स्यात्—ञिति, णिति च प्रत्यये परे। पाकः, त्यागः, यागः। पाचयतीति—पाचकः। पाठयतीति—पाठकः॥ ञित्, णित् प्रत्यय परे हों तो अङ्ग के उपधा अकार को वृद्धि हो॥ ११६॥

### तद्धितेष्वचामादेः ॥ ११७ ॥

त० षु[७], अचाम्[६], आदेः[६] । ञिति, णिति च तद्धिते परे, अचामादेरचो वृद्धिः स्यात् । गार्ग्यः । औपगवः ॥ ञित्, णित्, तद्धित प्रत्यय परे होंतो अचों के आदि अच् को वृद्धि हो ॥ ११७ ॥

### किति[७] च[अ] ॥ ११८ ॥

किति च तद्धिते परे अचामादेरचो वृद्धिः स्यात् । नाडायनः ॥ कित् तद्धित प्रत्यय परे हो तोभी अचों के आदि अच् को वृद्धि हो ॥११८॥

इति सप्तमाध्यायस्य द्वितीयः पादः ॥

# अथ सप्तमाध्यायस्य तृतीयः पादः ।

### देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥

दे०म्[६], आत्[१] । एषां पञ्चानामात् स्यात् ञिति णिति किति च तद्धिते परे । देविकाकूले भवाः—दाविकाशालयः । शिंशपाया विकारः-शांशपं शकटचक्रम् । ( पलाशादिभ्यो वा )-इत्यञ् । दित्यौह इदम्-दात्यौहम् । दीर्घसत्रे भवम्-दार्घसत्रम् । श्रेयसि-भवम्-श्रायसम् ॥ ञित्, णित्, कित् तद्धित् प्रत्यय परे होंतो देविका, शिंशपा, दित्यवाट् दीर्घ सत्र और श्रेयस् अङ्गके अचों के आदि अच् को आकारादेश हो ॥ १ ॥

### केकयमित्त्रयुप्रलयानां यादेरियः ॥ २ ॥

के०म्[६], यादेः[६], इयः[१] । एषां यकारादेरिय् आदेशः स्यात्—ञिति णिति किति च तद्धिते परे । केकयस्यापत्यम (४।१।१६८) कैकेयः । मैत्रेयः । प्रलयादागतम् – प्रालेयम् ॥ ञित् णित्, कित् तद्धित प्रत्यय परे होंतो केकय, मित्रयु और प्रलय अङ्ग के यकारादि भाग को इय आदेश हो ॥ २ ॥

### न य्वाभ्यां पदान्ताभ्यांपूर्वौतुताभ्यामैच् ॥ ३ ॥

न(अ), य्० म्[५], पूर्वौ[१], तु(अ), ताभ्याम्[५], ऐच्[१] । पदान्ताभ्यां यकार वकाराभ्यां परस्य वृद्धिर्न किन्तु ताभ्यां पूर्वौ क्रमादैजागमौ स्याताम् ञिति णिति किति च तद्धिते परे । व्यसने भवम्—वैयसनम् । व्याकरणमधीते वेत्ति वा वैयाकरणः ॥ ञित्, णित्, कित् तद्धित प्रत्यय परे हों तो यकार तथा वकार से परे अचों के आदि अच् को वृद्धि न हो अपितु उन यकार वकार से पूर्व ऐच् का आगम हो ॥ ३ ॥

### [६]द्वारादीनांच[अ] ॥ ४ ॥

एषां वृद्धिर्न अपितु ऐजागमः स्यात् । द्वारे नियुक्तः—दौवारिकः । द्वारपालस्येदम्-दौवारपालम् । स्वरमधिकृत्य कृतो ग्रन्थः—सौवरः ॥ द्वारादि गणपठित अङ्गों से परे अचों के आदि अच् को वृद्धि न हो अपितु यकार वकार से पूर्व ऐच् का आगमहो ॥४॥

### न्यग्रोधस्य[६] च[अ] केवलस्य[६] ॥ ५ ॥

अस्य वृद्धिर्न अपितु ऐजागमः स्यात् । न्यग्रोधस्य विकारः—नैयग्रोधश्चमसः ॥

केवल न्यग्रोध ( वट ) शब्द के यकार से परे अचों के आदि अच् को वृद्धि न हो अपितु यकार से पूर्व ऐच् का आगम हो ॥ ५ ॥

### [४]न कर्मव्यतिहारे[७] ॥ ६ ॥

नात्र ऐच् स्यात् । व्यावक्रोशी । व्यावहासी ॥ कर्म व्यतिहार अर्थ में ऐच् का आगम न हो ॥ ६ ॥

### [६]स्वागतादीनां च[४] ॥ ७ ॥

एषामैच् न स्यात् । स्वागतमित्याह—स्वागतिकः । स्वध्वरेण चरति—स्वाध्वरिकः । स्वङ्गस्याऽपत्यम्—स्वाङ्गिः । व्यङ्गस्या ऽपत्यम्—व्याङ्गिः । व्यडस्यापत्यम्—व्याडिः । व्यवहारेण चरति व्यावहारिकः । स्वपतौ साधुः स्वापतेयः ॥ स्वागतादि गणपठित शब्दों को ऐच् का आगम न हो ॥ ७ ॥

### श्वादेरिञि ॥ ८ ॥

श्वादेः[६], इञि[७] । नात्र ऐजागमः स्यात् । श्वभस्त्रस्यापत्यम् श्वाभस्त्रिः । श्वादंष्ट्रिः । ( तदादिविधौ चेदमेवज्ञापकम् ) । ( इकारादाविति वाच्यम् ) ॥ श्वगणेन चरति—श्वागणिकः । श्वागणिकी ॥ इञ् प्रत्यय परे होतो श्वादि अङ्ग को ऐच् का आगम नहो ॥

### [६]पदान्तस्याऽन्यतरस्याम्[४] ॥ ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्य ऐज्वास्यात् । श्वापदस्येदम्–श्वापदम् । शौवापदम् ॥ पद शब्द जिस के अन्त में हो ऐसे श्वादि अङ्ग को विकल्प से ऐच् का आगम हो ॥९॥

### उत्तरपदस्य[६] ॥ १० ॥

अधिकारोऽयम् । हनस्तोचिण्णलोंरिति प्राक् ॥ उत्तरपद का अधिकार है यहां से ( ७ । ३ । १२ ) सूत्रतक, उत्तरपद को कार्य हो ॥ १० ॥

### अवयवादृतोः ॥ ११ ॥

अ०दु[४], ऋतोः[६] । अवयववाचिनः पूर्वपदादृतुवाचिनोऽङ्गस्याचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । पूर्ववार्षिकः । अपरहैमनः ॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो अवयव वाचक से परे ऋतु वाची उत्तरपद के अचों के आदि अच् को वृद्धि हो ॥ ११ ॥

### सुसर्वार्द्धाज्जनपदस्य ॥ १२ ॥

सु०त्[४], ज०स्य[६] । उत्तरपदस्य वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्द्धपाञ्चालकः ॥ ञित्, णित्, कित्, तद्धित प्रत्यय परे होतो सु सर्व और अर्द्ध शब्द से परे जनपद वाची उत्तरपद के अचों के आदि अच् को वृद्धि हो ॥ १२ ॥

### दिशोऽमद्राणाम् ॥ १३ ॥

दिशः[४], अ०णाम्[६] । दिग्वाचकाज् जनपदवाचिनोऽमद्राणां वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । पूर्वपाञ्चालकः । दक्षिणपाञ्चालकः ॥ ञित्, णित्, तद्धित प्रत्यय परे होतो दिग्वाचक से परे मद्र वर्जित जनपद वाची उत्तरपद के अचों के आदि अच् को वृद्धि हो ॥ १३ ॥

### [६]प्राचां ग्रामनगराणाम्[६] ॥ १४ ॥

दिशः परेषां नगरवाचिनां ग्रामवाचिनां चाङ्गानामवयवस्य च वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे। पूर्वेषु कामशम्यां भवः—पूर्वेषुकामशमः। पूर्वस्मिन् पाटलिपुत्रे भवः—पूर्वपाटलिपुत्रकः॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो प्राग्देशियों के मत में दिग्वाचक से परे ग्राम और नगर वाचक अङ्गके अवयव को वृद्धि हो॥ १४॥

### सङ्ख्यायाः[५] संवत्सरसङ्ख्यस्य[६] च[७] ॥१५॥

सङ्ख्याया उत्तरपदसंवत्सर शब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिः स्यात्-ञिति णिति किति च तद्धिते परे। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा—द्विसांवत्सरिकः। त्रिसांवत्सरिकः। संख्यायाः। द्वे षष्ठी अधीष्टो भृतो भूतो भावी वा-द्विषाष्टिकः। द्विसाप्ततिकः॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो सङ्ख्या वाचक से परे संवत्सर और संख्यावाचक उत्तरपद के अचों के आदि अच् को वृद्धि हो॥१५॥

### वर्षस्याभविष्यति ॥ १६ ॥

व० स्य[६], अ०[७] ति। अभविष्यति काले सङ्ख्याया उत्तरस्य वर्षस्याचामादेरचो वृद्धिः स्यात्-ञिति णिति किति च तद्धिते परे। द्विवर्षे अधीष्टो भृतो भूतो वा-द्विवार्षिकः। त्रिवार्षिकः॥ भावी कालसे भिन्न अर्थमें ञित्, णित्, कित् तद्धित परे हो तो सङ्ख्या वाचकसे परे वर्ष उत्तरपद के अचों के आदि अच् को वृद्धि हो॥१६॥

### परिमाणान्तस्यासञ्ज्ञाशाणयोः ॥१७॥

प०स्य[६], अ०योः[७]। परिमाणान्तस्य सङ्ख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिः स्यात्-ञिति णिति किति च तद्धिते परे सञ्ज्ञाशाणयोरुत्तरपदयोः। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतम् द्विसौवर्णिकम्। द्विनैष्किकम्॥ सञ्ज्ञा और शाण को छोड़कर ञित्, णित्, कित् तद्धित प्रत्ययपरे होतो संख्यावाचक से परे परिमाणान्त उत्तरपद के अचों के आदि अच्को वृद्धिहो॥१७॥

### जे[७] प्रोष्ठपदानाम्[६] ॥ १८ ॥

प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च तद्धिते परे। प्रोष्ठपदासु जातः—प्रोष्ठपादः माणवकः॥ जात अर्थ में ञित, णित्, कित् तद्धित प्रत्यय परे होतो प्रोष्ठपद के उत्तरपद के अचों के आदि अच् को वृद्धि हो॥१८॥

### हृद्भगसिन्ध्वन्ते[७] पूर्वपदस्य[६] च[७] ॥ १९ ॥

हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचोवृद्धिः स्यात्—ञिति णिति किति च तद्धिते परे। सुहृदोऽपत्यम्—सौहार्दः। सुभगाया अपत्यम्—सौभागिनेयः। सक्तुप्रधानाः सिन्धवः—सक्तुसिन्धवः। तेषु भवः-साक्तुसैन्धवः॥ ञित्, णित्, कित् तद्धित प्रत्यय परे हो तो हृद्, भग और सिन्धु (नदी, या देश) हैं अन्तमें जिस के ऐसे पूर्वपद और उत्तर पदके अचों के आदि अच्को वृद्धिहो॥ १९॥

### [६]अनुशतिकादीनां च[७] ॥ २० ॥

एषामुभयपदवृद्धिः स्यात्—ञिति णिति किति च तद्धिते परे। शतेन क्रीतः-शतिकः।

अनुगतः शतिकेन—अनुशतिकः । तस्येदम्—आनुशातिकम् । परस्य स्त्री—परस्त्री । तस्या अपत्यम्—पारस्त्रैणेयः । सर्वलोके विदितः—सार्वलौकिकः । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । सर्वभूम्यां विदितः—सार्वभौमः । प्रयोगमर्हति प्रयोगे भवं वा—प्रायौगिकम् ॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो अनुशतिकादि गणपठित पूर्व पद और उत्तरपद के अचों के आदि अच् को वृद्धि हो ॥२०॥

## देवताद्वन्द्वे[7] च[अ] ॥२१॥

इह पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात्—ञिति णिति किति च तद्धिते परे। आग्निमारुतीम् । आग्निमारुतम् ॥ ञित्, णित्, कित् तद्धित प्रत्यय परे हो तो देवता द्वन्द्व समास में पूर्वपद और उत्तरपद के अचोंके आदि अच् को वृद्धि हो ॥ २१ ॥

## नेन्द्रस्य परस्य ॥ २२॥

न(अ), इन्द्रस्य[६], परस्य[६]। परस्येन्द्रस्य वृद्धिर्नस्यात् देवताद्वन्द्वे । सौमेन्द्रः । आग्नेन्द्रः॥ देवता द्वन्द्वमें परे इन्द्रशब्दको वृद्धि न हो ॥२२॥

## दीर्घाच्च वरुणस्य ॥२३॥

दीर्घात्[५], च(अ), व०स्य[६] । देवताद्वन्द्वे दीर्घात् परस्य वरुणस्य वृद्धिर्न स्यात् । ऐन्द्रावरुणम् । मैत्रावरुणम् ॥ देवता द्वन्द्वमें दीर्घसे परे वरुण शब्दको वृद्धि न हो॥२३॥

## [६]प्राचां नगरान्ते[७] ॥२४॥

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचाऽमादेरचो वृद्धिः स्यात्-ञिति णिति किति च तद्धिते परे । सुह्मनगरे भवः-सौह्मनागरः । पौर्वनागरः ॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो प्राग्देशियों के मत में नगरान्त पूर्वपद और उत्तरपद के अचोंके आदि अच् को वृद्धिहो ॥२६॥

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम ॥२५॥

ज० स्य[६], वि० म्[१], उ० म्[१] । जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिः स्यात्—उत्तरपदस्य वा ञिति णिति किति च तद्धिते परे। कुरुजङ्गले भवम्—कौरुजङ्गलम् । कौरुजाङ्गलम । वैस्वधेनवम् । वैस्वधैनवम् । सौवर्णवलजम् । सौवर्णवालजम ॥ ञित्, णित्, कित् तद्धित प्रत्ययपरे हों तो जङ्गल धेनु और वलज है अन्त में जिसके ऐसे पूर्वपद के अचों के आदि अच्को वृद्धि हो और उत्तरपदको विकल्पसे हो ॥२५॥

## अर्धात्[५] परिमाणस्य पूर्वस्य[६] तु[अ] वा[अ] ॥२६॥

अर्द्धात्परिमाणवाचकस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् पूर्वपदस्य तु वा ञिति णिति किति च तद्धिते परे। अर्धद्रोणेन क्रीतम्-अर्द्धद्रौणिकम् । आर्धद्रौणिकम् ॥ ञित, णित्, कित् तद्धित प्रत्ययपरे होंतो अर्ध शब्द से परे परिमाणवाचक उत्तरपद के अचों के आदि अच् को वृद्धि हो और पूर्वपद को विकल्पसे हो ॥ २६ ॥

## नातः परस्य ॥२७॥

न(अ) अतः[६], परस्य[६] । अर्धात्परस्यातः परिमाणाकारस्य—वृद्धिर्न, पूर्वस्य तु वा ञिति णिति किति च तद्धिते परे। अर्धप्रस्थिकम् । आर्धप्रस्थिकम् ॥ ञित, णित, कित्

तद्धित प्रत्यय परे हो तो अर्ध शब्द से परे परिमाण वाचक अकार को वृद्धि नहो और पूर्वपद को विकल्प से हो ॥२७॥

## प्रवाहणस्य[6] ढे[7] ॥२८॥

प्रवाहणस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् पूर्वस्य तु वा ढे परे। प्रवाहणस्यापत्यम्—प्रावाहणेयः। प्रवाहणेयः॥ ढ प्रत्यय परे होतो प्रवाहण शब्द के उत्तर पद के अचों के आदि अच् को वृद्धि हो और पूर्वपद को विकल्प से॥ २८॥

## तत्प्रत्ययस्य[6] च[अ] ॥ २९ ॥

ढान्तस्य प्रवाहणस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् पूर्वपदस्य तु वा। प्रवाहणेयस्याऽपत्यम्—प्रवाहणेयिः। प्रवाहणेयिः॥ ढान्त प्रवाहण शब्द के उत्तरपद के अचों के आदि अच् को वृद्धिहो और पूर्वपद को विकल्प से ॥ २९॥

## नञः[5] शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्[6] ॥ ३० ॥

नञः परेषां शुच्यादिपञ्चानामचामादेरचो वृद्धिः स्यात्, पूर्वस्य तु वा, ञिति, णिति, किति च तद्धिते परे। अशौचम्। आशौचम्। अनैश्वर्यम्। आनैश्वर्यम्। अक्षैत्रज्ञम्। आक्षैत्रज्ञम्। अकौशलम्। आकौशलम्। अनैपुणम्। आनैपुणम्॥ ञित्, णित्, कित् तद्धित प्रत्यय परे होतो नञ् से परे शुचि, ईश्वर, क्षेत्रज्ञ, कुशल और निपुण अङ्ग के अचों के आदि अच् को वृद्धि हो और पूर्वपद को विकल्प से हो ॥३०॥

## यथातथयथापुरयोः[6] पर्यायेण[3] ॥ ३१ ॥

नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणाचामादेरचो वृद्धिः स्यात्—ञिति, णिति, किति च तद्धिते परे। अयथातथाभावः—आयथातथ्यम्। अयाथातथ्यम्। आयथापुर्यम्। अयथापुर्यम्॥ ( चतुर्वर्णादीनास्वार्थे उपसङ्ख्यानम् )॥ चत्वारो वर्णाः—चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यम्, इत्यादि॥ ञित्, णित्, कित् तद्धित प्रत्यय परे हो तो नञ् से परे यथातथ और यथापुर पूर्वपद तथा उत्तरपद के अचों के आदि अच् को पर्याय ( पारी ) से वृद्धि हो॥ ३१॥

## हनस्तोऽचिण्णलोः ॥३२ ॥

हनः[7], तः[1], अ०लोः[7]। हन्तेस्तकारोऽन्तादेशः स्याच्चिण् णल् वर्जे ञिति, णिति परतः। घातयतीति-घातकः। साधुघाती॥ चिण् और णल् को छोड़कर ञित्, णित् प्रत्यय परे हों तो हन् धातु के अन्त को तकारादेश हो॥ ३२॥

## आतो युक् चिण्कृतोः ॥३३ ॥

आतः[6], युक्[1], चि०तोः[7]। आकारान्तस्याङ्गस्य युगागमः स्यात्—चिणि, ञिति णिति—कृति च परतः। अदायि। अधायि। अपायि। अलायि। कृति। दायः—दायकः। धायः—धायकः। पायः—पायकः। लायः—लायकः॥ चिण् और ञित् णित् कृत् प्रत्यय परे होंतो आकारान्त अङ्ग को युक् का आगम हो॥ ३३॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥३४ ॥

न(अ), उ०स्य[6], मा०स्य[6], अ०मेः[6]। उपधाया वृद्धिर्न स्याच्चिणि, ञिति णिति—

कृति च । अशमि । अतमि । कृति । शमकः । तमकः ॥ चिण् और ञित् णित् कृत् प्रत्यय परे होतो आङ् पूर्वक चम् वर्जित उदात्तोपदेश मान्त अङ्ग को वृद्धि नहो ॥३४॥

## जनिवध्योश्च ॥ ३५ ॥

ज०ध्योः[६], च (अ) । अनयोरुपधायावृद्धिर्न स्याच्चिणि,ञिति णिति कृति च । अजनि । अवधि । जनकः । वधकः ॥ चिण् और ञित् णित् कृत् प्रत्यय परे होतो जनि और वधि।अङ्ग की उपधा को वृद्धि न हो ॥ ३५ ॥

## [६]अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां [१]पुग्णौ[७] ॥३६॥

अर्त्यादीनामादन्तानां च पुगागमः स्याण्णौ परे । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । क्नोपयति । क्ष्मापयति । दापयति । धापयति । यापयति । मापयति ॥ णि (णिच्) प्रत्यय परे होतो अर्त्ति (ऋ) ह्री, व्ली, री, क्नूयी, क्ष्मायी और आकारान्त अङ्गको पुक् का आगम हो ॥३६॥

## [६]शाच्छासाह्वाव्यावेपां युक्[१] ॥ ३७ ॥

एषां युगागमः स्याण्णौ । निशाययति । अवच्छाययति । अवसाययति । आह्वाययति । संव्याययति । वाययति । पाययति । ( पातेर्णौलुग्वाच्यः ) ॥ पालयति ॥ णि परे होतो शा, छ, सा, ह्वा, व्या, वे और पा अङ्ग को युक् का आगम हो ॥ ३७ ॥

## वो विधूनने जुक् ॥ ३८ ॥

वः[६], वि०ने[७], जुक्[१] । कम्पेऽर्थे वातेर्जुगागमः स्याण्णौ । वाजयति ॥ णि परे होतो विधूनन ( कम्प ) अर्थ में वा अङ्गको जुक् का आगम हो ॥ ३८ ॥

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥३९॥

लीलोः[६], नु०कौ[१], अ०म्(अ) , स्ने०ने[७] । लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्यातां णौ स्नेहद्रवे । विलीनयति । विलाययति । विलालयति । विलापयति ॥ णि परे हो तो स्नेह विपातन अर्थ में वर्त्तमान ली और ला अङ्ग को विकल्प से यथाक्रम नुक् तथा लुक् का आगम हो ॥ ३९ ॥

## भियो हेतुभये षुक् ॥ ४० ॥

भियः[६], हे०ये[७], षुक्[१] । भी ई इति ईकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुगागमः स्याण्णौ हेतुभयेऽर्थे । भीषयते ॥ णि परे हो तो हेतु भय अर्थ में ईकारान्त भी अङ्ग को षुक् का आगम हो ॥ ४० ॥

## स्फायो वः ॥ ४१ ॥

स्फायः[६], वः[१] । णौ स्फायो वकारादेशः स्यात् । स्फावयति ॥ णि परे हो तो स्फाय् अङ्ग को वकारादेश हो ॥ ४१ ॥

## शदेरगतौ तः ॥ ४२ ॥

शदेः[६], अ०तौ[७], तः[१] । शदे णौ तोऽन्तादेशः स्यान्नतु गतौ । शातयति ॥ णि परे होतो गत्यर्थ से भिन्न शद् अङ्ग के अन्त को तकारादेश हो ॥ ४२ ॥

## रुहः पोऽन्यतरस्याम् ॥ ४३ ॥

रुहः[६], पः[१], अ०म् (अ) । रुहेर्वा पकारादेशः स्याण्णौ । व्रीहीन् रोपयति । रोहयति वा ॥ णि परे होतो रुह अङ्ग को विकल्प से पकारादेश हो ॥ ४३ ॥

## प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपः ॥ ४४ ॥

प्र०त[५], कात्[५], पू० स्य[६], अतः[६], इत[१], आपि[७], अ०पः[५] । प्रत्ययस्थात् कात् पूर्वस्याऽतः इकारादेशः स्यादापि परे स अ प् सुपः परो नाचेत् । कारिका । पाचिका ॥ सुप् से परे न हो ऐसा आप् परे होतो प्रत्ययस्थ ककार से पूर्व अकार को इकारादेश हो ॥

## न[अ] यासयोः[६] ॥ ४५ ॥

यत्तदोरस्येन्न स्यात् । यका । सका ॥ ( त्यकनश्च निषेधः ) ॥ उपत्यका । अधित्यका ॥ ( आशिषिचोपसङ्ख्यानम् ) ॥ जीवनाद् जीवका । भवका ॥ ( उत्तरपदलोपे न ) ॥ देवदत्तिका—देवका ॥ ( क्षिपकादीनां च )॥ क्षिपका । ध्रुवका । कन्यका । चटका ॥ ( तारका ज्योतिषि ) ॥ तारका । अन्यत्र तारिका । ( वर्णका तान्तवे ) ॥ वर्णका । अन्यत्र वर्णिका ॥ ( वर्त्तकाशकुनौ प्राचाम् ) ॥ उदीचान्तु वर्त्तिका ॥ (अष्टका पितृदेवत्ये ) ॥ अष्टिका अन्यत्र । ( सूतका पुत्रिका वृन्दारकाणां वेति वाच्यम् ) ॥ सूतिका । सूतका । पुत्रिका । पुत्रका । वृन्दारिका । वृन्दारका ॥ असुप् आप परे होतो प्रत्ययस्थ ककारसे पूर्व या और सा के अकार को इकारादेश न हो ॥ ४५ ॥

## उदीचामातः स्थानेयकपूर्वायाः ॥४६॥

उ०म्[६],आतः[६], स्थाने[७], य० याः[५] । यकपूर्वस्य स्त्रीप्रत्ययाऽऽकारस्य स्थाने योऽकारस्तस्य कात् पूर्वस्येद् वा स्यादापि परे । ( केणः ) इति ह्रस्वः । आर्य्यका । आर्यिका । चटकका । चटकिका । क्षत्रियका । क्षत्रियिका ॥ यकार तथा ककार जिसके पूर्व हों ऐसे स्त्री प्रत्यय आकार के स्थान में हुये अकार को उत्तरदेशियों के मत में इकारादेश हो ॥

## भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥४७॥

भ०स्व[६](लु०), न०म्[६], अपि(अ) । एषामतः स्थाने वेत् स्यात् । अभस्त्रिका । अभस्त्रका । भस्त्रिका । भस्त्रका । एषिका । एषका । अजिका । अजका । ज्ञिका । ज्ञका । द्विके । द्वके । अस्विका । अस्वका ॥ नञ् पूर्वक भी भस्त्रा एषा, जा, ज्ञा, द्वा और स्वा के आकार के स्थान में हुये अकारको विकल्प से इकारादेश हो ॥ ४७ ॥

## अभाषितपुंस्काच्च ॥ ४८ ॥

अ० त[५], च(अ) । अस्माद् विहितस्याऽऽतो वेत् स्यात् । गङ्गका । गङ्गिका । यदा बहुव्रीहौ कपि ह्रस्वः क्रियते तदानेन विधिना भवितव्यम् ॥ अभाषित पुंस्क से विहित आकार के स्थान में हुये अकार को विकल्प से इकारादेश हो ॥ ४८ ॥

## आदाचार्याणाम् ॥ ४९ ॥

आत्[१], आ०म्[६] । अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामात् स्यात् । गङ्गाका । यमुनाका ॥ अभाषित् पुंस्क से विहित अकार के स्थान में हुये अकार को आचार्यों के मत में आकारादेश हो ॥ ४९ ॥

## ठस्येकः ॥ ५० ॥

ठस्य[६], इकः[१] । अङ्गात् परस्य ठस्य इकादेशः स्यात् । रैवतिकं ददर्श । 'रेवत्या-

दिभ्यः ' इति ठक् ॥ अङ्ग से परे प्रत्यय के ठकार को इक् आदेश हो ॥ ५० ॥

## इसुसुक्तान्तात्[५] कः[१] ॥ ५१ ॥

इस् , उस् , उक् त्—एतदन्तात् परस्य ठस्य कादेशः स्यात् । सर्पिषा संस्कृतः सूपः—सार्पिष्कः । धानुष्कः । शाबरजम्बुकः । मातृकम् । पैतृकम् । उदकेन श्वयति वर्धते इति उदश्वित् । तत्र संस्कृतः औदश्वित्कः । ( दोष उपसङ्ख्यानम् ) ॥ दोर्भ्यां चरतीति दौष्कः ॥ इसन्त, उसन्त उगन्त और तान्त अङ्ग से परे ठकार को ककारादेश हो ॥

## चजोः कुघिण्यतोः ॥ ५२ ॥

चजोः[६], कु[१], घि०तोः[७] । चस्य जस्य च कुत्वं स्यात् घिति ण्यति च प्रत्यये परे । पाकः । त्यागः । रागः । पाक्यम् । वाक्यम् । रेक्यम् ॥ घित् और ण्यत् प्रत्यय परे हों तो चकार तथा जकार को कवर्ग आदेश हो ॥ ५२ ॥

## [६]न्यङ्क्वादीनां च[अ] ॥ ५३ ॥

कुत्वं स्यात् । न्यङ्कुः । नावञ्चेरित्युप्रत्ययः ॥ न्यङ्क्वादि गण पठित अङ्गों को कवर्गादेश हो ॥ ५३ ॥

## होहन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हः[६], हन्तेः[६], ञ्णि०षु[७] । ञिति णिति च प्रत्यये नकारे च, परे हन्तेर्हकारस्य कुत्वं स्यात् । घातयतीति—घातकः । घातं घातम् । घ्नन्ति ॥ ञित् णित् प्रत्यय और नकार परे होतो हन् धातु के हकार को कुत्वादेश हो ॥ ५४ ॥

## अभ्यासाच्च ॥ ५५ ॥

अ०त्[५], च(अ) । अभ्यासात् परस्य हन्तेर्हकारस्य कुत्वं स्यात् । जिघांसति । जङ्घन्यते । अहं जघान ॥ अभ्यास से परे हन् धातु के हकार को कुत्व हो ॥ ५५ ॥

## हेरचङि ॥ ५६ ॥

हेः[६], अ०ङि[७] । अभ्यासात् परस्य हिनोतेर्हकारस्य कुत्वं स्यादचङि । जिघीषति । प्रजेघीयते ॥ चङ् वर्जित प्रत्यय परे होतो अभ्यास से परे हि अङ्ग के हकार को कुत्वादेश हो ॥ ५६ ॥

## सन्लिटोर्जेः ॥ ५७ ॥

स०टोः[७], जेः[६] । सनि लिटि च प्रत्यये परे जयतेर्योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगीषति । जिगीषतः । जिगीषन्ति । जिगाय । जिग्यतुः । जिग्युः ॥ सन् और लिट् प्रत्यय परे होतो अभ्यास से उत्तर जि अङ्ग को कुत्वादेश हो ॥ ५७ ॥

## विभाषा[१] चेः[६] ॥ ५८ ॥

अभ्यासात् परस्य चिञो वा कुत्वं स्यात्—सनि लिटि च प्रत्यये परे । चिकीषति । चिचीषति । चिकाय । चिचाय ॥ सन् और लिट् प्रत्यय परे होतो अभ्यास से चिञ् अङ्ग को विकल्प से कुत्वादेश हो ॥ ५८ ॥

## न[अ] क्वादेः[६] ॥ ५९ ॥

क्वादेर्धातोः कुत्वं न स्यात् । गर्ज्यम् । खर्ज्यम् ॥ कवर्गादि धातु को कुत्वादेश नहो ॥

## अजिव्रज्योश्च ॥ ६० ॥

अ० ज्योः[६], च(अ)। कुत्वं न स्यात्। समाजः। परिव्राजः ॥ अजि और व्रजि अङ्ग को पूर्वप्राप्त कुत्वादेश न हो ॥ ६० ॥

## भुजन्युब्जौ[१] पाण्युपतापयोः[७] ॥ ६१ ॥

एतयोरेतौ निपात्यौ स्तः। भुज्यते अनेनेति—भुजः—पाणिः। (हलश्च) इति घञ्। न्युब्जन्त्यस्मिन्निति—न्युब्जः। उपतापोरोगः ॥ पाणि और उपताप अर्थ में कुत्व का अभाव करके भुज न्युब्ज शब्द निपातन किये हैं ॥ ६१ ॥

## प्रयाजानुयाजौ[१] यज्ञाङ्गे[७] ॥ ६२ ॥

यज्ञाङ्गे इमौ निपात्यौ स्तः। पञ्चप्रयाजाः। त्रयोऽनुयाजाः ॥ कुत्वाभाव करके यज्ञाङ्ग वाचक प्रयाज और अनुयाज शब्द निपातित हैं ॥ ६२ ॥

## वञ्चेर्गतौ ॥ ६३ ॥

वञ्चेः[६], गतौ[७]। कुत्वं न स्यात्। वञ्च्यं वणिजो वञ्चन्ति। गतौ किम्?। वङ्क्यं काष्ठम्। कुटिलमित्यर्थः ॥ गति अर्थ में वर्त्तमान वञ्च अङ्ग को कुत्वादेश हो ॥६३॥

## ओक उचः के ॥ ६४ ॥

ओकः[१], उचः[६], के[७]। उचेर्गुणकुत्वे निपात्येते-के परे। ओकः—शकुन्तवृषलौ ॥ क प्रत्यय के परे उच् धातु से ओक निपातन किया है ॥ ६४ ॥

## ण्य आवश्यके ॥ ६५ ॥

ण्ये[७], आ० के[७]। आवश्यकेऽर्थे ण्यप्रत्यये परे कुत्वं न स्यात्। अवश्यवाच्यम्। अवश्यपाच्यम् ॥ आवश्यक अर्थ में ण्य प्रत्यय परे हो तो कुत्वादेश न हो ॥ ६५ ॥

## यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

य० चः[६], च(अ)। एषां कुत्वं न ण्ये परे। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यम्। अर्च्यम् ॥ (त्यजेश्च) ॥ त्याज्यम् ॥ ण्य प्रत्यय परे हो तो यज, याच, रुच, प्रवच और ऋच अङ्ग को कुत्वादेश न हो ॥ ६६ ॥

## वचो शब्दसंज्ञायाम् ॥ ६७ ॥

वचः[६], श० म्[७]। एवति कुत्वं न स्यात्। वाच्यम्। शब्दाख्यायां तु वाक्यम् ॥ शब्द संज्ञा विषय में ण्यत् प्रत्यय परे हो तो वच धातु को कुत्वादेश न हो ॥ ६७ ॥

## [१]प्रयोज्यनियोज्यौ शक्यार्थे[७] ॥ ६८ ॥

इमौ शक्यार्थे निपात्येते। प्रयोक्तुं शक्यः—प्रयोज्यः। नियोक्तुं शक्यः—नियोज्यो भृत्यः ॥ शक्य अर्थ में प्र और नि पूर्वक युज धातु से कुत्वाभाव करके प्रयोज्य तथा नियोज्य शब्द निपातित किये हैं ॥ ६८ ॥

## भोज्यं[१] भक्ष्ये[७] ॥ ६९ ॥

शक्यार्थे भक्ष्ये भोज्यं निपात्यते। भोज्य ओदनः ॥ शक्यार्थ में भक्ष्य अभिधेय हो तो कुत्वाभाव करके भोज्य निपातन किया गया है ॥ ६९ ॥

## घोर्लोपो लेटि वा ॥ ७० ॥

घोः[६], लोपः[१], लेटि[७], वा(अ) । घुसंज्ञकानां लेटि वा लोपः स्यात् । दधद्रत्नानिदाशुषे । सोमोददद्गन्धर्वाय । न च भवति । यदग्निरग्नयेददात् ॥ लट् लकार परे हो तो घु संज्ञक अङ्गों का विकल्प से लोप हो ॥ ७० ॥

## ओतः[६] श्यनि[७] ॥ ७१ ॥

ओकारान्तस्याङ्गस्य लोपः स्याच्छ्यनि । शो-तनूकरणे—श्यति । श्यतः । श्यन्ति । दो-द्यति । सो-स्यति ॥ श्यन् प्रत्यय परे हो तो ओकारान्त अङ्ग का लोप हो ॥७१॥

## क्सस्याचि ॥ ७२ ॥

क्सस्य[६], अचि[७] । क्सस्य लोपः स्यादजादौ तङि । (अलोऽन्त्यस्य) अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि ॥ अजादि प्रत्यय परे हो तो क्स प्रत्यय का लोप हो ॥७२॥

## लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

लुक्[१], वा(अ), दु० म[६], आ० दे[७], दन्त्ये[७] । एषां क्सस्य लुग्वा स्याद् दन्त्ये तङि । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अदुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । दिह—अदिग्ध । अधिक्षत । लिह—अलीढ । अलिक्षत । गुह—अगूढ । अघुक्षत ॥ आत्मनेपद विषय में दन्त्य अक्षर परे हो तो दुह, दिह, लिह और गुह अङ्ग के क्स प्रत्यय का विकल्प से लुक् हो ॥ ७३ ॥

## [६]शमामष्टानां दीर्घः[१] श्यनि[७] ॥ ७४ ॥

शमादीनामष्टानां दीर्घः स्याच्छ्यनि । शाम्यति । ताम्यति । दाम्यति । श्राम्यति । भ्राम्यति । क्लाम्यति । माद्यति ॥ श्यन् प्रत्यय परे हो तो शमु आदि आठ धातुओं को दीर्घादेश हो ॥ ७४ ॥

## [६]ष्ठिवुक्लमुचमां शिति[७] ॥ ७५ ॥

एषामचो दीर्घः स्याच्छिति । ष्ठीवति । क्लामति । ( आङिचम इति वाच्यम् ) ॥ आचामति ॥ शित् प्रत्यय परे हो तो ष्ठिवु, क्लमु और आङ् युक चमु धातु को दीर्घादेश हो ॥ ७५ ॥

## क्रमः[६] परस्मैपदेषु[७] ॥ ७६ ॥

क्रमेर्दीर्घः स्यात् परस्मैपदेषु शिति । क्रामति । क्रामतः । क्रामन्ति ॥ परस्मैपद विषय में शित् प्रत्यय परे हो तो क्रमु धातु को दीर्घादेश हो ॥ ७६ ॥

## [६]इषुगमियमां छः[१] ॥ ७७ ॥

एषां छादेशः स्याच्छिति परे । इच्छति । गच्छति । यच्छति ॥ शित् प्रत्यय परे हो तो इषु गमि और यम धातु को छकारादेश हो ॥ ७७ ॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदाम्[६] पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः[१] ॥ ७८ ॥

पादीनां पिबादय आदेशाः स्युरिशति परे । पा—पिबति । घ्रा—जिघ्रति । ध्मा—

धमति। स्था—तिष्ठति। म्ना—मनति। दाण्—यच्छति। दृशिर्—पश्यति। अर्त्ति—ऋच्छति। सर्त्ति—धावति। शद—शीयते। सद्—सीदति॥ शित् प्रत्यय परे हो तो पा, घ्रा, ध्मा, स्था, म्ना, दाण्, दृशिर्, अर्त्ति, सर्त्ति, शद और सद् अङ्ग को यथाक्रम पिब, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय और सीद आदेश हों॥७८॥

## ज्ञाजनोर्जा ॥ ७९ ॥

ज्ञा० नोः[६], जा[१]। अनयोर्जादेशः स्याच्छिति परे। जानाति। जायते॥ शित् प्रत्यय परे हो तो ज्ञा और जन अङ्ग को जा आदेश हो॥ ७९॥

## प्वादीनां[६] ह्रस्वः[१] ॥ ८० ॥

प्वादयः क्र्यादिषु पठ्यन्ते। पूञ्—पवने इत्यतः, प्ली—गतावित्ति धातूनां ह्रस्वः स्याच्छिति परे। पूञ्—पुनाति। लूञ्—लुनाति। स्तॄञ्—स्तृणाति। कॄञ्—कृणाति। वॄञ्—वृणाति। धूञ्—धुनातीत्यादयः॥ शित् प्रत्यय परे हो तो प्वादि गणपठित अङ्गों को ह्रस्वादेश हो॥ ८०॥

## मीनातेर्निगमे ॥ ८१ ॥

मी०तेः[६], नि०मे[७]। शिति परे ह्रस्वः स्यात्। प्रमिणन्ति व्रतानि। लोके प्रमीणन्ति॥ शित् प्रत्यय परे हो तो निगम (वेद) विषय में मीनाति अङ्ग को ह्रस्वादेश हो॥ ८१॥

## मिदेर्गुणः ॥ ८२ ॥

मिदेः[६], गुणः[१]। मिदेरिको गुणः स्याच्छिति। मेद्यति। मेद्यतः। मेद्यन्ति॥ शित् प्रत्यय परे हो तो मिदि अङ्ग को गुणादेश हो॥ ८२॥

## जुसि[७] च[अ] ॥ ८३ ॥

अजादौ जुसि परे इगन्ताङ्गस्य गुणः स्यात्। अजागरुः। अबिभयुः। अबिभरुः॥ अजादि जुस् प्रत्यय परे हो तो इगन्त अङ्ग को गुणादेश हो॥ ८३॥

## सार्वधातुकार्द्धधातुकयोः[७] ॥ ८४ ॥

सार्वधातुके आर्द्धधातुके च प्रत्यये परे इगन्तस्याङ्गस्य गुणः स्यात्। भवति। नयति। तरति। चेता। स्तोता। कर्त्ता॥ सार्वधातुक तथा आर्धधातुक प्रत्यय परे हों तो इगन्त अङ्ग को गुणादेश हो॥ ८४॥

## जाग्रोऽविचिण्णल्ङित्सु ॥ ८५ ॥

जाग्रः[६], अ० सु[७]। जागर्तेर्गुणः स्याद्विचिण्णल् ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेध विषये च। जागरयति। जागरं जागरम्। जागरः। जागरितः। जागरितवान्। जागरकः। साधुजागरी॥ वि, चिण्, णल् और ङित् वर्जित प्रत्यय परे हों तो जागृ अङ्ग को वृद्धि अथवा प्रतिषेध विषय में गुणादेश हो॥ ८५॥

## पुगन्तलघूपधस्य[६] च[अ] ॥ ८६ ॥

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुके आर्द्धधातुके च प्रत्यये परे। क्लेपयति। ह्रेपयति। क्नोपयति। लघूपधस्य—भेदनम्। छेदनम्। भेत्ता। छेत्ता॥ सार्वधातुक तथा आर्धधातुक प्रत्यय परे होंतो पुगन्त और लघूपध अङ्ग को गुणादेश हो॥८६॥

## नाभ्यस्तस्याचि पिति सार्वधातुके ॥८७॥

न(अ), अ०स्य[६], अचि[७], पिति(अ), सा०के[७]। अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्या-जादौ पिति सार्वधातुके गुणो न स्यात्। नेनिजानि। अनेनिजम्। परिवेविषाणि। पर्यवेविषम्॥ (बहुलं छन्दसीति वाच्यम्)॥ जुजोषद्॥ अजादि पित् सार्वधातुक प्रत्ययपरे होतो अभ्यस्त संज्ञक लघूपध अङ्गको गुणादेश न हो ॥८७॥

## भूसुवोस्तिङि ॥८८॥

भू०वोः[६], तिङि[७]। भू सू अनयोः सार्वधातुके तिङि परे गुणो न स्यात्। अभूत्। अभूः। अभूवम्। सुवै। सुवावहै। सुवामहै॥ तिङ् सार्वधातुक प्रत्ययपरे होतो भू और सू अङ्गको गुणादेश न हो ॥८८॥

## उतो वृद्धिर्लुकि हलि ॥८९॥

उतः[६], वृद्धिः[१], लुकि[७], हलि[७]। लुग् विषये उकारान्तस्याङ्गस्य वृद्धिः स्यात् पिति-हलादौ सार्वधातुके नत्वभ्यस्तस्य—यौति। यौषि। यौमि। नौति। नौषि। नौमि। स्तौति। स्तौषि। स्तौमि॥ लुक् विषय में हलादि पित् सार्वधातुक प्रत्यय परे होतो अभ्यस्त वर्जित उकारान्त अङ्ग को वृद्धि आदेश हो ॥८९॥

## ऊर्णोतेर्विभाषा ॥९०॥

ऊर्णोतेः[६], विभाषा (अ)। ऊर्णोतेर्वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति। ऊर्णोति। ऊर्णौषि। ऊर्णोषि। ऊर्णौमि। ऊर्णोमि॥ हलादि पित् सार्वधातुक प्रत्यय परे होतो ऊर्णुञ् अङ्गको विकल्पसे वृद्धि हो ॥९०॥

## गुणोऽपृक्ते ॥९१॥

गुणः[१], अपृक्ते[७]। ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके। और्णोत्, और्णोः॥ हलादि पित् सार्वधातुक प्रत्यय परे होतो ऊर्णुञ् अङ्गको गुणादेश हो ॥९१॥

## तृणह इम् ॥९२॥

तृणहः[६], इम्[१]। तृहः श्नमि कृते इडागमः स्याद्धलादौ पिति सार्वधातुके। तृणेढि॥ तृणेक्षि। तृणेह्मि॥ हलादि पित् सार्वधातुक प्रत्यय परे हो तो तृह अङ्ग को इम्का आगम हो ॥९२॥

## ब्रुव ईट् ॥९३॥

ब्रुवः[५], ईट्[१]। ब्रुवः परस्य हलादेः पितः सार्वधातुकस्येडागमः स्यात्। ब्रवीति। ब्रवीषि। ब्रवीमि॥ ब्रूञ् अङ्गसे परे हलादि पित् सार्वधातु को ईट्का आगम॥ ९३॥

## यङो वा ॥९४॥

यङः[५], वा(अ)। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य वेडागमः स्यात्। बोभवीति। बोभोति। बोभवीषि। बोभोषि। बोभवीमि। बोभोमि॥ यङ् प्रत्यय से परे हलादि पित् सार्वधातुक को विकल्पसे ईडागम हो ॥९४॥

## तुरुस्तुशम्यमः[५] सार्वधातुके[७] ॥९५॥

एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङो वेडागमः स्यात्। उत्तवीति। उत्तोति।

रवीति । रौति । स्तवीति । स्तौति । शमीध्वम् । शाम्यध्वम् । अभ्यमीति । अभ्यमति ॥ तु ( गत्यर्थक सौत्र धातु ) रु, स्तु, शम् और अम् धातु से परे हलादि तिङ् सार्वधातुक को विकल्प से इडागम हो ॥९५॥

## [१]अस्तिसिचोऽपृक्ते[७] ॥९६॥

अ०चः[१], अ०क्ते[७] । विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तहल ईडागमः स्यात् । आसीत् । आसीः । सिजन्तात्—अकार्षीत् । असावीत् ॥ विद्यमान अस् और सिजन्त अङ्गसे परे अपृक्त हल् अङ्गको ईट्का आगम हो ॥९६॥

## बहुलं[२] छन्दसि [७]॥९७॥

छन्दसि विषये अस्तिसिचोरपृक्तस्य सार्वधातुकस्य बहुलमीडागमः स्यात् । सर्वमाः । ( आ इति । अस्ते लङ् तिप् शपो लुक् रुत्वविसर्जनीयौ ) ॥ आसीदिति स्थाने आः क्रियापदम् ॥ छन्दो विषयमें अस्ति ( अस् ) और सिजन्त अङ्गसे परे अपृक्त सार्वधातुक प्रत्यय को बाहुल्य से ईट्का आगम हो ॥९७॥

## रुदश्च पञ्चभ्यः ॥९८॥

रुदः[५], च(अ), पञ्चभ्यः[५]। रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्या-पृक्तस्य ईडागमः स्यात् । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । ८।३।१९। प्राणीः । अजक्षीत् । अजक्षीः ॥ रुदादि पञ्च धातुओं से परे अपृक्त हलादि पित् सार्वधातुक को ईट्का आगम हो ॥९८॥

## अड्[१] गार्ग्यगालवयोः[७] ॥९९॥

रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य गार्ग्यगालवम-तेन अडागमः स्यात् । अरोदत् । अरोदीत् । अरोदः । अरोदीः । अस्वपत् । अस्वपीत् । अस्वपः । अस्वपीः । अश्वसत् । अश्वसीत् । अश्वसः । अश्वसीः । प्राणत् । प्राणीत् । प्राणः । प्राणीः । अजक्षत् । अजक्षीत् । अजक्षः । अजक्षीः ॥ रुदादि पञ्च धातुओं से परे गार्ग्य और गालवजी के मतमें अपृक्त हलादि पित् सार्वधातुको अट्का आगम हो ॥९०॥

## अदः[५] सर्वेषाम्[६] ॥१००॥

अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात् सर्वमतेन । आदत् । आदः ॥ अद धातु से परे सर्व आचार्यों के मत में अपृक्त हलादि सार्वधातुक को अट् का आगम हो

## अतो दीर्घो यञि ॥१०१॥

अतः[६], दीर्घः[१], यञि[७] । अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । भवामि। भवावः । भवामः । पचयामि । पचयावः । पचयामः ॥ यञ् आदि सार्वधातुक प्रत्यय परे हो तो अदन्त अङ्गको दीर्घ आदेश हो ॥ १०१॥

## सुपि[७] च[अ] ॥१०२॥

यञादौ सुपि परेऽतोऽङ्गस्य दीर्घः स्यात् । बालकाभ्याम् ३ । बालकाय ॥ यञ् आदि सुप् परे होतो अदन्त अङ्गको दीर्घादेश हो ॥१०२॥

## बहुवचने झल्येत् ॥ १०३॥

ब० ने°, झलि°, एत्¹। झलादौ बहुवचने सुपि परेऽतोऽङ्गस्यैकारादेशः स्यात्। बालकेभ्यः २। बालकेषु॥ बहुवचन में झलादि सुप् परे हो तो अदन्तअङ्ग को एकारादेश हो॥१०३॥

## ओसि॰ च॰ ॥१०४॥

ओसि परेऽतोऽङ्गस्यैकारादेशः स्यात्। बालकयोः २॥ ओस् परे होतो अदन्त अङ्ग को एकारादेश हो॥१०४॥

## आङि चापः ॥१०५॥

आङि°, च(अ), आपः⁶। आङिति टासञ्ज्ञा प्राचाम्। आङि ओसि च परे आबन्ताङ्गस्यैकारादेशः स्यात्। यशोदया। यशोदयोः २॥ आङ् (टा) और ओस् परे हो तो आबन्त अङ्गको एकारादेश हो॥१०५॥

## सम्बुद्धौ॰ च॰ ॥ १०६ ॥

आबन्तस्याङ्गस्यैत्वं स्यात्। एङ्ह्रस्वादिति सम्बुद्धिलोपः। हे यशोदे!। प्रमोदे!!॥ सम्बुद्धि परे हो तो आबन्त अङ्गको एत्व हो॥१०६॥

## अम्बार्थनद्योर्ह्रस्वः ॥१०७॥

अ०द्योः⁶, ह्रस्वः¹। अम्बार्थानां नद्यन्तानां चाङ्गानां ह्रस्वः स्यात् सम्बुद्धौ परे। हेऽम्ब!। हेऽक्क!। हेऽल्ल!। नद्याः। हे कुमारि!। वीरबन्धु!॥ (डलकवतीनां प्रतिषेधो वक्तव्यः)॥ हेऽम्बाडे। हेऽम्बाले। हेऽम्बिके। (छन्दसि वेति वाच्यम्) हेऽम्बाड। हेऽम्बाडे। हेऽम्बाल। हेऽम्बाले। (तलो ह्रस्वो वाङि सम्बुद्ध्योरिति वक्तव्यम्)॥ देवते भक्तिः, देवतायां वा। हे देवते। हे देवता॥ (मातॄणां मातच् पुत्रार्थमर्हते)। गार्गीमात। वात्सीमात॥ सम्बुद्धि परे हो तो अम्बार्थ (माता के पर्याय वाचक) और नद्यन्त अङ्ग को ह्रस्वादेश हो॥१०७॥

## ह्रस्वस्य⁶ गुणः¹ ॥ १०८ ॥

ह्रस्वान्तस्याङ्गस्य गुणः स्यात् सम्बुद्धौ परे। हे अग्ने!। हे प्रभो!॥ सम्बुद्धि परे होतो ह्रस्वान्त अङ्गको गुणादेश हो॥१०८॥

## जसि॰ च॰ ॥ १०९॥

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे। कवयः। साधवः। मतयः। धेनवः॥ (जसादिषुच्छन्दसि वेति वाच्यम्)॥ किं प्रयोजनम्। अम्बे दर्विशतक्रत्वः। पश्वे किकिदीव्या। अम्बे, अम्ब। दर्वे, दर्वि। शतक्रत्वः, शतक्रतवः। पश्वे, पशव। किकिदीव्या। किकिदीविना॥ जस् परे हो तो ह्रस्वान्त अङ्गको गुणादेश हो॥१०९॥

## ऋतोङिसर्वनामस्थानयोः ॥११०॥

ऋतः⁶, ङि०योः⁷। ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। ङौ—मातरि। पितरि। भ्रातरि। जामातरि। कर्त्तरि। सर्वनामस्थाने—मातरौ। मातरः। पितरौ। पितरः। भ्रातरौ। भ्रातरः। कर्त्तारौ। कर्त्तारः॥ ङि और सर्वनाम स्थान परे होतो ऋदन्त अङ्गको गुणादेश हो॥११०॥

## घेर्ङिति ॥१११॥

घेः[६], ङिति[७] । घ्यन्ताङ्गस्य ङिति सुपि परे गुणः स्यात् । कवये । कवेः २ । प्रभवे ददामि । प्रभोरायामि । प्रभोराज्ञां पालयामि ॥ ङित् सुप् विभक्ति परे होतो घ्यन्त अङ्ग को गुण आदेश हो ॥१११॥

## आण्नद्याः ॥११२॥

आट्[१], नद्याः[५] । नद्यन्तादङ्गात्परेषां ङितामाडागमः स्यात् । कुमार्यै । वध्वै । कुमार्याः २ । वध्वाः २ ॥ नद्यन्त अङ्गसे परे ङित् सुप् प्रत्ययों को आट् का आगमहो ॥

## याडापः ॥११३॥

याट्[१], आपः । आबन्ताङ्गात् परेषां ङितां याडागमः स्यात् । यशोदायै । यशोदायाः २ ॥ आबन्त अङ्गसे परे ङित् प्रत्ययों को याट् का आगम हो ॥ ११३ ॥

## सर्वनाम्नः स्याड्ढ्रस्वश्च ॥११४॥

स०म्नः[५], स्याट्[१], ह्रस्वः[१], च(अ) । आबन्तात् सर्वनाम्नः परस्य ङितः स्याडागमः स्याद् आपश्च ह्रस्वः । सर्वस्यै । सर्वस्याः २ । कस्यै । कस्याः ॥ आबन्त सर्वनाम से परे ङित सुप् प्रत्ययको स्याट् का आगम हो और आप् को ह्रस्वादेश हो ॥ ११४ ॥

## विभाषा[१] द्वितीयातृतीयाभ्याम्[५] ॥११५॥

आभ्यां परस्य ङितो वा स्याडागमः स्यात् , आपश्च ह्रस्वः । द्वितीयस्यै, द्वितीयायै। द्वितीयस्याः २ । द्वितीयायाः २ । तृतीयस्याः २ । तृतीयायाः २ ॥ द्वितीया और तृतीया शब्दसे परे ङित् प्रत्यय को विकल्पसे स्याट्का आगम हो ॥११५॥

## ङेराम्नद्याम्नीभ्यः ॥११६॥

ङेः[६],आम्[१],न०भ्यः[५] । नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेरामादेशः स्यात् । कुमार्याम् । वध्वाम् । गङ्गायाम् । ग्रामण्याम् ॥ नद्यन्त और आबन्त तथा नी शब्द से परे ङि विभक्ति को आम् आदेश हो ॥११६॥

## इदुद्भ्याम्[५] ॥११७॥

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेरामादेशः स्यात् । मत्याम् । धेन्वाम् ॥ नदीसंज्ञक इकार उकारसे परे ङि विभक्ति को आम् आदेश हो ॥ ११७ ॥

## औत्[१] ॥११८॥

इदुद्भ्यां परस्य ङेरौत् स्यात् । सख्यौ । पत्यौ ॥ इकार उकार से परे ङि विभक्ति को औकारादेश हो ॥११८॥

## अच्च घेः ॥ ११९ ॥

अत्[१], च(अ), घेः[६] । इदुद्भ्यां परस्य ङेरौत् घेरत् । कवौ । प्रभौ । मतौ । धेनौ ॥ इकार उकार से परे ङि को औकारादेश और घिसंज्ञक को अकार हो ॥११९॥

## आङो नाऽस्त्रियाम् ॥ १२० ॥

आङः[६], ना(अ), अ० म्[७] । घेः परस्याऽऽङो ना स्यादस्त्रियाम् । कविना । प्रभुणा । घिं संज्ञक से परे आङ् ( टा विभक्ति ) को ना आदेश हो ॥ १२० ॥

इति सप्तमाध्यायस्य तृतीयः पादः ॥

# अथ सप्तमाध्यायस्य चतुर्थः पादः ।

## णौ चङ्युपधाया ह्रस्वः ॥ १ ॥

णौ॰, चङि॰, उ० याः॰, ह्रस्वः॰ । चङ् परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । अचीकरत् । अजीहरत् । अलीलवत् । अपीपठत् ॥ चङ् है परे जिससे ऐसा णि प्रत्यय परे हो तो अङ्ग की उपधा को ह्रस्वादेश हो ॥ १ ॥

## नाग्लोपिशास्वृदिताम् ॥ २ ॥

न(अ), अ०म्॰ । अग्लोपिनः शास्तेर्ऋदितां चोपधाया ह्रस्वो न स्यात् । अग्लोपिनः—मातरमाख्यत्—अममातरत् । राजनमति क्रान्तवान्—अत्यरराजत । लोमान्यनुमृष्टवान्—अन्वलुलोमत । ( प्रगेव यत्रकेवलो लुप्यते तत्र स्थानिवद्भावे नैवसिद्धम्, हलचोरादेशार्थमिदं वचः ) । अशशासत् । बाधृ—अबबाधत् । याचृ—अययाचत । ढौकृ—अडुढौकत् ॥ चङ् है परे जिससे ऐसा णि परे हो तो अग्लोपी शास् तथा ऋदित् अङ्ग की उपधा को ह्रस्वादेश न हो ॥ २ ॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥

भ्रा०म्॰, अ० म्(अ) । एषामुपधाया ह्रस्वो वा स्याच्चङ् परे णौ । अबभ्राजत, अबिभ्रजत् । अबभासत्, अबीभसत् । अबभाषत्, अबीभषत् । अदिदीपत्, अदीदिपत् । अजीजिवत्, अजिजीवत् । अमीमिलत्, अमिमीलत् । अपीपिडत्, अपिपीडत्॥ चङ् परक णि परे हो तो भ्राज, भास, भाष, दीप, जीव, मील और पीड अङ्ग की उपधा को विकल्प से ह्रस्वादेश हो ॥ ३ ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

लोपः॰, पिबतेः॰, ईत्॰, च(अ), अ०स्या॰ । पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदादेशश्च चङ् परे णौ । अपीप्यत् । अपीप्यताम् । अपीप्यन् ॥ चङ् परक णि प्रत्यय परे हो तो पिबति अङ्ग की उपधा का लोप और अभ्यास को ईकारादेश हो ॥४॥

## तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेः॰, इत्॰ । तिष्ठतेरुपधाया इदादेशः स्याच्चङ् परे णौ । अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् ॥ चङ् परक णि प्रत्यय परे हो तो तिष्ठति ( ष्ठा ) अङ्ग की उपधा को इकारादेश हो ॥ ५ ॥

## जिघ्रतेर्वा ॥ ६ ॥

जिघ्रतेः॰, वा(अ) । जिघ्रतेरुपधाया वेदादेशः स्याच्चङ् परे णौ । अजिघ्रिपत् । अजिघ्रिपताम् । अजिघ्रिपन् । अजिघ्रपत् । अजिघ्रपताम् । अजिघ्रपन् ॥ चङ् परक णि प्रत्यय परे हो तो जिघ्रति ( घ्रा ) अङ्ग की उपधा को विकल्प से इकारादेश हो ॥ ६ ॥

## उर्ऋत् ॥ ७ ॥

उः॰, ऋत्॰ । उपधाया ऋवर्णस्य स्थाने ऋद्वा स्याच्चङ् परे णौ । पृथ—प्रक्षेपे । अपीपृथत्, अपपर्थत् । अवीवृतत्, अववर्तत् । अमीमृजत्, अममार्जत् ॥ चङ् परक

णि परे हो तो अङ्ग की उपधा ऋवर्ण के स्थान में ऋकारादेश हो ॥ ७ ॥

## नित्यं[२] छन्दसि[७] ॥ ८ ॥

छन्दसि विषये उपधाया ऋवर्णस्य स्थाने नित्यमृत् स्याच्चङ् परे णौ । अवीवृधत् ॥ छन्दोविषय में चङ् परक णि परे हो तो अङ्ग की उपधा ऋवर्ण को नित्य ऋकारादेश हो ॥ ८ ॥

## दयतेर्दिगि लिटि ॥ ९ ॥

दयतेः[६], दिगि[१], लिटि[७] । दयतेर्दिगि आदेशः स्याल्लिटि । दिग्ये । दिग्याते । दिग्यिरे ॥ लिट् लकार परे हो तो दयति ( देङ्-रक्षणे ) अङ्ग को दिगि आदेश हो ॥९॥

## ऋतश्च संयोगादेर्गुणः ॥ १० ॥

ऋतः[६], च(अ), सं० देः[६], गुणः[१] । संयोगादेर्ऋदन्तस्याङ्गस्य गुणः स्याल्लिटि । ह्वृ-जह्वरतुः । जह्वरुः । स्मृ—सस्मरतुः । सस्मरुः ॥ लिट् लकार परे हो तो संयोगादि ऋदन्त अङ्ग को गुणादेश हो ॥ १० ॥

## ऋच्छत्यृताम्[६] ॥ ११ ॥

तौदादिकऋच्छतेः, ऋधातोः, ऋतामङ्गानां च गुणः स्याल्लिटि । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । ऋ—आर । निचकरतुः ॥ लिट् लकार परे हो तो ऋच्छति ( ऋच्छ-गतीन्द्रिय प्रलयमूर्त्ति भावेषु ) ऋ और ऋदन्त अङ्गों को गुणादेश हो ॥ ११ ॥

## शॄदॄपां[६] ह्रस्वो[१] वा[अ] ॥ १२ ॥

एषां लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । विशश्रतुः, विशशरतुः । विशश्रुः, विशशरुः । विदद्रतुः, विददरतुः । विदद्रुः, विददरुः । पप्रतुः, पपरतुः । पप्रुः, पपरुः ॥ लिट् लकार परे हो तो शॄ दॄ और पॄ अङ्ग को विकल्प से ह्रस्वादेश हो ॥ १२ ॥

## केऽणः ॥ १३ ॥

के[७], अणः[६] । के प्रत्यये परेऽणो ह्रस्वः स्यात् । ज्ञका । कुमारिका ॥ क प्रत्यय परे हो तो अण् को ह्रस्वादेश हो ॥ १३ ॥

## न[अ] कपि[७] ॥ १४ ॥

कपिप्रत्यये परेऽणो ह्रस्वो न स्यात् । बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः ॥ कप् प्रत्यय परे हो तो अण् को ह्रस्वादेश न हो ॥ १४ ॥

## आपोऽन्यतरस्याम् ॥ १५ ॥

आपः[६], अ०म् (अ) । कपि परे आबन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः, बहुमालकः ॥ कप् प्रत्यय परे हो तो आबन्त अङ्ग को विकल्प से ह्रस्वादेश हो ॥१५॥

## ऋदृशोऽङि गुणः ॥ १६ ॥

ऋदृशः[६], अङि[७], गुणः[१] । अङि परे ऋवर्णान्तानां दृशेश्च गुणः स्यात् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । अदर्शत्, अदर्शताम्, अदर्शन् ॥ अङ् प्रत्यय परे हो तो ऋवर्णान्त और दृशिर् अङ्ग को गुणादेश हो ॥१६॥

## अस्यतेस्थुक् ॥ १७ ॥

अस्यतेः[६], थुक्[१] । अङि परेऽस्यतेस्थुगागमः स्यात् । आस्थत्, आस्थताम्, आस्थन्॥ अङ् प्रत्यय परे हो तो अस्यति ( असु क्षेपणे ) अङ्ग को थुक् का आगम हो ॥ १७ ॥

## श्वयतेरः ॥ १८ ॥

श्वयतेः[६], अः[१] । श्वयतेरिकारस्य अकारादेशः स्यादङि परे । अश्वत् । अश्वताम् । अश्वन् ॥ अङ् प्रत्यय परे हो तो श्वयति (टु-ओश्वि-गति वृद्ध्योः) अङ्ग को अकारादेश हो॥

## पतः[६] पुम्[१] ॥ १९ ॥

अङि परतः पुमागमः स्यात् । अपप्तत् । अपप्तताम् । अपप्तन् ॥ अङ् परे हो तो पत्लृ धातु को पुम् का आगम हो ॥ १९ ॥

## वच उम् ॥ २० ॥

वचः[६], उम्[१] । अङि परे वचेरुमागमः स्यात् । अवोचत् । अवोचताम् । अवोचन्॥ अङ् परे हो तो वच धातु को उम् का आगम हो ॥ २० ॥

## शीङः[६] सार्वधातुके[७] गुणः[१] ॥ २१ ॥

स्पष्टम् । शेते । शयाते । शेरते ॥ सार्वधातुक प्रत्यय परे हो तो शीङ् अङ्ग को गुणादेश हो ॥ २१ ॥

## अयङ्[१] यि[१] क्ङिति[७] ॥ २२ ॥

शीङोऽयङादेशः स्याद्यादौ क्ङिति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य ॥ यकारादि कित् ङित् प्रत्यय परे हो तो शीङ् धातु को अयङ् आदेश हो ॥२२॥

## उपसर्गाद्ध्रस्व ऊहतेः॥ २३ ॥

उ० द्रु[१], ह्रस्वः[१], ऊ० तेः[६] । यादौ क्ङिति परे उपसर्गादुत्तरस्योहतेर्ह्रस्वः स्यात् । समुह्यते । अग्निं समुह्य ॥ यकारादि कित् ङित् प्रत्यय परे हो तो उपसर्ग से परे ऊहति ( वह ) अङ्ग को ह्रस्वादेश हो ॥ २३ ॥

## एतेर्लिङि ॥ २४ ॥

एतेः[६], लिङि[७] । उपसर्गादुत्तरस्य इणोऽणो ह्रस्वः स्यादार्धधातुके यादौ किति लिङि । निरियात् । उदियात् ॥ यकारादि सार्वधातुक कित् लिङ् परे हो तो उपसर्ग से परे इण् धातु को ह्रस्व हो ॥ २४ ॥

## अकृत् सार्वधातुकयोर्दीर्घः ॥ २५ ॥

अ०योः[७], दीर्घः[१] । क्ङिति यादौ प्रत्ययेपरेऽजन्तस्याङ्गस्य दीर्घः स्यात्, नातु कृत्-सार्वधातुकयोः । भृशायते । सुखायते । दुःखायते । चीयते । चेचीयते । स्तूयते । तोष्टूयते । चीयात् । स्तूयात् ॥ कृत् और सार्वधातुक वर्जित यकारादि कित् ङित् प्रत्यय परे होतो अजन्त अङ्ग को दीर्घादेश हो ॥ २५ ॥

## च्वौ[७] च[अ] ॥ २६ ॥

च्वि प्रत्ययेपरेऽजन्तस्याङ्गस्य दीर्घः स्यात् । शुची करोति । शुची भवति । शुची

स्यात् । पटू करोति । पटूभवति । पटू स्यात् ॥ च्वि प्रत्यय परे हो तो अजन्त अङ्ग को दीर्घादेश हो ॥ २६ ॥

## रीङ्[1] ऋतः[6] ॥ २७ ॥

अकृत्सार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । मात्रीयते, मात्रीयति । पित्रीयते, पित्रीयति । मात्रीभूता । पित्रीभूतः ( यस्येति च ) पितुरागतम्—पित्र्यम् ॥ कृत् और सार्वधातुक वर्जित यकारादि तथा च्वि प्रत्यय परे होतो ऋदन्त अङ्ग को रीङ् आदेश हो ॥ २७ ॥

## रिङ्[1] शयग्लिङ्क्षु[7] ॥ २८ ॥

शे, यकि, यादावार्धधातुके लिङि च परे ऋदन्तस्याङ्गस्य रिङादेशः स्यात् । शे-आद्रियते । आध्रियते । यकि—क्रियते । ह्रियते । म्रियते । लिङि—क्रियात् । ह्रियात् । म्रियात् । श, यक् और यकारादि आर्धधातुक लिङ् परे होतो ऋदन्त अङ्ग को रिङ् आदेश हो ॥ २८ ॥

## गुणोऽर्त्तिसंयोगाद्योः ॥ २९ ॥

गुणः[1], अ०द्योः[6] । अर्त्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च परे । अर्यते । स्मर्यते । अर्यात् । स्मर्यात् ॥ यक् और यकारादि आर्धधातुक लिङ् परे होतो अर्त्ति ( ऋ ) और संयोगादि ऋदन्त अङ्ग को गुणादेश हो ॥ २९ ॥

## यङि[7] च[अ] ॥ ३० ॥

यङि च परे अर्त्तेः संयोगादेश्च ऋतो गुणः स्यात् । ( यकारपररेफस्य न द्वित्व-निषेधः ) अरार्यते । सास्मर्यते ॥ यङ् परे हो तो अर्त्ति और संयोगादि ऋदन्त अङ्ग को गुणादेश हो ॥ ३० ॥

## ई[1] घ्राध्मोः[6] ॥ ३१ ॥

यङि परे घ्राध्मोरीत् स्यात् । जेघ्रीयते । देध्मीयते ॥ यङ् प्रत्यय परे होतो घ्रा और ध्मा धातु को ईकारादेश हो ॥ ३१ ॥

## अस्य[1] च्वौ[7] ॥ ३२ ॥

अवर्णस्य ईत् स्यात् च्वौ परे । वेर्लोपः । च्व्यन्तत्वादव्ययत्वम् । अशुक्लःशुक्लः सम्पद्यते तं करोति–शुक्ली करोति । कृष्णी भवति । गङ्गी स्यात् ॥ च्वि प्रत्यय परे हो तो अवर्णान्त अङ्ग को ईकारादेश हो ॥ ३२ ॥

## क्यचि[7] च[अ] ॥ ३३ ॥

क्यचि च परे अवर्णस्य ईत् स्यात् । पुत्रमात्मन इच्छति पुत्रीयति । घटीयति । मालीयति । वस्त्रीयति ॥ क्यच् प्रत्यय परे होतो भी अवर्ण को ईकारादेश हो ॥ ३३ ॥

## अशनायोदन्यधनायाबुभुक्षापिपासागर्द्धेषु ॥ ३४ ॥

अ०याः[1], बु०षु[7] । क्यजन्ता इमे निपात्यन्ते बुभुक्षादिषु गम्यमानेषु । अशनायति । बुभुक्षमाणोऽन्नमिच्छतीत्यर्थः । उदकीयति । स्नानाद्यर्थमुदकमिच्छतीत्यर्थः । धनायति । सत्येव धने । भूयोऽपि धनमिच्छतीत्यर्थः । उदन्येति उदकशब्दस्य उदन्नादेशो निपात्यते ॥

बुभुक्षा ( भूख ) पिपासा और गर्द्ध ( अतिशय स्पृहा ) अर्थ में अशनाय, उदन्य और धनाय शब्द क्यजन्त निपातन किये हैं ॥ ३४ ॥

## न छन्दस्यपुत्रस्य ॥ ३५ ॥

न(अ), छ०सि॰, अ०स्य॰ । छन्दसि विषये पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न स्याताम् । मित्रयुः । क्याच्छन्दसीति उः॥ (अपुत्रादीनामिति वाच्यम्)॥ जनीयन्तोऽन्वग्रः जनमिच्छन्त इत्यर्थः ॥ छन्दो विषय में क्यच् प्रत्यय परे होतो पुत्रशब्द वर्जित अदन्त अङ्ग को ईत्व और दीर्घादेश न हो ॥ ३५ ॥

## दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३६ ॥

छन्दसीमे क्यचि निपात्यन्ते । भाषायां तु उप्रत्ययाभावः । दुष्टीयति । द्रविणीयति । वृषीयति । रिष्टीयति ॥ छन्दो विषय में क्यच् प्रत्यय के परे दुरस्युः, द्रविणस्युः वृषण्यति और रिषण्यति ये निपातित हैं ॥ ३६ ॥

## अश्वाघस्यात् ॥ ३७ ॥

अ० स्य॰, आत्॰ । क्यचि परे अश्व अघ एतयोरात् स्याच्छन्दसि । अश्वायन्तो मघवन् । मा त्वा वृका अघायवोविदन् ॥ क्यच् प्रत्यय परे होतो छन्दो विषय में अश्व और अघ शब्द को आकारादेश हो ॥ ३७ ॥

## देवसुम्नयोर्यजुषिकाठके ॥ ३८ ॥

दे०योः॰, य०षि॰, का०के॰ । अनयोः क्यचि आत् स्यात् यजुषि कठशाखायाम् । (कठानामिदं काठकम् । गोत्रचरणाद्वुञ् )। देवायन्तो यजमानाः सुम्नायन्तोहवामहे ॥ यजुर्वेदकी कठशाखामें क्यच् प्रत्यय परे होतो देव और सुम्न शब्दोंको आकारादेश हो॥

## कव्यध्वरपृतनस्यर्चिलोपः ॥ ३९ ॥

क०स्य॰ ऋचि॰, लोपः॰ । क्यचि परे एषामङ्गानां लोपः स्यादृचि । कव्यन्तः सुमनसः । अध्वर्यन्तः । पृतन्यन्तस्तिष्ठन्ति ॥ क्यच् प्रत्यय परे होतो ऋग्वेद में कवि अध्वर और पृतन अङ्ग के अन्त का लोप हो ॥ ३९ ॥

## द्यतिस्यतिमास्थामित्तिकिति ॥ ४० ॥

द्य०म्॰, इत्॰, ति॰, किति॰ । एषामिदन्तादेशः स्यात्तादौ किति । दितः । सितः । मा, माङ् । मेङ्—मितः । स्थितः ॥ तकारादि कित् प्रत्यय परे होतो द्यति, स्यति, मा और स्था अङ्ग के अन्त को इकारादेश हो ॥ ४० ॥

## शाच्छोरन्यतरस्याम् ॥ ४१ ॥

शाच्छोः॰, अ०म् (अ)। अनयोर्वेदन्तादेशः स्यात् तादौ किति । शितः, शातः । छितः, छातः । व्यवस्थितविभाषात्वाद् व्रतविषये श्यतेर्नित्यम्—संशितं व्रतम् । सम्यक् सम्पादितमित्यर्थः । संशितोविप्रः । व्रतविषयकयत्नवानित्यर्थः ॥ तकारादि कित् प्रत्यय परे होतो शा ( शो-तनूकरणे ) और छा ( छो-छेदने ) अङ्ग को विकल्प से इकारादेशहो ॥

## दधातेर्हिः ॥ ४२ ॥

द०तेः॰, हिः॰ । तादौ किति दधातेर्हिरादेशः स्यात् । अभिहितम् । निहितम् ।

हितः । हितवान् । हित्वा ॥ तकारादि कित् प्रत्यय परे हो तो दधाति धातु को हि आदेश हो ॥ ४२ ॥

## जहातेश्च क्त्वि ॥ ४३ ॥

ज०तेः[६], च(अ), क्त्वि[७] ॥ क्त्वाप्रत्यये परे जहातेर्हिरादेशः स्यात् । हित्वा राज्यं वनं गतः । ओ हाङ्स्तु हात्वा ॥ क्त्वा प्रत्यय परे होतो जहाति (ओ-हाक्) धातु को हि आदेश हो ॥ ४३ ॥

## विभाषा[१] छन्दसि[७] ॥ ४४ ॥

छन्दसि विषये जहातेर्वा हिरादेशः स्यात् क्त्वा प्रत्यये परे । हित्वा, हात्वा वा ॥ छन्दोविषय में क्त्वा प्रत्यय परे होतो जहाति अङ्गको विकल्प से हि आदेशहो ॥ ४४ ॥

## सुधितवसुधितनेमधितधिष्वधिषीय[१] च[अ] ॥ ४५ ॥

छन्दसि सु वसु नेम एतत् पूर्वस्य दधातेः क्तप्रत्यये परे इत्वं निपात्यते । सुधितम् । सुहितं लोके । वसुधितम् । वसुहितं लोके । नेमधिता । नेमहिता लोके । धिष्व । धित्स्व लोके । लोण्मध्यमैकवचने दधातेरित्वमिडागमो वा द्विर्वचनाभावश्च निपात्यते । धिषीय । धासीय लोके । आशीर्लिङि । इट् । इटोऽत् ॥ छन्दो विषय में सु वसु नेम पूर्वक क्त प्रत्यय के परे दधाति अङ्गको इत्व निपातन किया गया है ॥ ४५ ॥

## दोदद्घोः ॥ ४६ ॥

दः[६], दत्[१], घोः[६] । दा इत्यस्य घुसंज्ञकस्य ददादेशः स्यात्तादौ किति । खरि चेति चर्त्वम् । दत्तः । दत्तवान् । दत्तिः ॥ तकारादि कित् प्रत्यय परे होतो घुसंज्ञक दा अङ्ग को दत् आदेश हो ॥ ४६ ॥

## अच उपसर्गात्तः ॥ ४७ ॥

अचः[५], उ०त्[५], तः[१] । अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचः तः स्यात्तादौ किति । प्रत्तः, अवत्तः । अवदत्तं विदत्तं च प्रदत्तं चादि कर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ तकारादि कित् प्रत्यय परे होतो अजन्त उपसर्ग से परे घुसंज्ञक दा धातु को तकारादेश हो ॥ ४७ ॥

## अपो भि ॥ ४८ ॥

अपः[६], भि[७] । अपस्तकारादेशः स्याद् भादौ प्रत्यये परे । अद्भिः । अद्भ्यः ॥ भकारादि प्रत्यय परे हो तो अप् अङ्ग को तकारादेश हो ॥ ४८ ॥

## सः स्यार्धधातुके ॥ ४९ ॥

सः[६], सि[७], आ०के[७] । सस्य तकारादेशः स्याद् सादावार्धधातुके परे । घत्स्यति । जिघत्स्यति । वत्स्यति । विवत्सति ॥ सकारादि आर्धधातुक प्रत्यय परे हो तो सकारान्त अङ्ग को तकारादेश हो ॥४९॥

## तासस्त्योर्लोपः ॥५०॥

ता०स्त्योः[६], लोपः[१] । तासेरस्तेश्च सकारस्य लोपः स्यात्सादौ प्रत्यये परे । कर्त्तासि । कर्त्तासे । त्वमसि ॥ सकारादि प्रत्यय परे होतो तास् और अस्तिके सकारका लोपहो ॥

## रि॰ च॰ ॥ ५१ ॥

रादौ प्रत्यये परे तासस्त्योः सकारस्य लोपः स्यात्। कर्त्तारौ। कर्त्तारः। अध्येतारौ। अध्येतारः। भवितारौ। भवितारः॥ रादि प्रत्यय परे हो तो तास् और अस्ति (अस्) के सकार का लोप हो ॥५१॥

## ह एति ॥ ५२ ॥

हः[1], एति[7]। तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। कर्त्ताहे। व्यतिहे। कर्तरिकर्मव्यतिहारे इत्यात्मनेपदम्॥ एति (इट्) प्रत्यय परे हो तो तास् और अस्ति के सकार को हकारादेश हो ॥ ५२ ॥

## यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यी०योः[7], दी०व्योः[6]। दीधीवेव्योरन्तस्य लोपः स्याद्यकारे इवर्णे च परे। आदीध्य। आवेव्य। आदीधिता। आवेविता॥ यकारादि और इवर्णादि प्रत्यय परे हो तो दीधीङ् और वेवीङ् धातु के अन्त्य का लोप हो ॥५३॥

## सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

सनि[7], मी०म्[6], अचः[6], इस्[1]। एषामचः स्थाने इसादेशः स्यात् सादौ सनि परे। मित्सति। (७।४।४९) इति सकारस्य तकारः। (७।४।५८) इत्यत्र लोपोऽभ्यासस्य। मित्सते। दित्सति। धित्सति। आरिप्सते। लिप्सते। शिक्षति। पित्सति। प्रपित्सते॥ सकारादि सन् प्रत्यय परे हो तो मी (मीञ्, डुमिञ्) मा (मा, माङ्, मेङ्) घु (डु-दाञ्, डु-धाञ्) रभ, लभ, शक पत और पद धातुके अच्के स्थानमें इस् आदेशहो

## आप्ज्ञप्यृधामीत् ॥ ५५ ॥

आ०म्[6], ईत्[1]। एषामचः स्थाने ईदादेशः स्यात्सादौ सनि परे। ईप्सति। ज्ञीप्सति। ईर्त्सति। रपर ईकारः धकारस्य चर्त्वम्॥ सकारादि सन् प्रत्यय परे हो तो आप् (आप्लृ-व्याप्तौ) ज्ञपि (ज्ञा-अवबोधने) और ऋध अङ्ग के अच् के स्थान में ईकारादेश हो ॥५५॥.

## दम्भ इच्च ॥ ५६ ॥

दम्भः[6], इत्[1], च(अ)। दम्भेरचः स्थाने इत्स्यादीच्च सादौ सनि परे। धिप्सति। धीप्सति।। हलन्ताच्चेति सनः कित्वादुपधालोपः, भकारस्य चर्त्वम्॥ सकारादि सन् प्रत्यय परे हो तो दम्भु अङ्ग के अच् को इ तथा ईकारादेश हो ॥५६॥

## मुचोऽकर्मकस्य गुणो वा ॥५७॥

मुचः[6], अ०स्य[6], गुणः[1], वा(अ)। सादौ सनि परे मुचोऽकर्मकस्य गुणो वा स्यात मोक्षते, मुमुक्षते वा, वत्सः स्वयमेव॥ सकारादि सन् प्रत्यय परे होतो अकर्मक मुच् (मुच्लृ) अङ्ग को विकल्प से गुणादेश हो ॥ ५७ ॥

## अत्र लोपोऽभ्यासस्य ॥ ५८ ॥

अत्र(अ), लोपः[1], अ०स्य[6]। सनि-मीमेत्यारभ्य यदुक्तन्तत्राभ्यासस्य लोपः स्यात। तत्रैवोदाहृतम्॥ सनि (७।४।५४) इस सूत्र से लेकर यहाँ तक अभ्यास का लोप हो ॥

### ह्रस्वः[1] ॥ ५९ ॥

अभ्यासस्याचो ह्रस्वः स्यात् । डुढौकिषते । शश्रिचरीडुढौके ॥ अभ्यास के अच् को ह्रस्वादेश हो ॥५९॥

### हलादिः[1] शेषः[1] ॥ ६० ॥

अभ्यासस्यादिर्हल् शिष्यताम् , अन्ये हलो लुप्यन्ताम् । पपाच । पपाठ । आट, आटतुः, आटुः ॥ अभ्यास का आदि हल् शेष रहे और इतर हलों का लोप हो ॥६०॥

### शर्पूर्वाः[1] खयः[1] ॥ ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ताम् , अन्ये हलो लुप्यन्ताम् । पस्पर्धे । तिष्ठासति ॥ शर् प्रत्याहार है पूर्व जिसके ऐसा अभ्यास का खय् शेष रहे और इतर हलोंका लोपहो॥

### कुहोश्चुः ॥ ६२ ॥

कुहोः[6], चुः[1] । अभ्यासस्य कवर्गहकारयोश्चवर्गादेशः स्यात् । चकार । चखान । जगाम । जघान । हृस्य–जहार । जहौ । जिहीर्षति ॥ अभ्यास के कवर्ग और हकार को चवर्गादेश हो ॥६२॥

### न कवतेर्यङि ॥ ६३ ॥

न(अ), कवतेः[6], यङि[7] । कवतेरभ्यासस्य यङि परे चुत्वं न स्यात् । कोकूयते शिशुकमप्यति गौरवेण ॥ यङ् प्रत्यय परे हो तो कु धातु के अभ्यास को चवर्गादेश नहीं ॥

### कृषेश्छन्दसि ॥ ६४ ॥

कृषेः[6], छन्दसि[7] । यङि परेऽभ्यासस्य चुत्वं न स्याच्छन्दसि । करीकृष्यते ॥ छन्दो विषय में यङ् परे हो तो कृष धातु के अभ्यास को चवर्गादेश न हो ॥६४॥

### दाधर्त्तिदर्धर्त्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्याऽऽगनीगन्तीति च ॥ ६५ ॥

दा० न्ति[1], इति(अ), च(अ) । छन्दसीमेऽष्टादश निपात्यन्ते । आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ् लुगन्तस्य लोटि गुणाभावः । तिजेर्यङ् लुगन्तात्तङ् । इयतेर्लटि आदिः शेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । स्यन्देः सम्पूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् । धातुसकारस्य षत्वम् । करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते । बिभर्तेर्यङ्लुगन्तस्य । शतरि भृञामिदिति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमोनिपात्यते । दविध्वत इति, ध्वरतेः यङ्लुगन्तस्य शतरि जसि रूपमेतत् । तस्याभ्यासस्य वेगागम ऋकारलोपश्च निपात्यते । दविध्वतो रश्मयः सूर्यस्य । दविद्युतदिति द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावोऽत्वं विगागमश्च निपात्यते । तरित्रत इति तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते । सरीसृपतमिति सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्यरीगागमो निपात्यते । वरीवृजदिति वृजेः शतरि श्लौ

रीगागमो निपात्यतेऽभ्यासस्य। मर्मृजेति मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते। दमेगङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावोनीगागमश्च निपात्यते ॥ छन्दोविषय में दाधर्त्ति, दर्धर्ति, दर्धर्षि, बोभूतु, तेतिक्ते, अलर्षि, आपनीफणत्, संसनिष्यदत्, करिक्रत्, कनिक्रदत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य और आगनीगन्ति ये अठारह शब्द निपातन कियेगये हैं॥

## उरत् ॥ ६६ ॥

उः[६], अत्[१]। अभ्यासऋवर्णस्य अत् प्रत्यये परे। ववृते। ववृधे। नर्नर्त्ति, नरिनर्त्ति, नरीनर्त्ति ॥ प्रत्यय परे हो तो अभ्यास के ऋवर्ण को अकारादेश हो ॥६६॥

## द्युतिस्वाप्योः[६] सम्प्रसारणम्[१] ॥ ६७ ॥

अनयोरभ्यासस्य सम्प्रारणं स्यात्। दिद्युते। दिद्युताते। दिद्युतिरे। सुष्वाप। सुषुपतुः। सुषुपुः ॥ द्युति और स्वपि (ञिष्वप् शये) अङ्ग के अभ्यासको सम्प्रसारणहो॥

## व्यथोलिटि ॥ ६८ ॥

व्यथः[६], लिटि[७]। व्यथोऽभ्यासस्य सम्प्रसारणं स्याल्लिटि। विव्यथे। विव्यथाते। विव्यथिरे ॥ लिट् लकार परे हो तो व्यथ अङ्ग के अभ्यास को सम्प्रसारण हो ॥६८॥

## दीर्घ इणः किति ॥ ६९ ॥

दीर्घः[१], इणः[६], किति[७]। इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि परे। ईयतुः। ईयुः ॥ कित् लिट् प्रत्यय परे हो तो इण् अङ्ग के अभ्यास को दीर्घादेश हो ॥६९॥

## अत आदेः ॥ ७० ॥

अतः[६], आदेः[६]। अभ्यासस्यादेरतो दीर्घः स्याल्लिटि। अतोगुणे पररूपापवादः। आट, आटतुः, आटुः॥ लिट् लकार परे होतो अभ्यास के आदि अकार को दीर्घादेश हो॥

## तस्मान्नुड् द्विहलः ॥ ७१ ॥

तस्मात्[५], नुट्[१], द्विः०लः[६]। अकारादभ्यासाद्दीर्घीभूतात्परस्य द्विहलोऽङ्गस्य नुडागमः स्यात्। आनर्द, आनर्दतुः, आनर्दुः ॥ दीर्घ किये अभ्यास से परे द्विहल् अङ्ग को नुट् का आगम हो ॥ ७१ ॥

## अश्नोतेश्च ॥ ७२ ॥

अ० तेः[६], च(अ)। अश्नोतेश्च दीर्घादभ्यासादवर्णात्परस्य नुडागमः स्यात्। आनशे, आनशाते, आनशिरे ॥ दीर्घ किये अभ्यास से परे अश्नोति (अशू) अङ्ग को नुट् का आगम हो ॥ ७२ ॥

## भवतेरः ॥ ७३ ॥

भवतेः[६], अः[१]। भवतेरभ्यासोकारस्य अकारादेशः स्याल्लिटि। बभूव। बभूवतुः। बभूवुः ॥ लिट् लकार परे हो तो भू धातु के अभ्यास को अकारादेश हो ॥७३॥

## ससूवेति निगमे ॥ ७४ ॥

ससूव(क्रि), इति(अ), निगमे[७]। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते। ससूव स्थविरम्। सुषुवे इति भाषायाम् ॥ निगम विषय में लिट् लकार में

सृ धातु को परस्मैपद, वुक्, आगम और अभ्यास को अकारादेश करके ससूव यह निपातन किया है ॥ ७४ ॥

## निजां[६] त्रयाणां[६] गुणः[१] श्लौ[७] ॥७५॥

णिजिर्, विजिर्, विष्लृ एषां त्रयाणामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति, नेनिक्तः, नेनिजन्ति । वेवेक्ति, वेविक्तः, वेविजन्ति । वेवेष्टि, वेविष्टः, वेविषन्ति ॥ श्लु प्रत्यय परे हो तो निजादि तीन धातुओं के अभ्यास को गुणादेश हो ॥ ७५ ॥

## भृञामित् ॥ ७६ ॥

भृ० म्[६], इत्[१] । भृञ्, माङ्, ओ-हाङ्, एषां त्रयाणामभ्यासस्येकारादेशः स्यात् श्लौ । बिभर्त्ति, बिभृतः, बिभ्रति । मिमीते, मिमाते, मिमते । जिहीते, जिहाते, जिहते ॥ श्लु प्रत्यय परे हो तो भृञादि तीन धातुओं के अभ्यास को इकारादेश हो ॥७६ ॥

## अर्त्तिपिपर्त्योश्च ॥७७॥

अ० र्त्योः[६], च(अ) । एतयोरभ्यासस्य इकारोन्तादेशः स्याच्छ्लौ । 'अभ्यासस्यासवर्णे ) इतीयङ् । इयर्त्ति, इयृतः, इयूरति । पिपर्त्ति, पिपूर्त्तः, (७।१।१०२ इत्युत्वम् । रपरत्वम् ( ८।२।७७ ) इति दीर्घत्वम् ) पिपुरति ॥ श्लु प्रत्यय परे हो तो ऋ और पृ धातु के अभ्यास को इकारादेश हो ॥ ७७ ॥

## बहुलं[१] छन्दसि[७] ॥ ७८ ॥

श्लौ बहुलमभ्यासस्येकारादेशः स्याच्छन्दसि । पूर्णं विवष्टि । वशेरिदं रूपम् ॥ छन्दोविषय में श्लु परे हो तो अभ्यास को बाहुल्य से इकारादेश हो ॥ ७८ ॥

## सन्यतः ॥ ७९ ॥

सनि[७], अतः[६] । सनि परेऽभ्यासस्यात इकारादेशः स्यात् । पिपक्षति । ( ८।२।३६) इति षत्वम् । (८।२।१४) इति कुत्वम् ॥ यियक्षति । तिष्ठासति । पिपासति ॥ सन् प्रत्यय परे हो तो अभ्यास के अकार को इकारादेश हो ॥ ७९ ॥

## ओः[६] पुयण्ज्यपरे[७] ॥ ८० ॥

सनि परे यदङ्गं तदवयवाभ्यासोवर्णस्येत्वं स्यात् पवर्गयण् जकारेष्ववर्णपरेषु । पिपविषति । यियविषति । जिजावयिषति ॥ अवर्ण है परे जिससे ऐसे पवर्ग यण् और जकार परे हों तो सन् प्रत्यय के परे अभ्यास के उवर्ण को इकारादेश हो ॥ ८० ॥

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां[६] वा[अ] ॥ ८१ ॥

एषामभ्यासोकारस्येत्त्वं वा स्यात् सनि अवर्णपरे धात्वक्षरे परे । सिस्रावयिषति । सुस्रावयिषति । शिश्रावयिषति । शुश्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ॥ अवर्ण है परे जिससे ऐसा धातु अक्षर परे हो तो स्रवति, शृणोति, द्रवति, प्रवति, प्लवति और च्यवति धातु के अभ्यास उवर्ण को सन् प्रत्यय के परे विकल्प से इकारादेश हो ॥ ८१ ॥

## गुणो यङ्लुकोः ॥ ८२ ॥

गुणः¹, य० केः⁹। इगन्ताऽभ्यासस्य गुणः स्याद्यङि यङ्लुकि च परे। चेचीयते। बोभूयते। यङ्लुकि जोहवीति। चोक्रुशीति॥ यङ् और यङ्लुक् परे हो तो इगन्त अभ्यास को गुणादेश हो॥ ८२॥

## दीर्घोऽकितः॥ ८३॥

दीर्घः¹, अ०नः¹। अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च परे। पापठ्यते। यायज्यते। पापठीति। यायजीति॥ यङ् और यङ्लुक् परे हो तो अकित् अभ्यास को दीर्घादेश हो॥ ८३॥

## नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्॥ ८४॥

नीक्¹, व०म्⁶। एषामभ्यासस्य नीगागमः स्याद्यङि यङ्लुकि च परे। वनीवच्यते। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते।। यङ्लुकि—वनीवञ्चीति। सनीस्रंसीति। दनीध्वंसीति। बनीभ्रंसीति। चनीकसीति। पनीपतीति। पनीपदीति। चनीस्कन्दीति॥ यङ् और यङ्लुक् परे हों तो वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद और स्कन्द धातु के अभ्यास को नीक् का आगम हो॥ ८४॥

## नुगतोऽनुनासिकान्तस्य॥८५॥

नुक्¹, अतः⁶, अ० स्य⁶। अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्य नुगागमः स्याद्यङि यङ्लुकि च परे। तन्तन्यते। जङ्गम्यते। यंयम्यते। रंरम्यते। यङ्लुकि—तन्तनीति। जङ्गमीति। यंयमीति। रंरमीति॥ यङ् और यङ्लुक् परे हो तो अनुनासिकान्त अङ्ग के अभ्यास को नुक् का आगम हो॥८५॥

## जपजभदहदशभञ्जपशां⁶ च॥ ॥८६॥

एषामभ्यासस्य नुगागमः स्याद्यङि यङ्लुकि च परे। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। बम्भज्यते। पम्पश्यते। यङ्लुकि—जञ्जपीति। जञ्जभीति। दन्दहीति। दन्दशीति। बम्भजीति। पम्पशीति॥ यङ् और यङ्लुक् परे हो तो जप, जभ, दह, दश, भञ्जु और पश (सौत्र धातु) धातु के अभ्यास को नुक् का आगम हो॥८६॥

## चरफलोश्च॥ ८७॥

च०लोः⁶, च(अ)। अनयोरभ्यासस्य नुगागमः स्याद्यङि यङ्लुकि च परे। चञ्चूर्यते (हलिचेति दीर्घः)। पम्फुल्यते। चञ्चुरीति। पम्फुलीति। आगामि सूत्रेणोत्वम्॥ यङ् और यङ्लुक् परे होतो चर और फल धातुके अभ्यासको नुक् का आगम हो॥८७॥

## उत्परस्यातः॥ ८८॥

उ०स्य⁶, अतः⁶। चरफलोरभ्यासात् परस्यात उद्यङि यङ्लुकि च परे। चञ्चूर्यते। पम्फुल्यते। चञ्चुरीति। पम्फुलीति॥ यङ् और यङ्लुक् परे हो तो चर और फल धातुके अभ्यास से परे अकार को उकारादेश हो॥८८॥

## ति च॥ ॥ ८९॥

चरफलोरत उत्स्यात्तादौ किति। चरतं चूर्तिः। प्रफुल्लिः॥ तकारादि कित् प्रत्यय परे होतो भी चर और फल धातुके अकार को उकारादेश हो॥८९॥

## रीगृदुपधस्य च ॥ ९० ॥

रीक्[1], ऋ०स्य[1], च(अ)। ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङि यङ्लुकि च परे। वरीवृत्यते। वरीवृध्यते। नरीनृत्यते। यङ्लुकि—वरीवृतीति। वरीवृधीति। नरीनृतीति। (रीगृत्वत इति वाच्यम्)॥ वरीवृश्च्यते। परीपृच्छ्यते। वरीवृश्चीति। परिपृच्छीति॥ यङ् और यङ्लुक् परे होतो ऋकारोपध धातु के अभ्यास को रीक् का आगम हो॥ ९१॥

## [1]रुग्रिकौ च[अ] लुकि[७] ॥ ९१ ॥

ऋदुपधस्य धातोरभ्यासस्य—रुक्, रिक्, रीक्, इमे आगमाः स्युर्यङ्लुकि परे नर्नर्ति, नरिनर्त्ति, नरीनर्ति। वर्वर्त्ति, वरिवर्ति, वरीवर्त्ति॥ यङ्लुक् परे हो तो ऋदुपध धातु के अभ्यास को रुक्, रिक्, और रीक् का आगम हो॥९१॥

## ऋतश्च ॥ ९२ ॥

ऋतः[१],च(अ)। ऋदन्तधातोरपि रुक्, रिक्, रीक् एते आगमा स्युर्यङ्लुकि परे। चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति, जरिहर्ति, जरीहर्ति॥ यङ्लुक्परे होतो ऋदन्त धातुको भी रुक्, रिक् और रीक्का आगम हो॥९२॥

## सन्वल्लघुनिचङ्परेऽनग्लोपे ॥ ९३ ॥

स०त् (अ), ल०नि[७], च०रे[७], अ०पे[७]। लघुनि धात्वक्षरे परे योऽङ्गस्याभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्य्यं स्यादनग्लोपे सति। अचीकरत्। अपीपचत्। अपीपवत्। अलीलवत्॥ धातुका लघुअक्षर जिससे परे हो ऐसा जो अङ्गका अभ्यास उस को जिस चङ्के परे अक् प्रत्याहारमें किसी वर्णका लोप न हुआ हो ऐसा णि परेहोतो सन्वत् कार्य हो अर्थात् सन् प्रत्यय को जो कार्य होता है वह अभ्यास को भी होजावे॥

## दीर्घो लघोः ॥ ९४ ॥

दीर्घः[१], लघोः[१]। लघोरभ्यासस्य दीर्घः स्यात् सन्वद् भावविषये। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्॥ अनग्लोपी चङ्परक णि परे होतो धातु के लघु अभ्यासको दीर्घ आदेश हो॥९४॥

## [१]अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्[६] ॥ ९५ ॥

एषामभ्यासस्याऽकारोऽन्तादेशः स्याच्चङ्परे णौ। असस्मरत्। अददरत्। अतत्वरत्। अपप्रथत्। अमम्रदत्। अतस्तरत्। अपस्पशत्॥ चङ् परक णि परे होतो स्मृ, दृ, त्वर, प्रथ, म्रद, स्तॄ और स्पश धातुके अभ्यास को अकारादेश हो॥९५॥

## विभाषा[१] वेष्टिचेष्टयोः[६] ॥ ९६ ॥

अनयोर्वाभ्यासस्याऽत्वं स्याच्चङ्परे णौ। अववेष्टत्। अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्॥ चङ् परक णि परे होतो वेष्टि और चेष्टि धातुके अभ्यास को विकल्प से अकारादेश हो॥९६॥

## ई[१] च[अ] गणः[६] ॥ ९७ ॥

गणेरभ्यासस्येत् स्याच्चङ्परे णौ चाद्। अजीगणत्, अजगणत्॥ चङ् परक

णि परे होतो गण धातुके अभ्यास को इकार तथा अकारादेश भी हो ॥ ८८ ॥

इति जीवारामोपाध्यायकृतायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य चतुर्थः पादः समाप्तोऽयमध्यायः ॥

---

# अथ अष्टमाध्यायस्य प्रथमः पादः ।

## सर्वस्य[६] द्वे[१] ॥ १ ॥

अधिकारोऽयम् पदस्येति यावत् ॥ सबको द्वित्व हो यह अधिकार (८।१।१६) से पूर्व २ जानना चाहिये ॥१॥

## तस्य परमाम्रेडितम् ॥ २ ॥

तस्य[६], परम्[१], आ०म्[१] । द्विरुक्तस्य परं रूपमाम्रेडित संज्ञं स्यात् । चौर चौर ॥ [८।२९५] द्वित्व किये हुये शब्दका पर भाग आम्रेडित संज्ञक हो ॥२॥

## अनुदात्तं[१] च[अ] ॥ ३ ॥

द्विरुक्तस्य परं रूपमनुदात्तसंज्ञं स्यात् । दिवेदिवे ॥ द्वित्व किये हुये शब्दका परभाग अनुदात्त संज्ञक हो ॥ ३ ॥

## नित्यवीप्सयोः ॥ ४ ॥

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्यय-संज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा व्रजति । वीप्सायाम् । वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः ॥ नित्य और वीप्सा द्योत्य होतो पद को द्वित्व हो ॥

## परेर्वर्जने ॥ ५ ॥

परेः[६], व०ने[७] । वर्जनेऽर्थे परेः द्वे स्याताम् । परि परि वङ्गेभ्यो वृष्टो देवः । वङ्गान् परिहृत्येत्यर्थः ॥ (परेर्वर्जने वा वचनम् ) ॥ परि—वङ्गेभ्यः ॥ वर्जन अर्थ में परिउपसर्ग को द्वित्व हो ॥ ५ ॥

## प्रसमुपोदः[६] पादपूरणे[७] ॥ ६ ॥

एषां पादपूरणे द्वे स्याताम् । प्रप्रायमग्निः । संसमिद्युवसे । उपोपमे परामृष । किंनोदुदुहर्षसे ॥ पादपूरण अर्थमें प्र सम् उप और उद् उपसर्गों को द्वित्व हो ॥६॥

## उपर्यध्यधसः[६] सामीप्ये[७] ॥७॥

एषां सामीप्ये विवक्षिते द्वे स्याताम् । उपर्युपरि-ग्रामम् । ग्रामस्योपरिष्टात् समीपे देशे इत्यर्थः । अध्यधि-सुखम् । सुखस्योपरिष्टात् समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात् समीपे देशे इत्यर्थः ॥ समीपता की विवक्षा में उपरि अधि और अधस् शब्द को द्वित्व हो ॥७॥

## वाक्यादेरामन्त्रितस्याऽसूयासम्मति कोपकुत्सनभर्त्सनेषु॥८॥

वा०देः[६], आ०स्य[६], अ०षु[७], । असूयादिष्वर्थेषु वाक्यादेरामन्त्रितस्य द्वे स्याताम् ।

...सुन्दर ! सुन्दर ! वृथा ते सौन्दर्यम् । सम्मतौ—देव ! देव ! । वन्द्योऽसि । कोपे दुर्विनीत ! दुर्विनीत ! । इदानीं ज्ञास्यसि । कुत्सने—धानुष्क ! धानुष्क ! वृथा ते धनुः । भर्त्सने—चौर ! चौर ! घातयिष्यामि त्वाम् ॥ असूया (दूसरे के गुणोंको न सह सकना) सम्मति (पूजा) कोप (क्रोध) कुत्सन (निन्दन) और भर्त्सन (धमकाना) अर्थमें वाक्यके आदि आमन्त्रित को द्वित्व हो ॥८॥

## एकं[1] बहुव्रीहिवत्[अ] ॥ ९ ॥

द्विरुक्त एक शब्दो बहुव्रीहिवत् स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकम्—अक्षरम् पठति । एकैकयाहुत्या जुहोति ॥ द्वित्व किया हुआ एक शब्द बहुव्रीहिवत् हो ॥ ९॥

## आबाधे[७] च[अ] ॥ १० ॥

पीडायां द्योत्यायां द्वे स्याताम् बहुव्रीहिवच्च कार्यं स्यात् । गतगतः । विरहात् पीड्यमानस्येयमुक्तिः । बहुव्रीहिवद्भावात् सुब्लुक् । गतगता । इह पुंवद्भावः ॥ आबाधा ( पीडा ) द्योत्य हो तो वर्त्तमान शब्द को द्वित्व और बहुव्रीहिवत् कार्य्य हो ॥१०॥

## कर्मधारयवदुत्तरेषु ॥११॥

क०त् (अ), उ०षु० । इत उत्तरेषु द्विर्वचनेषु कर्म्मधारयवत् कार्यं स्यात् । प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ॥ इसके आगे कथन में कर्मधारय के तुल्य कार्य हो ॥

## प्रकारे[७] गुणवचनस्य[६] ॥१२॥

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्याताम्, तच्च कर्मधारयवत् । पटुपट्वी, पटुपटुः । पटु सदृशः ईषत् पटुरिति यावत् । गुणोपसर्जनद्रव्यवाचिनः, केवलगुणवाचिनश्च, इह गृह्यन्ते शुक्लशुक्लम्—रूपम् । शुक्लशुक्लः पटः । ( आनुपूर्व्ये द्वे वाच्ये ) ॥ मूले मूले स्थूला ॥ ( सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धिः ) ॥ सर्प सर्प बुध्यस्व, बुध्यस्व । सर्प सर्प सर्प बुध्यस्व बुध्यस्व-बुध्यस्व ॥ ( क्रियासमभिहारे च ) ॥ लुनीहि लुनीहीत्येवायं लुनाति ॥ (कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् ) ॥ बहुलग्रहणादन्यपरयोर्न समासवत् । इतर शब्दस्य तु नित्यम् ॥ (असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः)॥ अन्योऽन्यं विप्रा नमन्ति, अन्योन्यौ, अन्योन्यान्, अन्योन्येन कृतम्, अन्योऽन्यस्मै दत्तमित्यादि । अन्योऽन्येषां पुष्करैरामृशन्त इति माघः । एवं परस्परम्—अत्र कस्कादित्वाद् विसर्गस्य सत्वम् । इतरेतरम्, इतरेतरेणेत्यादि ॥ (स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः ) ॥ अन्योन्याम्, अन्योऽन्यम् । परस्पराम्, परस्परम् । इतरे इतरां इतरेतरं वा,—इमे ब्राह्मण्यौ, कुले वा, भोजयतः॥ सादृश्य द्योत्य हो तो गुणवचन शब्द को द्वित्व हो और वह कर्म धारयवत् समझा जावे॥

## अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥

अ०च्छ्रे[७], प्रि०योः[६], अ०म्(अ) । अकृच्छ्रे द्योत्येऽनयोर्वा द्वे स्याताम् । प्रियप्रियेण—ददाति, प्रियेण वा । सुखसुखेन-ददाति, सुखेन वा । अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः ॥ अकृच्छ्र ( सुख ) अर्थ में प्रिय और सुख शब्द को विकल्प से द्वित्व हो ॥

## यथास्वे[७] यथायथम्[१] ॥ १४ ॥

यथास्वमिति वीप्सायामव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्-यथास्वम् ।

तस्मिन् यथा शब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभावमित्यर्थः, यथात्मीयमिति वा ॥ यथास्व अर्थ में यथायथ शब्द निपातित है ॥१४॥

## [1]द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाऽभिव्यक्तिषु[7]

द्विशब्दस्य द्विर्वचनम्, पूर्वपदस्याऽम्भावः, अत्वं च उत्तरपदस्य नपुंसकत्वं च निपात्यते रहस्यादिष्वर्थेषु । तत्र. रहस्यम् द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः । द्वन्द्वम्-मन्त्रयते । द्वौ द्वौ भूत्वा रहस्यमित्यर्थः । मर्यादा—स्थित्यनतिक्रमः ॥ आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति । मिथुनीयन्तीति मिथुन शब्देन तत्कर्म मैथुनम्, तदिच्छतीत्यर्थे क्यच् । मिथुनायन्ते इति क्यङन्तोऽपपाठः । उपमानार्थाभावात् । माता पुत्रेण मिथुनं गच्छति । पौत्रेण, प्रपौत्रेणापीत्यर्थः । व्युत्क्रमणम्—पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः । द्वौ पक्षौ भूत्वा पृथगवस्थिता इत्यर्थः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति धीरः । द्वे द्वे इत्यर्थः । अभिव्यक्तौ—द्वन्द्वं संकर्षण वासुदेवौ । द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः । अन्यत्रापि । द्वन्द्वं युद्धमित्यादि ॥ रहस्य मर्यादावचन, व्युत्क्रमण, यज्ञपात्र प्रयोग और अभिव्यक्ति अर्थ में द्विशब्द को द्वित्व करके द्वन्द्व शब्द निपातन किया है ॥

## पदस्य[6] ॥१६॥ पदात्[5] ॥१७॥ अनुदात्तं सर्वमपादादौ ॥१८॥

अ०म्[1], स०म्[1], अ०दौ[7] । एतत् सूत्रत्रयमधिकृतं वेद्यमापादपरिसमाप्तेः ॥ पदको कार्य हो । १६ । पदसे परे कार्य हो । १७ । पद से परे अपादादि में वर्त्तमान सर्वपद अनुदात्त हो, पाद की समाप्ति पर्यन्त तीनों सूत्रों का अधिकार है ॥१८॥

## आमन्त्रितस्य[6] च[अ] ॥ १९ ॥

पदात् परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । षाष्ठस्यापवादोऽयं योगः । पठसि सोमदत्त ! ॥ पद से परे अपादादि में वर्त्तमान आमन्त्रित पदको सर्व अनुदात्त हो ॥१९॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ २० ॥

यु०दोः[6], ष०योः[6], वा०वौ[1] । पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वांनावित्यादेशौ स्याताम्, तौ चानुदात्तौ । ग्रामो वां स्वम् । जनपदो नौ स्वम् । ग्रामो वां दीयते । जनपदो नौ दीयते । ग्रामो वां पश्यति । जनपदो नौ पश्यति ॥ पदसे परे अपादादि में वर्त्तमान षष्ठी चतुर्थी तथा द्वितीयास्थ युष्मद् अस्मद् शब्दों को सर्वानुदात्त वाम् और नौ आदेश हों ॥२०॥

## बहुवचनस्य[6] वस्नसौ[1] ॥ २१ ॥

बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस्नसावादेशौ स्याताम् । ग्रामो वः स्वम् । जनपदोनः स्वम् । ग्रामो वो दीयते । जनपदो नो दीयते । ग्रामो वः पश्यति । जनपदो नः पश्यति ॥ पद से परे अपादादि में वर्त्तमान षष्ठीचतुर्थी और द्वितीयास्थ युष्मद् अस्मद् बहुवचन पदोंको सर्वानुदात्त वस् तथा नस् आदेश हों

## ते मयावेकवचनस्य ॥ २२ ॥

ते०यौ[1], ए०स्य[6] । युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते मे इत्यादेशौ स्याताम् । ग्रामस्ते स्वम् । ग्रामो मे स्वम् । ग्रामस्ते दीयते । ग्रामो मे दीयते ॥

पद से परे अपादादि में वर्त्तमान षष्ठी और चतुर्थीस्थ एकवचन युष्मद् और अस्मद् शब्द को सर्वानुदात्त ते तथा मे आदेश हों ॥२२॥

## त्वामौ[1] द्वितीयायाः[6] ॥ २३ ॥

युष्मदस्मदोर्द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्याताम् । ग्रामस्त्वा* पश्यति । ग्रामो मा पश्यति ॥ पद से परे अपदादि में वर्त्तमान द्वितीयैकवचनान्त युष्मद् तथा अस्मद् पदों को सर्वानुदात्त त्वा और मा आदेश हों ॥२३॥

## न[अ] चवाहाहैवयुक्ते[7] ॥ २४ ॥

चादिपञ्चकयोगेनैते आदेशाः स्युः । ईशस्त्वाम् , माम् , च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि ॥ च, वा, ह, अह और एव के योग में वाम् नौ आदि आदेश न हों ॥

## पश्यार्थैश्चानालोचने ॥ २५ ॥

प०र्थैः[3] च(अ), अ०ने[7] । अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः । चेतसा त्वां समीक्षते ॥ अचाक्षुष ज्ञानार्थ धातुओं के योग में उक्त आदेश न हों ॥२५॥

## सपूर्वायाः[5] प्रथमायाः[5] विभाषा[अ] ॥ २६ ॥

विद्यमानपूर्वात् प्रथमान्तात् परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । भक्तस्त्व-मप्यहं तेन विभुस्त्वाम् , त्रायते स माम् , त्वा मेति वा ॥ जिसके पूर्वपद हो ऐसे प्रथमान्त पद से परे उक्तादेश विकल्प से हों ॥२६॥

## तिङो गोत्रादीनिकुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङः[5], गो०नि[1], कु०योः[7] । तिङन्तात् पदाद् गोत्रादीनि अनुदात्तानि स्युः कुत्सने आभीक्ष्ण्ये चार्थे । पचति गोत्रम् । पचति पचति गोत्रम् ॥ तिङन्त पद से परे कुत्सन और आभीक्ष्ण्य अर्थ में वर्त्तमान गोत्रादि पद अनुदात्त हों ॥२७॥

## तिङ्ङतिङः ॥ २८ ॥

तिङ्[1], अ०ङः[5] । अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमीडे ॥ अतिङन्त पदसे परे तिङन्तपद अनुदात्त हो ॥२८॥

## न[अ] लुट्[1] ॥ २९ ॥

लुडन्तं तिङन्तं नानुदात्तं स्यात् । श्वः कर्त्ता ॥ लुडन्त तिङन्त अनुदात्त न हो॥२९॥

## निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥

नि०तैः[3], य०म्[1] । एतैर्निपातैर्युक्तं न निहन्यते । यत् करोति । यदि करोति–इत्यादि॥ यत् , यदि , हन्त, कुवित, नेत् , चेत् , चण् , कच्चित् और यत्र निपातों से युक्त तिङ-न्त पद अनुदात्त न हो ॥ ३० ॥

## नह[1] प्रत्यारम्भे[7] ॥ ३१ ॥

नहेत्यनेन युक्तं तिङन्तं नानुदात्तं स्यात् । प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः । नह भोक्ष्यसे ॥ प्रत्यारम्भ अर्थमें नह से युक्त तिङन्त अनुदात्त न हो ॥ ३१ ॥

---

* ईशस्त्वावतु, मापीह, दत्तात्ते, मेऽपि शर्म सः । स्वामी ते, मेऽपि स हरिः, पातु वामपि, नौ विभुः ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ जनः । सोऽव्याद्वो नःशिवं वो नो दद्यात् सेव्योऽत्र वः सनः ॥२॥

## सत्यं[1] प्रश्ने[7] ॥ ३२ ॥

प्रश्ने सत्ययुक्तं तिङन्तं नानुदात्तं स्यात्। सत्यं मोदयते ॥ प्रश्न में सत्य से युक्त तिङन्त अनुदात्त न हो ॥३२॥

## अङ्गाऽप्रातिलोम्ये ॥ ३३ ॥

अङ्ग[1], अ०म्ये[7]। प्रातिलोम्ये गम्ये अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तं स्यात्। अप्रातिलोम्यम्। अप्रतिकूलत्वम्। अङ्ग! कुरु। अङ्ग! पठ॥ अप्रातिलोम्य गम्यमान हो तो अङ्ग पदसे युक्त तिङन्त अनुदात्त न हो ॥३३॥

## हि[1] च[अ] ॥ ३४ ॥

हियुक्तं तिङन्तं नानुदात्तं स्यात्। सहि कुरु। सहि पठ॥ अप्रातिलोम्य अर्थ में हि से युक्त तिङन्त अनुदात्त न हो॥ ३४ ॥

## छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥

छ०सि[7], अ०म्[1], अपि(अ), सा०म्[1]। छन्दसि विषये हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तं स्यात्। अनृतं हि मत्तो वदति। पाप्माचैनं पुनाति॥ छन्दोविषय में हि शब्द से युक्त साकांक्ष अनेक भी तिङन्त पद अनुदात्त न हो ॥३५॥

## यावद्यथाभ्याम्[3] ॥ ३६ ॥

आभ्यां योगे तिङन्तं नानुदात्तं स्यात्। यावद् भुङ्क्ते। यथा भुङ्क्ते॥ यावत् और यथा से युक्त तिङन्त अनुदात्त न हो ॥३६॥

## पूजायां नानन्तरम् ॥ ३७ ॥

पू०म्[7], न(अ), अ०म्[1]। यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नानुदात्तं स्यात्। यावत् पचति शोभनम्। यथा पचति शोभनम्॥ पूजा विषय में यावत् और यथा पदोंसे युक्त अनन्तर (व्यवधानरहित) तिङन्तपद अनुदात्त न हो ॥ ३७ ॥

## [1]उपसर्गव्यपेतं च[अ] ॥ ३८ ॥

यावद्यथाभ्यां उपसर्गव्यपेतं च पूजायां विषये नानुदात्तं स्यात्। यावत्प्रपचति शोभनम्। यथाप्रपचति शोभनम्॥ पूजाविषयमें यावत् और यथा पदोंसे युक्त उपसर्गों से व्यवहित तिङन्त पद अनुदात्त न हो ॥३८॥

## तुपश्यपश्यताहैः[3] पूजायाम्[7] ॥ ३९ ॥

एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम्। माणवकस्तु भुङ्क्ते शोभनम्। पश्य माणवको भुङ्क्ते शोभनम्। पश्यत माणवको भुङ्क्ते शोभनम्। अह माणवको भुङ्क्ते शोभनम्॥ पूजाविषयमें तु पश्य पश्यत और अह पदसे युक्त तिङन्त पद अनुदात्त न हो॥

## [अ]अहो च[अ] ॥ ४० ॥

पूजायामहो इत्यनेन युक्तं तिङन्तं नानुदात्तं स्यात। अहो देवदत्तः पचति शोभनम्॥ पूजा अर्थमें अहो से युक्त तिङन्त अनुदात्त न हो ॥४०॥

## [7]शेषे विभाषा[अ] ॥ ४१ ॥

अहो इत्यनेन युक्तं तिङन्तं वानुदात्तं स्यात् । अहोकटं करिष्यति ममगेहमेष्यसि॥ पूजासे भिन्न अर्थमें अहो इस पदसे युक्त तिङन्त पद विकल्पसे अनुदात्त न हो ॥ ४१॥

## पुरा[प्र] च[प्र] परीप्सायाम्[७] ॥ ४२ ॥

पुरेत्यनेन युक्तं तिङन्तं त्वरायां वानुदात्तं स्यात्। अधीष्व माणवक पुरा विद्योततेविद्युत् ॥ परीप्सा अर्थ में पुरापद से युक्त तिङन्तपद विकल्प से अनुदात्त हो॥४२॥

## नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥

अनुज्ञैषणायां ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं स्यात् । ननु गच्छामि भोः । अनुजानीहि मां गच्छन्तमित्यर्थः ॥ स्वीकृत की प्रार्थना विषय में ननु से युक्त तिङन्त पद अनुदात्त न हो ॥४३॥

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥

किम्[१], क्रिं०ने[७], अ०म्[१], अ०म[१] । क्रियाप्रश्ने वर्त्तमानेन किं शब्देन युक्तं तिङन्तं नानुदात्तं स्यात् । किं देवदत्तः पचति आहो स्विद्भुङ्क्ते ॥ क्रिया प्रश्न अर्थमें वर्त्तमान किं शब्दसे युक्त उपसर्ग और नञ् से रहित तिङन्त पद अनुदात्त न हो ॥ ४४॥

## [७]लोपे विभाषा[प्र] ॥ ४५ ॥

किमोलोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं वानुदात्तं स्यात् । देवदत्तः पचति आहोस्वित्पठति ॥ क्रियाप्रश्नमें वर्त्तमान किं का लोप न होने पर अ प्रतिसिद्ध अनुपसर्ग तिङन्तपद विकल्पसे अनुदात्त हो ॥४५॥

## एहिमन्ये[क्रि०] प्रहासे[७] लृट्[१] ॥ ४६ ॥

प्रहासे गम्ये एहिमन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं स्यात् । एहि मन्ये मोदकान् भोक्ष्यसे भुक्तास्ते तु बालकैः ॥ प्रहास गम्यमान हो तो एहिमन्ये शब्द से युक्त लृडन्त तिङन्त पद अनुदात्त न हो ॥ ४६ ॥

## जात्वपूर्वम् ॥ ४७ ॥

जातु(अ), अ०म्[१] । अविद्यमानपूर्वं यज्जातु—तेन युक्तं तिङन्तं नानुदात्तं स्यात् । जातु भोक्ष्यसे ॥ जिसके पूर्व कोई न हो ऐसा तिङन्त पद अनुदात्त न हो ॥ ४७ ॥

## किंवृत्तं[१] च[प्र] चिदुत्तरम्[१] ॥ ४८ ॥

अविद्यमानपूर्वं चिदुत्तरं यत् किं वृत्तम्—तेन युक्तं तिङन्तं नानुदात्तं स्यात् । विभक्त्यन्तं डतर डतमान्तं किमो रूपं किंवृत्तम् । कश्चिद् भुङ्क्ते—कतरश्चित्, कतमश्चिद् वा ॥ जिसके पूर्व कोई न हो ऐसे चिदुत्तर किं शब्दके प्रयोगसे युक्त तिङन्तपद अनुदात्त न हो ॥४८॥

## आहो उताहो चानन्तरम् ॥ ४९ ॥

आहो(अ), उताहो(अ), च(अ), अ०म्[१] । आहो, उताहो—इत्याभ्यांयुक्तं तिङन्तं नानुदात्तं स्यात् । आहो भुङ्क्ते । उताहो पठति ॥ आहो, (क्या) उताहो (या) शब्दों से युक्त अनन्तर तिङन्तपद अनुदात्त न हो ॥४९॥

## [७]शेषे विभाषा[प्र] ॥ ५० ॥

आहो, उताहो इत्याभ्यां युक्तं व्यवहितं तिङन्तं वानुदात्तं स्यात्। आहो देवदत्तः पठति २। उताहो देवदत्तः पचति २॥ आहो और उताहोके व्यवधान में युक्त तिङन्त पद विकल्पसे अनुदात्त हो ॥५०॥

## गत्यर्थलोटालृण्णनचेत्कारकंसर्वान्यत् ॥ ५१ ॥

ग० टा[१], लट्[१], न० म्[१], ल० त्[१]। गतिना समानार्था गत्यर्थाः गत्यर्थानां धातूनां लोट् गत्यर्थलोट्। गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तम्—यत्रैव—कारके लोट्—तत्रैव लृडपि चेत्। आगच्छ देव ग्रामं द्रक्ष्यसि। उह्यन्तां देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्ते॥ यदि लृट् लोट्के सब कारक अन्य २ न हों तो गत्यर्थ लोट्से युक्त तिङन्त पद अनुदात्त न हो ॥५२॥

## लोट्[१] च[अ] ॥ ५२ ॥

लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं स्यात्। आव्रज विष्णुमित्र! ग्रामं शाधि॥ यदि दोनों लोट् के कारक सब अन्य अन्य न होतो गत्यर्थ लोट्से युक्ततिङन्त पद अनुदात्त न हो ॥५२॥

## विभाषितं सोपसर्गमनुत्तमम् ॥५३॥

वि०म्[१], सो०म्[१], अ०म्[१]। लोडन्तं सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं वानुदात्तं स्यात्। आगच्छ देव! ग्रामं प्रविश॥ यदि सर्व कारक अन्य न होतो गत्यर्थ धातुसे युक्त उत्तम वर्जित लोडन्त सोपसर्ग पद तिङन्त विकल्पसे अनुदात्त हो ॥५३॥

## हन्त[अ] च[अ] ॥ ५४ ॥

हन्तेत्यनेन युक्तं लोडन्तं सोपसर्गमुत्तमवर्जितं वानुदात्तं स्यात्। हन्त प्रशाधि २। हन्त प्रविश २॥ हन्त पद से युक्त उत्तम पुरुष वर्जित सोपसर्ग लोडन्त तिङन्त पद विकल्प से अनुदात्त हो ॥५४॥

## आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥

आमः[५], ए०म्[१], आ०म्[१], अ०के[७]। आमः परमेकपदान्तरितमा मन्त्रितं नानुदात्तं स्यात्। आम् पचसि देवदत्त ३॥ आम् से परे हो और एक पद का जिस में अन्तर हो ऐसा आमन्त्रितपद अनुदात्त न हो ॥ ५५ ॥

## [१]यद्धितुपरं छन्दसि[७] ॥ ५६ ॥

यत्परं हि परं तुपरंच तिङन्तं छन्दसि नानुदात्तं स्यात्। उदसृजो यदङ्गिरः। इन्द्रवो वामुशन्ति हि। आख्यास्यामि तु ते॥ छन्दोविषय में यत् हि और तु जिससे परे हो ऐसा तिङन्तपद अनुदात्त न हो ॥ ५६ ॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥

च० षु[७], अ० तेः[५]। एषु षट्सु परेषु अगतेरुत्तरं तिङन्तं नानुदात्तं स्यात्। देवः पचति चन। देवः पचति चित्। देवः पचतीव। देवः पचति गोत्रम्। देवः पचति कल्पम्। देवः पचति पचति॥ चन, चित्, इव, गोत्रादि, तद्धित और आम्रेडित परे हों तो गति भिन्न से परे तिङन्त पद अनुदात्त न हो ॥ ५७ ॥

## चादिषु[७] च[अ] ॥ ५८ ॥

चवाहाहैवेषु परेषु। तिङन्तमगतेः परं नानुदात्तं स्यात्। देवः पचति खादति च। देवः पचति वा खादति वा। देवः पचति ह खादति ह। देवः पचत्यह खादत्यह। देवः पचत्येव खादत्येव॥ च, व, ह, अह और एव परे हों तो अगति से परे तिङन्त अनुदात्त न हो॥ ५८॥

## चवायोगे प्रथमा॥ ५९॥

चवेत्याभ्यां योगे प्रथमा तिङ् विभक्तिर्नानुदात्ता स्यात्। गाश्चारयति वीणां वा वादयति। अश्वान् वा कालयति वीणां वा वादयति॥ च और वा के योग में प्रथमा तिङ् विभक्ति अनुदात्त न हो॥ ५९॥

## हेति क्षियायाम्॥ ६०॥

ह(अ), इति(अ), क्षि० म्। हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्याद् धर्मव्यतिक्रमे। स्वयं ह्यथयानेन याति ३। उपाध्यायं पदातिं गमयति। क्षियाशीः प्रैषेषु तिङाकाङ्क्षमितिप्लुतः॥ क्षिया गम्यमान हो तो ह पद से युक्त प्रथमा तिङ् विभक्ति अनुदात्त न हो॥

## अहेति विनियोगे च॥ ६१॥

अह(अ), इति(अ), विं० गे०, च(अ)। अह युक्ता प्रथमा तिङ् विभक्तिर्नानुदात्ता स्यान्नानाप्रयोजननियोगे क्षियायां च। त्वमहग्रामं गच्छ। त्वमह रथेनाऽरण्यं गच्छ। क्षियायाम्—स्वयमह रथेन याति ३। उपाध्यायं पदातिं गमयति॥ विनियोग तथा क्षिया गम्यमान हो तो अहपद से युक्त प्रथमा तिङ् विभक्ति अनुदात्त न हो॥ ६१॥

## चाहलोप एवेत्यवधारणम्॥ ६२॥

चा०प०, एव(अ), इति(अ), अ०म्। च अह एतयोर्लोपे प्रथमातिङ्विभक्तिर्नानुदात्ता स्यात्। देव एव ग्रामं गच्छतु। देव एवारण्यं गच्छतु। ग्राममरण्यं गच्छत्वित्यर्थः। देव एव ग्रामं गच्छतु। राम एवारण्यं गच्छतु। ग्रामं केवलमरण्यं केवलमित्यर्थः। इहाहलोपः नचकेवलार्थः॥ अवधारणार्थं एवशब्द प्रयुज्यमान हो तो च तथा अह का लोप होने पर प्रथमा तिङ्विभक्ति अनुदात्त न हो॥६२॥

## चादिलोपे विभाषा॥ ६३॥

चवाहाहैवानां लोपे प्रथमातिङ्विभक्तिर्वा नानुदात्ता स्यात्। चलोपे। इन्द्र वाजेषु नोऽव२। शुक्लाव्रीहयो भवन्ति। श्वेता गा आज्याय दुहन्ति। वालोपे—व्रीहिभिर्यजेत॥ च, वा, ह, अह और एव का लोप होने पर प्रथमातिङ्विभक्ति विकल्प से अनुदात्त हो॥

## वैवावेति चच्छन्दसि॥ ६४॥

वैं०व, इति(अ), च(अ), छ० सि०। वैवाव इत्याभ्यां युक्ता प्रथमातिङ्विभक्तिर्वानुदात्ता स्यात्। अहर्वै देवानामासीत् २। अयं वाव हस्त आसीत् २॥ छन्दोविषय में वै और वाव से युक्त प्रथमा तिङ् विभक्ति विकल्प से अनुदात्त हो॥ ६५॥

## एकान्याभ्यां समर्थाभ्याम्॥ ६५॥

आभ्यां युक्ता प्रथमातिङ्विभक्तिर्नानुदात्ता स्याच्छन्दसि विषये। अजामेकां जिन्वति २। प्रजामेकां रक्षति २। तयोरन्यः पिप्पलं स्वाद्वत्ति २॥ छन्दोविषय में तुल्यार्थ एक और अन्य पदों से युक्त प्रथमा तिङ् विभक्ति विकल्प से अनुदात्त हो॥ ६५॥

## यद्वृत्तान्नित्यम् ॥ ६६ ॥

य०त्[5], नि०म्[1]। यत्रपदे यच्छब्दस्ततः परं तिङन्तं नानुदात्तं स्यात्। यो भुङ्क्ते यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत् कामास्ते जुहुमः ॥ जिस पद में यद् शब्द प्रयुक्त हो उससे परे तिङन्त पद अनुदात्त न हो ॥ ६६ ॥

## पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६७ ॥

पू० त्[5], पू० म्[1], अ० म्[1], का० भ्यः[5]। पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं स्यात्। काष्ठाध्यापकः ॥ काष्ठादि गणपठित पूजन वाचक काष्ठादि पदों से परे उत्तरपद पूजित अनुदात्त हो ॥ ६७ ॥

## सगतिरपि तिङ् ॥ ६८ ॥

स०तिः[1], अपि(अ), तिङ्[1]। सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्यः परं पूजितं तिङन्तमनुदात्तं स्यात्। यत् काष्ठं पचति। यत् काष्ठं प्रपचति ॥ गणपठित पूजनवाचक काष्ठादि से परे गति तथा अगति भी पूजित तिङन्त अनुदात्त हो ॥ ६८ ॥

## कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥

कु०ने[7], च(अ) सुपि[7], अ० दौ[7]। कुत्सने च सुबन्ते गोत्रादि वर्जिते परे सगतिरपि तिङ् अगति रप्यनुदात्तः स्यात्। पचति पूति। प्रपचति पूति। पचति मिथ्या। प्रपचति मिथ्या ॥ (क्रिया कुत्सनं इति वाच्यम्) ॥ कर्त्तुः कुत्सने मा भूत्। पचति पूति देवदत्तः ॥ (पूतिश्चानुबन्ध इति वाच्यम्) ॥ तेनायं चकारानुबन्धत्वादन्तोदात्तः ॥ (वा बह्वर्थमनुदात्तमिति वाच्यम्) ॥ पचन्ति पूति २। प्रपचन्ति पूति २. ॥ गोत्रादि॥ वर्जित कुत्सन सुबन्त परे हो तो सगति तथा अगति भी तिङन्तपद अनुदात्त हो ॥६९

## गतिर्गतौ ॥ ७० ॥

गतिः[1], गतौ[7]। गतिर्गतौ परेऽनुदात्तः स्यात्। अभ्युद्धरति ॥ गति परे हो तो गति संज्ञक अनुदात्त हो ॥ ७० ॥

## तिङि चोदात्तवति ॥ ७१ ॥

तिङि[7], च(अ), उ० ति। तिङन्ते उदात्तवति परे गतिरनुदात्तः स्यात्। यत्प्रपचति ॥ उदात्तवान् तिङ् परे हो तो गति अनुदात्त हो ॥ ७१ ॥

## आमन्त्रितं पूर्वमविद्यमानवत् ॥७२॥

आ०म्[1], पूर्वम्[1], अ०त्(अ)। स्पष्टम्। अग्ने—तव, देवास्मान् पाहि, इ०। अग्ने इन्द्र, वरुण ॥ पूर्व आमन्त्रित अविद्यमान के तुल्य समझा जावे ॥ ७२ ॥

## नाऽमन्त्रिते[7] समानाधिकरणे[7] सामान्यवचनम्[1] ॥ ७३ ॥

विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत् स्यात्। अग्ने गृहपते! ॥ समानाधिकरण आमन्त्रित परे हो तो पूर्व आमन्त्रित अविद्यमानवत न हो ॥ ७३ ॥

## विभाषितं[1] विशेषवचने[7] ॥ ७४ ॥

बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद् वा।

स्यात् । देवाः शरण्याः २ । ब्राह्मणा वैयाकरणाः ॥ विशेषवाचक समानाधिकरण आमन्त्रितान्त परे हो तो सामान्यवाची आमन्त्रित पूर्व पद विकल्प से अविद्यमानवत् हो ॥

इत्यष्टमाध्यायस्य प्रथमः पादः ॥

# अथाष्टमाध्यायस्य द्वितीयः पादः ।

## पूर्वत्राऽसिद्धम्[१] ॥ १ ॥

अधिकारोऽयम्, आ अध्यायपरिसमाप्तेः । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रतिपरं शास्त्रमसिद्धम्॥ पूर्व के प्रति पर को कार्य्य होना असिद्ध समझा जावे यह अधिकार इस अध्याय की समाप्ति तक है। जिससे सपाद ७¼ अध्याय के प्रति तीन पाद तथा तीन पादों में भी पूर्व के प्रति पर को कार्य्य असिद्ध समझा जावे ॥

## नलोपः[१] सुप्स्वरसंज्ञातुग्विधिषु[७] कृति[७] ॥२॥

सुब्विधौ स्वरविधौ सञ्ज्ञाविधौ कृति तुग्विधौ च, नलोपोऽसिद्धो नान्यत्र । राजभिः । राजभ्याम् ३ । राजसु । स्वरविधौ—राजवतीत्यत्र नलोपस्या सिद्धत्वादन्तोदात्तो इति न भवति । संज्ञाविधौ —पञ्च ब्राह्मणाः । इति नलोपस्यासिद्धत्वात् ष्णान्ता षडिति षड् सञ्ज्ञा भवति। ततश्च न षट्स्वस्रादिभ्य इति टापः प्रतिषेधः । तुग्विधौ-वृत्रहभ्याम् ३ । इत्यत्र नलोपस्यासिद्धत्वाद् ह्रस्वस्य पिति कृति तुङ् न भवति ॥ सुप् विधि, स्वरविधि, सञ्ज्ञाविधि, और कृत् सम्बन्धि तुग्विधि कर्त्तव्य होतो भी नकार का लोप असिद्ध समझाजावे अन्यत्र नहीं ॥२॥

## न[अ] मुने[७] ॥ ३ ॥

नाभावे कर्त्तव्ये मुभावोनासिद्धः स्यात् अपि तु सिद्ध एव । अमुना ॥ नाभाव करने में मुभाव असिद्ध नहीं होता ॥३॥

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥

उ०योः[७], यणः[५], स्व०तः[१], अ०स्य[६] । उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । कुमार्यौ । कुमार्यः । स्वरितस्य यणः—खलप्वाशा ॥ उदात्त और स्वरित के स्थान में हुये यण् से परे अनुदात्त को स्वरितादेश हो ॥ ४ ॥

## एकादेश उदात्तेनोदात्तः ॥ ५॥

ए०शः[१], उ० न[३], उ०त्तः[१] । उदात्तेन सहानुदात्तस्य य एकादेशोऽसावुदात्तः स्यात् । वायू । अग्नी । वृत्तैः ॥ उदात्त के साथ जो अनुदात्त का एकादेश वह उदात्त हो

## स्वरितो वाऽनुदात्ते पदादौ ॥ ६ ॥

स्व०तः[१], वा(अ), अ०त्ते[७], प०दौ[७] । अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । सु उत्थितः—सूत्थितः । सुः पूजायामिति कर्मप्रवचनीयः । तस्य प्रादित्वात्समासे सति, अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तः शेषमनुदात्तमिति ॥ पदादि अनुदात्त परे होतो उदात्त के साथ हुआ अनुदात्त का एकादेश विकल्पसे स्वरित हो ॥६॥

## नलोपः[1] प्रातिपदिकान्तस्य[6] ॥ ७ ॥

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् । राजा । राजभ्याम् ॥ प्रातिपदिक संज्ञक जो पद उसके अन्त्य नकारका लोपहो ॥७॥

## न[अ] ङि[७] सम्बुद्ध्यो[७] ॥ ८ ॥

नस्य लोपो न स्यान्ङौ सम्बुद्धौ च परे । परमे व्योमन् । हे राजन् ! ॥ (ङावुत्तरपदे प्रतिषेधो वाच्यः) ॥ चर्मणि तिला अस्य-चर्मतिला, ब्रह्मनिष्ठः ॥ (वा नपुंसकानामिति वाच्यम्) ॥ हे चर्मन् ! चर्म वा ॥ ङि और सम्बुद्धि परे हो तो प्रातिपदिकान्त नकारका लोप न हो ॥८॥

## मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥

मात्[५], उप्धाः[५], च(अ), मतोः[६], वः[१], अ०भ्यः[५] । मवर्णाऽवर्णान्तात्, मवर्णाऽवर्णोपधाच्च यवादि वर्जितात् परस्य मतोर्मस्य वः स्यात् । किंवान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । यशस्वान् । भास्वान् ॥ यवादि गण पठित शब्दों को छोड़ कर मकारान्त और मकारोपध अवर्णान्त और अवर्णोपध शब्दोंसे परे मतुप् के मकार को वकारादेश हो ॥९॥

## झयः[५] ॥ १० ॥

झयन्तान्मतोर्मस्य वः स्यात् । अपादान्तात्व जश्त्वम् । विद्युत्वान् बलाहकः । उदश्वित्वान् घोषः ॥ झयन्तसे परे मतुप्के मकारको वकार आदेश हो ॥ १० ॥

## सञ्ज्ञायाम् ॥ ११ ॥

सञ्ज्ञायां मतोर्मस्य वः स्यात् । अहीवती । मुनीवती । (शरादीनां च) ॥ इति दीर्घः॥ संज्ञा विषयमें मतुप्के मकारको वकारादेश हो ॥११॥

## आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती[1] ॥ १२ ॥

षडिमे संज्ञायां निपात्यन्ते । आसन्दीवान्—ग्रामः । आसन्दीवदहिस्थलम् । अन्यत्राऽऽसनवान्, आसनवद् वा । अस्थि शब्दस्याष्ठी भावः—अष्ठीवान् । शरीरैकदेशसंज्ञा । अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः—चक्रीवान् नाम राजा । चक्रवानन्यत्र। कक्षायाः सम्प्रसारणम्—कक्षीवान् नाम ऋषिः । कक्षावानन्यत्र । रुमण्वदिति—लवणशब्दस्य रुमण् भावोनिपात्यते । रुमण्वान् नाम पर्वतः । लवणवानन्यत्र । चर्मणो न लोपाभावो णत्वं च चर्मण्वती—नाम नदी । चर्मवत्यन्यत्र ॥ संज्ञा विषय में आसन्दीवत्, अष्ठीवत्, चक्रीवत्, कक्षीवत्, रुमण्वत् और चर्मण्वती शब्दनिपातित हैं ॥१२॥

## उदन्वानुदधौ च ॥ १३ ॥

उ०न्[१], उ०धौ[७], च(अ) । उदकस्य उदन्भावो मतौ उदधौ संज्ञायां च उदन्वान् । समुद्रः ऋषिश्च ॥ समुद्र तथा संज्ञा वाच्य होतो मतुप् के परे होने पर उदक शब्द को उदन्भाव निपातन किया है ॥१३॥

## राजन्वान्[1] सौराज्ये[7] ॥ १४ ॥

सौराज्ये गम्ये राजन्वानिति निपात्यते शोभनो राजा यस्मिन्निति स राजन्वान्—

देशः। राजन्वती-भूः। राजवानन्यत्र॥ सोराज्य गम्यमान हो तो राजन्वान् शब्द निपातित है॥१४॥

## छन्दसीरः॥ १५॥

छ०सि[७]; इरः[५]। इवर्णान्ताद्रेफान्ताच्चोत्तरस्य मतोर्मस्य वः स्यात्। त्रिवती। गीर्वान्॥ छन्दो विषयमें इवर्णान्त और रेफान्तसे परे मतुप् के मकारको वकारादेशहो॥

## अनो नुट्॥१६॥

अनः[५], नुट्[१]। छन्दसि विषयेऽन्नन्तान्मतोर्नुडागमः स्यात्। अक्षण्वन्तः कर्णवन्तः॥ छन्दोविषयमें अन्नन्तसे परे मतुप्के मकारको नुडागम हो॥१६॥

## नाद्[५] घस्य[६]॥ १७॥

छन्दसि विषये नान्तात्परस्य घस्य नुडागमः स्यात्। सुपथिन्तरः। (भूरिदाव्न-स्तुड्वक्तव्यः)॥ भूरिदावत्तरो जनः॥ (ईद्रथिनः)॥ रथिन्तरः, रथीतरः। रथीतमं रथीनाम्॥ छन्दोविषय में नकारान्त से परे घ संज्ञक को नुट् का आगम हो॥१७॥

## कृपोरोलः॥ १८॥

कृपोः[६], रः[६], लः[१]। कृपेर्योरेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफस्त-दृशस्तस्य च लकार सदृशः स्यात्। कल्पते। चक्लृपे॥ कृप धातु के गुण हुये तथा ऋकार विशिष्ट जो रेफ है उन दोनों को लकारादेश हो॥ १८॥

## उपसर्गस्यायतौ॥ १९॥

उ० स्य०[६], अ० तौ[७]। अयतौ परे उपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते॥ अयति धातु (अय) परे हो तो उपसर्ग के रेफ को लकारादेश हो॥१९॥

## ग्रो यङि॥ २०॥

ग्रः[६], यङि[७]। गिरते रेफस्य लत्वं स्याद्यङि। गर्हितं निगलति—निजेगिल्यते। घुमास्थेतीत्वम्॥ यङ् प्रत्यय परे हो तो गॄ धातु के रेफ को लकारादेश हो॥ २०॥

## अचि[७] विभाषा[१]॥ २१॥

गिरते रेफस्य लत्वं वा स्यादजादौ। गिलति। गिरति॥ अजादि प्रत्यय परे हो तो गॄ धातु के रेफ को विकल्प से लकारादेश हो॥ २१॥

## परेश्चघाङ्कयोः॥ २२॥

परेः[६], च(अ), घा० योः[७]। रेफस्य लो वा स्याद् घशब्देऽङ्कशब्दे च परे। पलिघः। परिघः। पल्यङ्कः। पर्य्यङ्कः॥ घ और अङ्क शब्द परे हों तो परि के रेफ को विकल्प से लकारादेश हो॥ २२॥

## संयोगान्तस्य[६] लोपः[१]॥ २३॥

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥ कृतवान्॥ संयोगान्त पद के अन्त का लोप हो॥ २३॥

## रात्[५] सस्य[६]॥ २४॥

रेफादुत्तरस्य संयोगान्तस्य सस्यैव लोपो नान्यस्य। ऊर्क् ॥ संयोगान्त रेफ से परे सकार का ही लोप हो अन्य किसी का न हो ॥ २४ ॥

## धि॰ च॰ ॥ २५ ॥

धादौ प्रत्यये परे सकारस्य लोपः स्यात्। पधिताध्वे ॥ धकारादि प्रत्यय परे हो तो सकार का लोप हो ॥ २५ ॥

## झलो झलि ॥ २६ ॥

झलः॰, झलि॰। झलः परस्य सस्य लोपः स्याज्झलि। अभित्त। अच्छित्त ॥ झलादि प्रत्यय परे हो तो झलन्त से परे सकार का लोप हो ॥ २६ ॥

## ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वात्॰, अं०त्॰। ह्रस्वादङ्गात्परस्य सकारलोपः स्याज्झलि। अभृत। अकृत ॥ झलादि प्रत्यय परे हो तो ह्रस्वान्त अङ्ग से परे सकार का लोप हो ॥ २७ ॥

## इट ईटि ॥ २८ ॥

इटः॰, ईटि॰। इटः परस्य सस्य लोपः स्यादीटि परे। (सिज् लोप एकादेशे सिद्धो वाच्यः) ॥ आतीत् ॥ ईट् परे हो तो इट् से परे सकार का लोप हो ॥ २८ ॥

## स्कोः संयोगाद्योरन्ते च ॥ २९ ॥

स्कोः॰, सं० द्योः॰, अन्ते॰, च(अ) पदान्ते झलि च परे यः संयोगस्तदाद्योः सकार-ककारयोर्लोपः स्यात्। (लस्जेः)—लग्नः। लग्नवान्। ककारस्य (तक्षेः)—तष्टः। तष्टवान् ॥ झल् परे हो अथवा पदान्तमें संयोगके आदि सकार तथा ककार का लोपहो॥

## चोः॰ कुः॰ ॥ ३० ॥

चवर्गस्य कवर्गः स्याज् झलि पदान्ते च। पक्ता। पक्तुम्। पक्तव्यम्। वक्ता वक्तुम्। वक्तव्यम् ॥ झल् परे हो या पदान्त में चवर्ग को कवर्गादेश हो ॥३०॥

## होढः ॥ ३१ ॥

हः॰, ढः॰। हस्य ढः स्याज्झलि पदान्ते च। वोढा। वोढुम्। वोढव्यम्। सोढा। सोढुम्। सोढव्यम् ॥ झल् परे हो अथवा पदान्त में हकार को ढकारादेश हो ॥३१॥

## दादेर्धातोर्घः ॥ ३२ ॥

दादेः॰, धातोः॰, घः॰। उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च। दग्धा। दग्धुम्। दग्धव्यम्। गृहधक्। दोग्धा। दोग्धुम्। दोग्धव्यम् ॥ झल् परे हो अथवा पदान्त में उपदेश में जो दकारादि धातु उसके हकार को घकारादेश हो ॥ ३२ ॥

## वा॰ द्रुहमुहष्णुहष्णिहाम्॰ ॥ ३३ ॥

एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। द्रोग्धा। द्रोढा। मित्रध्रुक्। मित्रध्रुग्। मित्रध्रुट्। मित्रध्रुड्। मोग्धा। मोढा। मुक्। मुग्। मुट्। मुड्। स्नोग्धा। स्नोढा। स्नुक्। स्नुग्। स्नुट्। स्नुड्। स्नेग्धा। स्नेढा। स्निक्। स्निग्। स्निट्। स्निड् ॥ झल् परे हो अथवा पदान्त में द्रुह, मुह, स्नुह और स्निह धातु के हकार को विकल्प से घकारादेश हो ॥ ३३ ॥

## नहो धः ॥ ३४ ॥

नहः[६], धः[१] । नहो हस्य धः स्याज्झलि पदान्ते च । नद्धा । नद्धुम् । नद्धव्यम् । उपानत्, द् ॥ झल् परे हो अथवा पदान्त में नह धातु के हकार को धकारादेश हो ॥

## आहस्थः ॥ ३५ ॥

आहः[६], थः[१] । आहो हस्य थः स्याज्झलि परे । चत्वम् ॥किमात्थ ॥ झल् परे हो तो आह ( ब्रूञ् के स्थान में हुआ आदेश ) धातु के हकार को थकारादेश हो ॥ ३६ ॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां[६] षः[१] ॥ ३६ ॥

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च । व्रश्च । व्रष्टा । व्रष्टुम् । व्रष्टव्यम् । मूलवृट् । भ्रस्ज, भ्रष्टा । भ्रष्टुम् । भ्रष्टव्यम् । धानाभृट् । सृज, स्रष्टा । स्रष्टुम । स्रष्टव्यम् । रज्जुसृट् । मृज, मार्ष्टा । मार्ष्टुम । मार्ष्टव्यम् । कंसपरिमृट् । यज, यष्टा । यष्टुम् । यष्टव्यम् । उपयट् । राज, सम्राट् । भ्राज, विभ्राट् । राज-भ्राजोः पदान्तार्थं ग्रहणम् । केचित्तु राष्टिः । भ्राष्टिरिति क्तिन्नन्तमिच्छन्ति । छकारान्तस्य । प्रच्छ, प्रष्टा । प्रष्टुम् । प्रष्टव्यम् । शब्दप्राट् । शकारान्तानाम् । लिश् , लेष्टा । लेष्टुम् । लेष्टव्यम् । लिट् । विश, वेष्टा । वेष्टुम् । वेष्टव्यम् । विट् ॥ झल् परे हो अथवा पदान्त में व्रश्चादि सप्तधातु तथा छान्त और शान्त धातुओं के अन्त को षकारादेश हो॥

## एकाचो बशोभष् झषन्तस्यस्ध्वोः ॥ ३७ ॥

ए० चः[६], बशः[६], भष्[१], झ०स्य[६], स्ध्वोः[७] । धातोरवयवो य एकाज्झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात् सकारे ध्वशब्दे परे पदान्ते च । बुध, भोत्स्यन्ते, अभुध्वम्, अर्थभुत् । गुह, निघोक्ष्यते । न्यघुक्ष्यम् । पर्णघुट् ॥ सकार और ध्व परे हो तथा पदान्त में धातु का अवयव एकाच् झषन्त जो बश् उसको झषन्त भष् आदेश हो॥

## दधस्तथोश्च ॥ ३८ ॥

दधः[६], तथोः[७], च(अ) । द्विरुक्तस्य झषन्तस्य धातोर्बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । धत्तः । धत्थ । धत्से । धत्स्व । धध्वम् ॥ त, थ, से, स और ध्व प्रत्यय परे हो तो कृतद्विर्वचन झषन्त धा धातु के बश् को भष् आदेश ॥ ३८ ॥

## झलां जशोऽन्ते ॥ ३९ ॥

झलाम्[६], जशः[१], अन्ते[७] । पदान्ते वर्त्तमानानां झलां जशः स्युः । वागत्र । अग्निचिदस्ति ॥ पदान्त में झलों को जश् आदेश हो ॥ ३९ ॥

## झषस्तथोर्धोऽधः ॥ ४० ॥

झषः[५], तथोः[६], धः[१], अधः[५] । झषः परयोस्तथयोर्धः स्याद्धानिं विहाय । लभ्, लब्धा । लब्धुम् । लब्धव्यम् । अलब्ध । अलब्धाः ॥ धा धातु वर्जित झषन्त से परे तकार और थकार को धकारादेश हो ॥ ४० ॥

## षढोः[६] कः[१] सि[७] ॥ ४१ ॥

षस्य ढस्य च ककारादेशः स्यात् सकारे परे । विष, विवेक्ष्यति । विविक्षति । ढस्य लिह, लेक्ष्यति लिलिक्षति ॥ सकार परे हो तो षकार तथा ढकार को ककारादेश हो ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥

र०म्[५], नि०तः[६], नः[१], पू०स्य[६], च(अ),दः[१]। रेफदकाराभ्यां परस्य निष्ठातस्य नकारादेशः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च। शॄ, ॠत इत्। रपरः। णत्वम्। शीर्णः। भिन्नः। भिन्नवान्। छिन्नः। छिन्नवान् ॥ रेफ और दकार से परे निष्ठा के तकार को तथा निष्ठापेक्षा धातु के दकार को नकारादेश हो ॥४२॥

## संयोगादेरातोधातोर्यण्वतः ॥ ४३ ॥

स०देः[५], आतः[५], धातोः[५], य०तः[५]। निष्ठातस्य नः स्यात्। द्राणः। द्राणवान्। ग्लानः। ग्लानवान्। म्लानः। म्लानवान् ॥ संयोगादि यण्वान् आकारान्त धातु से परे निष्ठा के तकार को नकारादेश हो ॥४३॥

## ल्वादिभ्यः[५] ॥ ४४ ॥

लूञ्—छेदने इत्यादाय वृ-वरणे इति यावत्। एकविंशतेर्लूञादिभ्यो निष्ठातस्य नः स्यात्। लूनः। लूनवान्। ग्रहिज्या०—जीनः। जीनवान्। (ॠकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्) कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। पूनिः ॥ (दुग्वोर्दीर्घश्च) ॥ (दु—गतौ) दूनः। (टुदु—उपतापे इत्ययं तु न गृह्यते। सानुबन्धकत्वात्। मृदुतया दुतया, इति माघः।) (पूञो विनाशे) ॥ पूनाः—यवाः। विनष्टा इत्यर्थः। पूतमन्यत्। (सिनोतेर्ग्रास कर्मकर्तृकस्य) ॥ सिनो—ग्रासः स्वयमेव ॥ लूञ् आदि गण पठित धातुओं से परे निष्ठा के तकार को नकारादेश हो ॥४४॥

## ओदितश्च ॥ ४५ ॥

ओ०तः[५], च(अ)। ओकारेतो धातोरुत्तरस्य निष्ठातस्य नः स्यात्। ओलस्जी, लग्नः। लग्नवान्। भुजो, भग्नः। भग्नवान् ॥ ओदित् धातुसे परे निष्ठाके तकारको नकारादेश हो।

## क्षियो दीर्घात् ॥ ४६ ॥

क्षियः[५], दी०त्[५]। दीर्घात् क्षियो निष्ठा तकारस्य नकारादेशः स्यात्। क्षीणाः-क्लेशाः। क्षीणा जाल्माः। क्षीणः तपस्वी ॥ दीर्घ क्षी धातु से परे निष्ठा के तकार को नकारादेश हो ॥४६॥

## श्योऽस्पर्शे ॥ ४७ ॥

श्यः[५], अ०र्शे[७]। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। हल इति दीर्घः। शीनं घृतम्। शीनोमेदः। शीना वसा ॥ श्यैङ् धातु से परे निष्ठा के तकार को नकारादेश हो॥

## अञ्चोऽनपादाने ॥ ४८ ॥

अञ्चः[५], अ०ने[७]। अञ्चो निष्ठातस्य नः स्यान्नत्वपादाने। समक्नौ शकुनेः पादौ ॥ अनपादान अर्थ में अञ्चु धातु से परे निष्ठा के तकार को नकारादेश हो ॥४८॥

## दिवोऽविजिगीषायाम ॥ ४९ ॥

दिवः[५], वि०म्[७]। दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। द्यूनः। विजिगीषायां तु द्यूतम् ॥ अविजिगीषा (जीतने की इच्छाभिन्न) अर्थ में दिव धातु से परे निष्ठा के तकार को नकारादेश हो ॥४९॥

## निर्वाणोऽवाते ॥ ५० ॥

नि०णः[1], अ०ते[7] । निः पूर्वाद् वातेर्निष्ठा तस्य नत्वं निपात्यते वातश्चेत् कर्ता न स्यात् । निर्वाणोऽग्निर्मुनिर्वा ॥ वात ( वायु ) से भिन्न अर्थ वाच्य होतो निः पूर्वक वा धातु से निष्ठा के तकार को नत्व करके निर्वाण शब्द निपातन किया है ॥५०॥

## शुषः[५] कः[१] ॥ ५१ ॥

शुषेर्धातोरुत्तरस्य निष्ठातस्य कः स्यात् । शुष्कः । शुष्कवान् ॥ शुष धातु से परे निष्ठा के तकार को ककारादेश हो ॥५१॥

## पचो वः ॥ ५२ ॥

पचः[५], वः[१] । पचेर्धातोरुत्तरस्य निष्ठातस्य वः स्यात् । पक्वः । पक्ववान् ॥ पच धातु से परे निष्ठा के तकार को वकारादेश हो ॥५२॥

## क्षायो मः ॥ ५३ ॥

क्षायः[५], मः[१] । क्षै धातोरुत्तरस्य निष्ठातस्य मः स्यात् । क्षामः । क्षामवान् ॥ क्षै धातु से परे निष्ठा के तकार को मकारादेश हो ॥५३॥

## प्रस्त्योऽन्यतरस्याम् ॥ ५४ ॥

प्रस्त्यः[५], अ०म्(अ) । स्त्यैधातोरुत्तरस्य निष्ठातस्य मो वा स्यात् । प्रस्तीमः । प्रस्तीतः । प्रस्तीमवान् । प्रस्तीतवान् ॥ प्र पूर्वक स्त्यै धातु से परे निष्ठा के तकार को विकल्प से मकारादेश हो ॥५४॥

## अनुपसर्गात्[५] फुल्लक्षीबकृशोल्लाघाः[१] ॥ ५५ ॥

उपसर्गरहिता इमे निपात्यन्ते । ञि-फला-फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वे एकदेशस्यापीदं निपातनमिष्यते । फुल्लवान् । क्षीबादिषु तु-क्तप्रत्ययस्यैव तलोपः, तस्यासिद्धत्वात् प्राप्तस्येटोऽभावश्च निपात्यते । क्षीबो मत्तः कृशः तनुः । उल्लाघो-नीरोगः उपसर्ग रहित फुल्लादि शब्द निपातित हैं ॥५५॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ५६ ॥

नु०भ्यः[५], अ०म्(अ) । एभ्यो निष्ठातस्य नो वा स्यात् । नुद्, नुन्नः । नुत्तः । विद्, विन्नः । वित्तः । उन्द, उन्नः । उत्तः । त्रा, त्राणः । त्रातः । घ्रा, घ्राणः । घ्रातः । ह्री, ह्रीणः ह्रीतः ॥ नुद्, विद, उन्द, त्रा, घ्रा और ह्री धातु से परे निष्ठा के तकार को विकल्प से नकारादेश हो ॥५६॥

## न[अ] ध्याख्यापॄमूर्छिमदाम्[६] ॥ ५७ ॥

एभ्यो निष्ठातस्य नत्वं स्यान् । ध्यातः । ध्यातवान् । ख्यातः । ख्यातवान् । पूर्त्तः । पूर्त्तवान् । मूर्त्तः । मूर्त्तवान् । मत्तः । मत्तवान् ॥ ध्या, ख्या, पॄ, मूर्छि और मद धातु से परे निष्ठा के तकार को नकारादेश न हो ॥५७॥

## वित्तोभोगप्रत्यययोः ॥ ५८ ॥

वित्तः[१], भो०योः[७] । विदेर्लाभार्थादुत्तरस्य क्तस्य नत्वाभावो निपात्यते, भोग्ये प्रतीते चार्थे । वित्तम्-धनम् । वित्तोऽयं पुरुषः ॥ भोग और प्रत्यय अर्थ में लाभार्थ विद

धातु से क्त प्रत्यय के परे नत्व का अभाव करके भित्त यह शब्द निपातन किया है ५:

## भित्तं¹ शकलम्¹ ॥ ५९ ॥

भित्तमिति निपात्यते शकलं चेत् स्यात्। भिन्नमन्यत् ॥ शकल (टुकड़ा) वाच्य होतो भित्त शब्द निपातित है ॥५९॥

## ऋणमाधमर्ण्ये ॥ ६० ॥

ऋणम्¹, आ०ये⁷। ऋधातोःक्तकारस्य नत्वं निपात्यते—अधमर्णं व्यवहारे। अयं मे ऋणं धारयति। ऋतमन्यत् ॥ आधमर्ण्य (कर्जा) व्यवहारमें ऋधातु से क्तके तकार को नकार निपातन किया है ॥६०॥

## नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि¹ छन्दसि⁷ ॥ ६१ ॥

नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त इतीमानि छन्दसि विषये निपात्यन्ते सदेर्नञ् पूर्वान्निपूर्वाच्च निष्ठाया नत्वाभावो निपात्यते। नसत्तमञ्जसा। निषत्तमस्य चरतः। असन्नं निषण्णमिति प्राप्ते। उन्देर्नञ् पूर्वस्याऽनुत्तम्। अनुन्नमिति प्राप्ते। प्रतूर्त्तमिति त्वरतेः। तुर्वीत्यस्य वा। सूर्त्तमिति सृइत्यस्य। सृतमिति प्राप्ते। गूर्त्तमिति, गूरी इत्यस्य। गूर्णमिति प्राप्ते ॥छन्दोविषय में नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त और गूर्त शब्द निपातन किये हैं ॥ ॥६१॥

## क्विन्प्रत्ययस्य⁶ कुः¹ ॥ ६२ ॥

क्विन् प्रत्ययो यस्मात्तस्य कवर्गोन्तादेशः स्यात् पदान्ते। घृतस्पृक्। युङ् ॥ क्विन् प्रत्यय जिससे किया जावे उसको पदान्तमें कवर्ग आदेश हो ॥ ६२ ॥

## नशे र्वा ॥ ६३ ॥

नशेः⁶, वा(अ)। नशेः कवर्गोन्तादेशो वा स्यात्पदान्ते। नक्, नण्। नट्, नड् ॥ नश धातु को पदान्तमें विकल्पसे कवर्गान्तादेश हो ॥६३॥

## मोनोधातोः ॥ ६४ ॥

मः⁶,नः¹, धातोः⁶। मान्तस्य धातोर्मस्य नकारादेशः स्यात् पदान्ते। प्रशाम्यतीति-प्रशान् ॥ पदान्तमें मकारान्त धातुको नकारादेशहो ॥६४॥

## म्वोश्च ॥ ६५ ॥

म्वोः⁷, च(अ)। मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे, वकारे च परे। जगन्वान्। जगन्म। वहे। जगन्महे ॥मकार तथा वकार परे होतो मान्त धातुके मकारको नकारादेशहो॥

## ससजुषो रुः ॥ ६६ ॥

स०षोः⁶, रुः¹। पदान्तस्य सस्य सजुष् शब्दस्य च रुः स्यात्। कविरत्र। भानुरुदेति। सजूर्देवेन सवित्रा। सजूरिति पूर्वपद भावे क्विप्, र्वोरुपधाया इति दीर्घत्वम्। बहुव्रीहौ सहस्य सभावः, सप्रीतिरित्यर्थः ॥ पदान्त सकार और सजुष् शब्द को रुत्वादेश हो ॥६६॥

## अवयाः¹ श्वेतवाः¹ पुरोडाश्च¹ ॥ ६७ ॥

इमे सम्बुद्धौ कृतदीर्घा निपात्यन्ते ॥ अवयाः, श्वेतवाः और पुरोडाः शब्द निपातितहैं॥

## अहन्¹ ॥ ६८ ॥

अहन्नित्यस्य रुः स्यात् पदान्ते। अहोभ्याम् ३। अहोभिः ॥ पदान्त में अहन् शब्द को नकारादेश हो ॥ ६८ ॥

## रोऽसुपि ॥ ६९ ॥

रः¹, असुपि⁷। असुपि परेऽह्नो रेफादेशः स्यात्। अहरहः। अहर्भुङ्क्ते। सुप्भिन्न परे होतो अहन् शब्द के नकार को रेफादेश हो ॥ ६९ ॥

## अम्नरूधरवरित्युभयथाछन्दसि ॥ ७० ॥

अ०रः⁷, इति(अ), उ०था(अ), छन्दसि⁷। अम्नस्, ऊधस्, अवस् इत्येषां छन्दसि विषये रुर्वा, रेफो वा स्यात्। अम्नएव, अम्नरेव। ऊधएव,ऊधरेव। अवएव, अवरेव ॥ छन्दो विषय में अम्नस्, ऊधस् और अवस् के सकार को विकल्प से रु तथा रेफ आदेश हो ७० ॥

## भुवश्च महाव्याहृतेः ॥ ७१ ॥

भुवः⁶, च(अ), म०तेः⁶। भुवस् इत्यस् महाव्याहृतेश्छन्दसि रुर्वा, रेफो वा स्यात्। भुव इति, भुवरिति ॥ छन्दो विषय में महाव्याहृति भुवस् शब्द के सकार को विकल्प से रु तथा रेफ आदेश हो ॥ ७१ ॥

## वसुस्रंसुध्वंस्वनडुहां⁶ दः¹ ॥ ७२ ॥

सान्तवस्वन्तस्य, स्रंस्वादेश्च दः स्यात् पदान्ते। विद्वद्भ्याम् ३। विद्वद्भिः। स्रस्तम्। ध्वस्तम्। अनडुद्भ्याम् ॥ पदान्त में सान्त वस्वन्त स्रंसु, ध्वंसु तथा अनडुह् शब्द को दकारादेश हो ॥ ७२ ॥

## तिप्यनस्तेः ॥ ७३ ॥

तिपि⁷, अ०स्तेः⁶। पदान्तस्य सस्य दः स्यात्तिपि नत्वस्ते। अचकात्, अचकाद् ॥ अस्ति वर्जित पदान्त सकारको दकारादेश हो तिप् परे होतो ॥ ७३ ॥

## सिपि धातोरुर्वा ॥ ७४ ॥

सिपि⁷, धातोः⁶, रुः¹, वा(अ)। पदान्तस्य धातोः सस्य रुर्वा स्यात सिपि। अचकाः, अचकात्, द् ॥ सिप् परे होतो पदान्त धातु के सकारको विकल्प से रुत्वादेशहो ॥

## दश्च ॥ ७५ ॥

दः⁶, च(अ)। पदान्तस्य दस्य धातोः सिपि परे रुर्वा स्यात्। अवेः, अवेत्, द् ॥ सिप् परे होतो पदान्त दकारान्त धातु को विकल्प से रुत्वादेश हो ॥ ७५ ॥

## र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥

र्वोः⁶, उ०याः⁶, दीर्घः¹, इकः⁶। पदान्ते रेफवान्तस्य धातोरुपधाया इकोदीर्घः स्यात्। वग्रहणमुत्तरार्थम्। पिपठीः। गीः। धूः। पूः। पदान्त में रेफ तथा वान्त धातु के उपधा इक् को दीर्घादेश हो ॥ ७६ ॥

## हलि⁷ च³ ॥ ७७ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। आस्तीर्णम्। विस्तीर्णम्।

विशीर्णम् । अवगूर्णम् । वान्तस्य दीव्यति । सीव्यति ॥ हल् परे होतो रेफ और वान्त धातु के उपधा इक् को दीर्घ आदेश हो ॥ ७७ ॥

## उपधायां[७] च[अ] ॥ ७८ ॥

धातोरुपधाभूतौ यौ रेफवकारौ हल् परौ तयोरुपधाया इको दीर्घः स्यात् । हुर्छा, हूर्छिता । मुर्छा, मूर्छिता । तुर्वी, तूर्विता । धुर्वी, धूर्विता ॥ हल् परक धातु के उपधा भूत जो रेफ और वकार उनके इक् को दीर्घादेश हो ॥ ७८ ॥

## न[अ] भकुर्छुराम्[६] ॥ ७९ ॥

रेफवान्तस्य भस्य कुर् छुर् इत्येतयोश्च दीर्घो न स्यात् । धुरं वहति—धुर्यः । कुर्यात् । छुर्यात् ॥ रेफान्त वान्त भसंज्ञक कुर् और छुर् को दीर्घादेश न हो ॥ ७९ ॥

## अदसोऽसेर्दादुदोमः ॥ ८० ॥

अ०सः[६], असेः[६], दात्[५], उ[१], दः[६], मः[१] । अदसोऽसान्तस्य दात्परस्य उदूतौ स्यातां दस्य च मः । अमुम् । अमू । अमून् ॥ अनकारान्त अदस् शब्द के दकार से परे अवर्ण को उ तथा ऊ आदेश और दकार को मकारादेश हो ॥ ८० ॥

## एत ईद्बहुवचने ॥ ८१ ॥

एतः[६], ईत्[१], ब०ने[७] । अदसो दात्परस्यैत ईत्स्याद्दस्य च मोबह्वर्थोक्तौ । अमी । अमीभिः । अमीभ्यः । अमीषाम् । अमीषु ॥ बहुवचन में अदस् शब्द के दकार से परे एकार को ई और द को म आदेश हो ॥ ८१ ॥

## वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

वा०स्य[६], टेः[६], प्लुतः[१], उ०त्तः[१] । अधिकारोऽयं विज्ञेयः । आपादपरिसमाप्तेः ॥ वाक्यकी टि को प्लुतउदात्त हो यह अधिकार इसपाद की समाप्तिपर्यन्त जाननाचाहिये

## प्रत्यभिवादेऽशूद्रे[७] ॥ ८३ ॥

अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् । सचोदात्तः । अभिवादये यज्ञदत्तोऽहम् । भो आयुष्मानेधि यज्ञदत्त३ । ( स्त्रियां न ) । अभिवादये गार्ग्यहम् । भो आयुष्मती भूया गार्गि ! । ( भो राजन्यविशां वेति वक्तव्यम् ) ॥ आयुष्मानेधि भोः ३, आयुष्मानेधि भोः । आयुष्मानेधीन्द्रवर्म ३ न्, आयुष्मानेधीन्द्रवर्मन् । आयुष्मानेधीन्द्रपालित ३, आयुष्मानेधीन्द्रपालित ! ॥ शूद्रभिन्न के प्रत्यभिवादन में वाक्यकी टिको प्लुत उदात्त हो ॥ ८३ ॥

## दूराद्धूते च ॥ ८४ ॥

दूरात्[५],हूते[७],च(अ)। दूरात् सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्, सचोदात्तः । आगच्छ देवदत्त ३॥ दूरसे बुलानेमें वाक्यकी टि को प्लुतहो और वह उदात्त संज्ञकहो

## हैहे[७] प्रयोगे हैहयोः[६] ॥ ८५ ॥

एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेवप्लुतः स्यात् । हे ३देव ! है ३ देव! देवहे ३ । देवहै ३ ॥ है तथा हे प्रयोग में दूरसे बुलाने पर है तथा हे को ही प्लुतहो और वह उदात्तहो ॥ ८५ ॥

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥

गुरोः[6], अ०तः[6], अ०स्य[6], अपि(अ), ए०स्य[6], प्राचाम्[6] । दूरात् सम्बोधने यद् वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोः टेरेकैकस्य वा प्लुतः स्यात् । दे३ वदत्त । देवद ३ त्त । देवदत्त ३ ॥ सम्बोधन में वर्तमान ऋकारभिन्न गुरु अनन्त्य वर्णको भी पर्याय करके विकल्प से प्लुत हो ॥ ८६ ॥

## ओमभ्यादाने ॥ ८७ ॥

ओम्[1], अ०ने[7] । आरम्भे ओंशब्दस्य प्लुतः स्यात् । ओ३म् अग्निमीडे पुरोहितम् ॥ अभ्यादान ( आरम्भ ) अर्थ में ओम् शब्द प्लुतहो ॥ ८७ ॥

## ये[1] यज्ञकर्मणि[7] ॥ ८८ ॥

यज्ञकर्मणि ये इत्यस्य प्लुतः स्यात् । ये ३ यजामहे ॥ यज्ञकर्ममें ये इसको प्लुतहो॥८८॥

## प्रणवष्टेः ॥ ८९ ॥

प्र०वः[1], टेः[6] । यज्ञकर्मणि टेरोमित्यादेशः स्यात् । अपां रेतांसि जिन्वतो३म् ॥ यज्ञकर्म में टि को ओम् यह आदेशहो ॥ ८९ ॥

## याज्यान्तः[1] ॥ ९० ॥

याज्यान्ता मन्त्रास्तेषामन्त्यस्य टेः प्लुतः स्याद् यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाहाम्३ ॥ यज्ञकर्म में याज्यान्त मन्त्रों की टि को प्लुत हो ॥ ९० ॥

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

ब्रू०म्[6], आदेः[1] । एषामादेः प्लुतः स्याद् यज्ञकर्मणि । अग्नयेऽनुब्रू ३ हि । अग्नये गोमयानि प्रे ३ष्य । अस्तु श्रौ ३ षट् । सोमस्याग्नेवीही वौ ३ षट् । अग्निमा ३ वह ॥ यज्ञकर्म में ब्रूहि प्रेष्य श्रौषट् वौषट और आवह शब्द के आदि को प्लुतहो ॥ ९१ ॥

## अग्नीत्प्रेषणे[7] परस्य[6] च[अ] ॥ ९२ ॥

यज्ञकर्मणि अग्नीधः प्रेषणे परस्यादेश्च प्लुतः स्यात् । ओ ३ श्राश्वय ॥ यज्ञकर्म विषयक अग्नीध् के प्रेषण में पर और आदि दोनों वर्णों को प्लुत हो ॥ ९२ ॥

## विभाषा[1] पृष्टप्रतिवचने[7] हेः[6] ॥ ९३ ॥

पृष्टप्रतिवचने हेर्वा प्लुतः स्यात् । अकार्षीः पटम् । अकार्षं हि ३ । अकार्षं हि ॥ प्रश्न के उत्तर देने में हि को विकल्प से प्लुत हो ॥ ९३ ॥

## निगृह्यानुयोगे[7] च[अ] ॥ ९४ ॥

समन्तात् प्रच्यावनं निग्रहः । अनुयोगस्तस्य मतस्याविष्करणम् अत्र यद् वाक्यं तस्य टेर्वा प्लुतः स्यात् । अनित्यः शब्द इत्यात्थ ३ । अनित्यः शब्द इत्यात्थ ॥ निग्रही के निग्रह को प्रकाश करने में वाक्य की टि को विकल्प से प्लुत हो ॥ ९४ ॥

## आम्रेडितं[1] भर्त्सने[7] ॥ ९५ ॥

वाक्यादेरामन्त्रितस्येति भर्त्सने द्वित्वमुक्तं तस्याम्रेडितं प्लुतः स्यात् । दस्यो ! दस्यो ३ घातयिष्यामि त्वाम् । चौर ! चौर ३ ॥ भर्त्सन अर्थ में वाक्य का आम्रेडित भाग प्लुत हो ॥ ९५ ॥

## अङ्गयुक्त[1] तिङाकाङ्क्षम्[1] ॥ ९६ ॥

अङ्गेत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने प्लुतः स्यात् । अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म ! । कूजनफलमस्मिन्नेवक्षणे ज्ञास्यतीत्यर्थः ॥ भर्त्सन अर्थ में अङ्ग ( अमर्ष ) शब्द से युक्त साकांक्ष तिङन्त प्लुत हो ॥ ९६ ॥

## विचार्यमाणानाम्[६] ॥ ९७ ॥

प्रमाणेन वस्तुपरीक्षणं विचारः । तत्र विषये विचार्यमाणानां वाक्यानां टेः प्लुतः स्यात् । होतव्यं दीक्षितस्य गृहा ३ इ । न होतव्य ३ मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तु तत्वपरीक्षणं विचारः ॥ विचार्यमाण वाक्यों की टि को प्लुत हो॥

## [१]पूर्वं तु[अ] भाषायाम्[७] ॥ ९८ ॥

भाषायां विचार्यमाणानां पूर्वं प्लुतः स्यात् । अहिर्नु ३ । रज्जुर्नु ॥ ।भाषा विषय में विचार्यमाण वाक्यों के पूर्व भाग को प्लुत हो ॥ ९८ ॥

## प्रतिश्रवणे[७] च[अ] ॥ ९९ ॥

वाक्यस्य टेः प्लुतः स्यादभ्युपगमे प्रतिज्ञाने, श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामि ३ । नित्यः शब्दो भवितुमर्हति ३ । देवदत्त ! किमात्थ ३ ॥ स्वीकृत प्रतिज्ञान और श्रवणाभि मुख्यार्थ में।वाक्य की टि को प्लुत हो ॥ ९९ ॥

## [१]अनुदात्तं प्रश्नान्ताभिपूजितयोः[७] ॥ १०० ॥

अनयोरर्थयोरनुदात्तः प्लुतः स्यात् । अग्नि भूत ३ इ । पट ३ उ । अग्नि भूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । अभिपूजिते । शोभन खल्वसि माणवक ३ ॥ प्रश्नान्त और अभिपूजित अर्थ में वाक्य की टि को प्लुत हो ॥१००॥

## चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

चित्(अ), इति(अ), च(अ), उ० र्थे[७], । प्र० ने[७] । चिदित्ये तस्मिन्निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतः स्यात् । अग्निचिद्द् भाया ३ त् । अग्निरिव दीप्यते इत्यर्थः ॥ चित् यह अव्यय उपमानार्थ में प्रयुज्यमान हो तो वाक्य की टि को अनुदात्त प्लुत हो ॥ १०१ ॥

## उपरिस्विदासीदिति च ॥ १०२ ॥

उ० त् (अ), इति(अ), च(अ) । अस्य टेरनुदात्तः प्लुतः स्यात् । उपरि स्विदासी३ त् । अधः स्विदासी ३ दित्यत्र तु विचार्यमाणानामित्युदात्तः प्लुतः ॥ उपरि स्विदासीत् इस वाक्य की टि को प्लुतानुदात्त हो ॥ १०२ ॥

## स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ॥ १०३ ॥

स्व० म्[१], आ० ते[७], अ० षु[७] । स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौपम्ये । असूयायाम्—अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम् । सम्मतौ । अभिरूपक ३ अभिरूपक शोभनोऽसि । कोपे । अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने । शाक्तीक ३ शाक्तीक रिक्ता ते शक्तिः ॥ असूया, सम्मति, कोप और कुत्सन अर्थ में आम्रेडित परे हो तो पूर्व भाग के टि को स्वरित प्लुत हो ॥१०३॥

## क्रियाशीः प्रैषेषु[7] तिङाकाङ्क्षम्[1] ॥ १०४ ॥

क्रियादिष्वर्थेषु आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् । क्रियायाम्—स्वयं रथेन याति ३ उपाध्यायं पदातिं गमयति । ।आशिषि—पुत्रांश्च लप्सीष्ट ३ धनं च तात ! । प्रैषे—पाठं स्मर ३ पाठशालं च गच्छ ॥ क्रिया (आचारभेद) आशिष् (प्रार्थना) और प्रैष ( व्यापार ) अर्थ में साकाङ्क्ष तिङन्त को स्वरित प्लुत हो ॥ १०४ ॥

## [6]अनन्त्यस्याऽपि[गा] प्रश्नाख्यानयोः[7] ॥ १०५ ॥

प्रश्ने आख्याने चार्थे अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुतः स्यात् । अगमः ३ पूर्वा ३ न् ग्रामा ३ न् । सर्वं पदानामयम् । आख्याने—अगम ३ म् पूर्वा ३ न् ग्रामा ३ न् ॥ प्रश्न और आख्यान अर्थ में वाक्य की अनन्त्य तथा अन्त्य टि को स्वरित प्लुत हो ॥ १०५ ॥

## प्लुतावैच इदुतौ ॥१०६॥

प्लुतौ[1], ऐचः[1], इ० तौ[1] । दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लुतौ स्याताम् । ऐ ३ तिकायन ! । औ ३ पगव ! । चतुर्मात्रा ऐचौ सम्पद्येते ॥ ऐच् को जहां प्लुत कहा जावे वहां इकार और उकार को प्लुत हो ॥१०६॥

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ ॥१०७॥

एचः[1], अ० स्य[1], अ० द्व[1], हूते[7], पूर्वस्य[1], अ० स्य[1], आत्[1], उ०स्य[1], इ०तौ[1] । अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्धस्य इदुतौ स्याताम् । प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव । प्रश्नान्ते । अगमः ३ पूर्वा३न् ग्रामा३न् । अग्निभूत ३ इ । अभिपूजिते—भद्रं करोषि पट ३ उ । विचार्यमाणे—होतव्यं दीक्षितस्य गृहा ३ इ । प्रत्यभिवादे—आयुष्मानेधि अग्निभूत ३ इ । याज्यान्ते—स्तोमैर्विधेमाग्नय ३ इ ॥ पास से बुलाने में अप्रगृह्य एच् के पूर्व अर्धभाग को प्लुत विषय में आकारादेश हो और उत्तर को इकार तथा उकारादेश हो ॥ १०७ ॥

## तयोर्य्वावचि संहितायाम् ॥१०८॥

तयोः[1], य्वौ[1], अचि[7], सं० म्[7] । संहितायामचिपरे इदुतोर्यकारवकारौ स्याताम् । अग्न ३ याशा । पट ३ वाशा । अग्न ३ यिन्द्रम् । पट ३ वुदकम् ॥ संहिता विषय में अच् परे हो तो प्लुत विषयक इकार तथा उकार को यकार और वकारादेश हो ॥१०८॥

इत्यष्टमाध्यायस्य द्वितीयः पादः ॥

---

# अथाष्टमाध्यायस्य तृतीयः पादः ।

## मतुवसोरुः सम्बुद्धौ छन्दसि ॥१॥

म० सोः[1], रुः[1], स० द्धौ[7], छ० सि[7] । छन्दसि विषये मत्वन्तस्य वस्वन्तस्य च रुः स्यात् सम्बुद्धौ परे । इन्द्र मरुत्व इह पाहि सोमम् । मीढ्वस्तोकाय तनयाय । छन्दसि र इति वक्तव्यम् ॥ छन्दोविषय में सम्बुद्धि परे हो तो मत्वन्त तथा वस्वन्त पद को रु आदेश हो ॥ १ ॥

## [अ]अत्राऽनुनासिकः[१] पूर्वस्य[६] तु[अ] वा[अ] ॥ २ ॥

अत्र रु प्रकरणे रोः पूर्वस्यानुनासिको वा स्यात्। अधिकारोऽयम् । सँस्कर्त्ता ॥ यहां रुत्व प्रकरण में रु से पूर्व अनुनासिक विकल्प से हो यह अधिकार है ॥ २ ॥

## आतोऽटि नित्यम् ॥ ३ ॥

आतः[६], अटि[७], नित्यम्[२] । अटि परे रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः स्यात्। महाँ इन्द्रः ॥ अट् परे हो तो रु से पूर्व आकार को नित्य अनुनासिक हो ॥ ३ ॥

## अनुनासिकात्परोऽनुस्वारः ॥ ४ ॥

अ० त्[५], परः[१], अ० रः[१] । अनुनासिकं विहाय रोः पूर्वस्मात् परोऽनुस्वारागमः स्यात्। भवांश्चरति ॥ अनुनासिक को छोड़कर रु से पूर्व वर्ण को अनुस्वारागम हो ॥४॥

## समः[६] सुटि[७] ॥ ५ ॥

समो रुः स्यात् सुटि परे। (सम्पुम्कानां सो वक्तव्यः) ॥ संस्कर्त्ता। सँस्सकर्त्ता ॥ सुट् परे हो तो सम् के मकार को रु आदेश हो ॥ ५ ॥

## [६]पुमः [७]खय्यम्परे[७] ॥ ६ ॥

अम्परे खयि पुम्शब्दस्य रुः स्यात्। पुंस्कोकिलः। पुँस्कोकिलः । पुंस्फलम् ॥ पुँस्फलम् ॥ अम्परक खय् परे हो तो पुम् शब्द के मकार को रु आदेश हो ॥ ६ ॥

## नश्छव्यप्रशान् ॥ ७ ॥

नः[६], छवि[७], अ०न्[१]। अम्परे छवि नान्तस्य पदस्य रुः स्यात्, नतु प्रशान् शब्दस्य। भवांश्छादयति। भवांश्चिनोति। भवांस्तरति । संश्च ॥ अम्परक छव् प्रत्याहार परे हो तो प्रशान् भिन्न नकारान्त पद को रु आदेश हो ॥ ७ ॥

## उभयथर्क्षु[१] ॥ ८ ॥

उ० था(अ), ऋक्षु[७] । ऋक्ष्वम्परे छवि नकारस्य वा रुः स्यात्। पशून् तांश्चक्रे। पशून् तांश्चक्रे ॥ अम् परक छव् परे हो तो ऋग्वेद विषयक नकार को विकल्प से रु हो ॥

## दीर्घादटि समानपादे ॥ ९ ॥

दी० त्[५], अटि[७], स० दे[७] । ऋक्षु दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम्। देवाँ अच्छा सुमती। महाँ इन्द्रो य ओजसा। आदित्यान् याचिषामहे ॥ समानपदमें अट् परे हो तो दीर्घ से परे पदान्तनकारको विकल्पसे रुत्वादेश हो॥

## नॄन्[१] पे[७] ॥ १० ॥

नॄनित्यस्य नस्य रुर्वा स्यात् पकारे परे । नॄँः पाहि । नॄंः पाहि। नॄन् पाहि ॥ पकार परे हो तो नॄन् के नकार को विकल्प से रुत्व हो ॥१०॥

## स्वतवान्[१] पायौ[७] ॥ ११ ॥

पायौ स्वतवानित्यस्य नस्य रुः स्यात्। स्वतवाँः पायुरग्ने! ॥ पायु शब्द परे हो तो स्वतवान् शब्द के नकार को रुत्वादेश हो ॥ ११ ॥

## कानाम्रेडिते ॥१२॥

कान्[1], आ० ते[7] । कान्नकारस्य रुः स्यादाम्रेडिते परे । कांस्कानाह्वयति । काँस्कान् भोजयति ॥ आम्रेडित परे होतो कान् के नकार को रुत्वादेश हो ॥१२॥

## ढो ढे लोपः ॥१३॥

ढः[6], ढे[7],लोपः[1] । ढस्य लोपः स्याद् ढे परे । भीढम् । लीढम ॥ ढकार का लोपहो ढकार परे होतो ॥ (८।२।४०) इस सूत्र से तकारकेस्थानमें धकार तथा (८।२।३१) इस सूत्रसे हकार को ढकारादेश होता है ॥१३॥

## रो रि ॥१४॥

रः[6], रि[7] । रेफस्य रेफे परे लोपः स्यात् । नीरक्तम् । दूरुकम् ॥ रेफ परे होतो रेफ का लोपहो । (६।३।१११) इस सूत्र से निर् और दुर् को दीर्घ हुआ ॥१४॥

## खरवसानयोर्विसर्जनीयः ॥१५॥

ख०योः[7], वि०यः[1] । खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात् पदान्ते । वृक्षश्छादयति । पुरुषः ॥ खर् प्रत्यहार परे हो तथा अवसान में पदान्त रेफको विसर्जनीय आदेश हो ॥ १५॥

## रोः[6] सुपि[7] ॥ १६ ॥

सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यरेफस्य । पयःसु । यशःसु । सर्पिःषु ॥ सुप् विभक्ति परे हो तो रु के रेफ को ही विसर्जनीयादेश हो ॥१६॥

## भोभगोअघोअपूर्वस्य योऽशि ॥ १७ ॥

भो०स्य[6], यः[1], अशि[7] । एतत् पूर्वस्य रोर्यादेशः स्यादशि परे । भो आगच्छ । (८।३।१९) भगो अत्र । अघो अत्र । अवर्णपूर्वस्य । पुरुषा यान्ति ॥ अश् परे होतो भोस् भगोस् अघोस् तथा अवर्ण है पूर्व जिसके ऐसे रु के रेफ को यकारादेश हो ॥१७॥

## व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥ १८ ॥

व्योः[6], ल०रः[1], शा०स्य[6] । पदान्तयोर्यकारवकारयोर्लघूच्चारणौ वयौ वा स्याताम् अशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः । भोयत्र । भो अत्र । भगोयत्र । भगो अत्र । अघोयत्र अघो अत्र । कयास्ते । क आस्ते । असावादित्यः । असा आदित्यः ॥ शाकटायन के मत में अश् परे हो तो भोस् भगोस् अघोस् और अवर्ण है पूर्व जिसके ऐसे पदान्त यकार तथा वकारको यकार और वकारादेशहो

## लोपः[1] शाकल्यस्य[6] ॥ १९ ॥

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशिपरे । बाल आस्ते । बालयास्ते । असा उद्धर । असावुद्धर । द्वावमू । द्वा अमू ॥ अश् परे होतो अवर्ण पूर्व है जिस के ऐसे पदान्त यकार तथा वकार का विकल्पसे लोप हो ॥१९॥

## ओतो गार्ग्यस्य ॥ २० ॥

ओतः[5], ग०स्य[6] । ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । गार्ग्य ग्रहणं सम्मानार्थम् । भो अच्युत । भयाच्युत ॥ अश् परे हो तो पदान्त लघु प्रयत्न यकार का नित्य लोप हो ॥२०॥

## उञि[७] च[अ] पदे[७] ॥ २१ ॥

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे । स उ एकाग्निः ॥ उञ् पद परे हो तो अवर्ण पूर्वक पदान्त यकार और वकारका लोपहो ॥२१॥

## हलि[७] सर्वेषाम्[६] ॥ २२ ॥

भो भगो अघो अपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन । भो विद्वन् ! भगो नमस्ते । अघो याहि । वाला इनन्ति ॥ हल् परे हो तो सर्व आचार्यों के मत में भो, भगो, अघो और अवर्ण पूर्वक लघु अलघु उच्चारण यकार का लोप हो ॥२२॥

## मोऽनुस्वारः ॥ २३ ॥

मः[६], अ०रः[१] । मान्तस्य पदस्यानुस्वारः स्याद्धलि । भवन्तं वन्देऽहम् । वनं याति न यातरः ॥ हल् परे होतो पदान्त मकारको अनुस्वार आदेश हो ॥२३॥

## नश्चापदान्तस्य झलि ॥ २४ ॥

नः[६], च(अ), अ०स्य[६], झलि[७] । नस्य मस्य चापदान्तस्यानुस्वारः स्याद् झलि । यशांसि । पयांसि । आक्रंस्यते । अधिजिगांसते ॥झल् परे हो तो अपदान्त नकार और मकारको अनुस्वार हो ॥२४॥

## मोराजि समः क्वौ ॥ २५ ॥

मः[६], राजि[७], समः[६], क्वौ[७] । क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ क्विप् प्रत्ययान्त राजति धातु परे होतो सम्‌के मकार को मकारही रहे॥२५॥

## [७]हेमपरे[७] वा[अ] ॥ २६ ॥

मपरेहकारे परे मस्य मो वा । ( ह्मल, ह्मल चलने) । किम् ह्मलयति । किंह्मलयति ॥ (यवलपरे यवला वा) कियँ ह्यः । किंह्यः । किवँ ह्वलयति । किंह्वलयति । किलँ ह्लादयति । किंह्लादयति ॥ मकार है परे जिस से ऐसा हकार परे होतो मकार को विकल्प से मकार ही हो ॥२६॥

## [७]नपरे नः[१] ॥ २७ ॥

नपरे हकारे परे मस्य नो वा । किन्ह्नुते । किंह्नुते ॥ नकार परक हकार परे हो तो मकार को विकल्प से नकारादेश हो ॥२७॥

## [६]ङणोः [१]कुक्टुक्[१] शरि[७] ॥ २८ ॥

ङकारणकारयोः कुक् टुकावागमौ वा स्यातां शरि ॥ (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्) प्राङ्ख् षष्ठः । प्राङ्क्षष्ठः प्राङ् षष्ठः । सुगण्ठ् षष्ठः । सुगुणट्षष्ठः । सुगण्षष्ठः ॥ शर् परे होतो पदान्त ङकार और णकारको कुक् और टुक्का आगमहो ॥

## ङः[५] सि[७] धुट्[१] ॥ २९ ॥

ङात्परस्य सस्य धुड् वा । षट्त्सन्तः । षट् सन्तः ॥ ङकारसे परे सकार को विकल्प से धुट्का आगम हो ॥२९॥

## नश्च ॥ ३० ॥

नः[1], च (अ)। नात्परस्य सस्य धुड् वा। असिन्त्सधस्थे। असिन् सधस्थे॥ नकारसे परे सकारको विकल्पसे धुट्का आगम हो ॥३०॥

## शि[7] तुक्[1] ॥ ३१ ॥

नस्य पदान्तस्य शकारे परे तुग्वा स्यात्। (शश्छोऽटि) इतिछत्वविकल्पः। पदो झरो झरीति च लोपः। सञ्छम्भुः, सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः॥ शकारपरे हो तो नकारान्त पदको विकल्पसे तुक् का आगम हो ॥३१॥

## ङमोह्रस्वादचिङमुण्नित्यम् ॥ ३२ ॥

ङमः[5], ह्रस्वात्[5], अचि[7], ङमुट्[1], नित्यम्[1]। ह्रस्वात् परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः। कुर्वन्नास्ते॥ ह्रस्वसे परे जो ङम् तदन्त जो पद उससे परे अच्को नित्य ङमुट्का आगमहो ॥३२॥

## मय उञो वो वा ॥ ३३ ॥

मयः[5], उञः[6], वः[1], वा(अ)। मयः परस्य उञो वो वा स्यादचि परे। शमु अस्तु वेदिः। शम्वस्तु वेदिः। किमु उक्तम्। किम्वुक्तम्॥ अच्परे हो तो मय् से परे उञ् को विकल्पसे वकारादेश हो ॥३३॥

## विसर्जनीयस्य[6] सः[1] ॥३४॥

विसर्जनीयस्य सः स्यात् खरि। वृक्षश्छादयति। बालस्तिष्ठति। पुरुषश्चिनोति फलानि॥ खर्परे होतो विसर्जनीय को सकारादेश हो ॥३४॥

## शर्प्परे[7] विसर्जनीयः[1] ॥ ३५ ॥

शर्परे खरि विसर्जनीयस्य विसर्जनीयादेशः स्यात्। पुरुषः त्सुरम्। घना घनःक्षोभणः॥ शर्परक खर्परे होतो विसर्जनीय को विसर्जनीय आदेश हो ॥३५॥

## वा[अ] शरि[7] ॥३६॥

शरि परे विसर्जनीयस्य विसर्जनीयादेशो वा स्यात्। बालः शेते। बालश्शेते। वृक्षः षष्ठः। वृक्षष्षष्ठः। सर्पाः सर्पन्ति। सर्पास्सर्पन्ति॥ शर्परे होतो विसर्जनीयको विकल्प से विसर्जनीयादेश हो ॥३६॥

## [7]कुप्वोः≍क≍पौ[1] च[अ] ॥ ३७॥

कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयावादेशौ स्याताम्, चाद् विसर्गः। नॄँ≍पाहि। नॄँ≍पाहि। नॄँःपाहि। नॄँः पाहि। नॄन् पाहि॥ कवर्ग तथा पवर्ग परे होतो विसर्जनीय को क्रमसे जिह्वामूलीय और उपध्मानीय आदेशहों॥

## सोऽपदादौ ॥ ३८ ॥

सः[1], अ०दौ[7]। विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः। (पाशकल्पक-काम्येष्विति वाच्यम्)॥ पयस्पाशम्। पयस्कल्पम्। पयस्कम्। पयस्काम्यति॥ अप-दादि में कवर्ग तथा पवर्ग परे होतो विसर्जनीय को सकारादेश हो ॥ ३८॥

## इणः[5] षः[1] ॥ ३९ ॥

इणः परस्य विसर्गस्य षः स्यादपदाद्योः कुप्वोः परयोः। सर्पिष्पाशम्। सर्पिष्क-

णम्। सर्पिष्कम्। सर्पिष्कास्यति ॥ अपदादि में कवर्ग और पवर्ग परे होतो इण् से परे विसर्ग को षकारादेश हो ॥ ३९ ॥

## नमस्पुरसोर्गत्योः ॥ ४० ॥

न०सोः[६], गत्योः[६]। गतिसंज्ञकयोरनयोर्विसर्गस्य सः स्यात् कुप्वोः परयोः। नमस्करोमि। साक्षात् प्रभृतित्वात् कृञि योगे वा गति सञ्ज्ञा। तदभावे नमः करोमि। (पुरोऽव्ययम्) इति नित्यं गति संज्ञा। पुरस्कृत्य। पुरस्करोति ॥ कवर्ग तथा पवर्ग परे होतो गति संज्ञक नमस् और पुरस् के विसर्ग को सकारादेश हो ॥४०॥

## [६]इदुदुपधस्य [६]चाऽप्रत्ययस्य[६] ॥ ४१ ॥

इकारोकारोपधस्याऽप्रत्ययस्य विसर्जनीयस्य षः स्यात् कुप्वोः परयोः। निष्कृतम्। निष्पीतम्। दुष्कृतम्। दुष्पतिम्। बहिष्कृतम्। बहिष्पीतम् ॥ (मुहुसः प्रतिषेधः) ॥ मुहुः कामा ॥ कवर्ग और पवर्ग परे होतो प्रत्यय भिन्न इकार उकार हैं जिसकी उपधा में ऐसे विसर्जनीय को षकारादेश हो ॥ ४१ ॥

## तिरसोऽन्यतरस्याम् ॥ ४२ ॥

ति०सः[६], अ०म् (अ)। तिरसो विसर्गस्य सो वा स्यात् कुप्वोः परयोः। तिरस्कर्त्ता। तिरः कर्त्ता। तिरस्कर्त्तुम्। तिरः कर्त्तुम् ॥ कवर्ग और पवर्ग परे हों तो तिरस के विसर्ग को विकल्प से सकारादेश हो ॥ ४२ ॥

## द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥ ४३ ॥

द्वि०तुः(लु.)[६], इति(अ), कृ०र्थे[७], । कृत्वोर्थे वर्तमानानामेषां विसर्गस्य षः स्याद् वा कुप्वोः परयोः। द्विष्करोति। द्विः करोति। त्रिष्करोति। त्रिःकरोति। चतुष्करोति। चतुः करोति। द्विष्पचति। द्विःपचति। त्रिष्पचति। त्रिः पचति। चतुष्पचति। चतुः पचति ॥ कवर्ग और पवर्ग परे होतो कृत्वोर्थ में वर्तमान द्विस्, त्रिस् और चतुर् शब्द के विसर्ग को विकल्प से षकारादेश हो ॥ ४३ ॥

## इसुसोः[६] सामर्थ्ये[७] ॥ ४४ ॥

इसुसोर्विसर्गस्य षः स्याद् वा सामर्थ्ये कुप्वोः परयोः। सर्पिष्करोति। सर्पिः करोति। धनुष्करोति। धनुः करोति ॥ सम्बन्धार्थ में कवर्ग तथा पवर्ग परे होतो इस् और उस् के विसर्ग को विकल्प से षकारादेश हो ॥ ४४ ॥

## [१]नित्यं [७]समासेऽनुत्तरपदस्थस्य[६] ॥ ४५ ॥

इसुसोर्विसर्गस्याऽनुत्तरपदस्थस्य समासे नित्यं षत्वं स्यात् कुप्वोः परयोः। सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम् ॥ समास में कवर्ग और पवर्ग परे होतो अनुत्तरपदस्थ इस् और उस् के विसर्ग को नित्य षत्वादेश हो ॥४५॥

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥

अतः[५], कृ०षु[७] अ०स्य[६]। अकारादुत्तरस्यानव्ययविसर्गस्य समासे नित्यं सः स्यात् करोत्यादिषु परेषु न तूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयस्कुशा। अयस्कर्णी ॥ समास विषय में कृ, कमि, कंस, कुम्भ, पात्र, कुशा, और कर्णी परे होतो अकार से परे अव्यय भिन्न शब्दके अनुत्तरपदस्थ विसर्ग को नित्य सकारादेश हो ॥ ४६ ॥

## अधःशिरसी[1] पदे[7] ॥ ४७ ॥

अनयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। मयूरव्यंसकादित्वात् समास इति। अधस्पदमित्यत्र तु षष्ठीसमासः॥ समास में पद शब्द परे होतो अधस् और शिरस् शब्द के अनुत्तरपदस्थ विसर्ग को सकारादेश हो ॥ ४७ ॥

## कस्कादिषु[7] च[अ] ॥ ४८ ॥

एभ्विण उत्तरस्य विसर्गस्य षः सकारो वा यथायोगमादेशः कुप्वोः परतः स्यात्। कांस्कान, काँस्कान्। भ्रातुष्पुत्रः॥ कस्कादि गणपठित शब्दों के विसर्जनीय को यथा योग्य षकार या सकारादेश हो ॥ ४८ ॥

## [7]छन्दसि [अ]वाऽप्राम्रेडितयोः[7] ॥ ४९ ॥

छन्दसि विसर्गस्य सो वा स्यात् कुप्वोः परयोः, प्रशब्दमाम्रेडितं च विहाय। अग्ने त्रातर्ऋतस्कविः। गिरिर्न विश्वतस्पृथुः। नेह। वसुनः पूर्व्यः पतिः॥ प्र और आम्रेडित संज्ञक को छोड़कर कवर्ग तथा पवर्ग परे होतो छन्दो विषय में विसर्ग को विकल्प से सकारादेश हो॥ ४९ ॥

## कःकरत्करतिकृधिकृतेष्वनदितेः ॥५०॥

कः०षु[7], अ०तेः[6]। छन्दस्येषु परेषु अनदितेर्विसर्गस्य सादेशः स्यात्। अपस्कः। विश्वतस्करत्। सुपेशस्करति। उरुणस्कृधि। नस्कृतम्॥ छन्दो विषय में कः, करत्, करति, कृधि और कृत शब्द परेहोतो अदिति से भिन्न शब्दके विसर्गको सकारादेश हो॥

## पञ्चम्याः परावध्यर्थे ॥ ५१ ॥

प०म्याः[6], परौ[7], अ०र्थे[7]। छन्दसि विषये पञ्चमीविसर्गस्य सः स्यादुपरि भावार्थे परिशब्दे परे। दिवस्परि प्रथमं जज्ञे॥ अध्यर्थ (ऊपरी भाग) में परि शब्द परे होतो छन्दो विषय में पञ्चमी के विसर्ग को सकारादेश हो ॥ ५१ ॥

## [7]पातौ च[अ] बहुलम्[2] ॥ ५२ ॥

पातौ धातौ परे पञ्चमी विसर्गस्य बहुलं छन्दसि सादेशः स्यात्। दिवस्पातु। परिषदः पातु॥ छन्दो विषय में पा धातु परे होतो पञ्चमी के विसर्ग को बहुलता से सकारादेश हो॥ ५२ ॥

## षष्ठ्याः[6] पतिपुत्रपृष्ठपारपदपयस्पोषेषु[7] ॥ ५३ ॥

छन्दस्येषु परेषु षष्ठीविसर्गस्य सादेशः स्यात्। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमस्पारमस्य। परिवीत इडस्पदे। दिवस्पयोदिधिषाणः। रायस्पोषेण मिमीय॥ छन्दो विषय में पति, पुत्र, पृष्ठ, पार, पद, पयस् और पोष शब्द परे होतो षष्ठी के विसर्ग को सकारादेश हो ॥ ५३ ॥

## इडायाः[6] वा[अ] ॥ ५४ ॥

छन्दसि विषये इडायाः षष्ठीविसर्गस्य पतिपुत्रादिषु परेषु वा सादेशः स्यात्। इडायास्पुत्रः, इडायाः पुत्रः। इडायास्पतिः, इडायाः पतिः॥ छन्दो विषय में पति पुत्रादि शब्द परे होतो इडाशब्द से परे षष्ठी के विसर्ग को विकल्प से सकारादेशहो॥

## अपदान्तस्य[6] मूर्द्धन्यः[1] ॥ ५५ ॥

आपादपरिसमाप्तेरधिकारोऽयं विज्ञेयः ॥ अपदान्त स को मूर्द्धन्यादेश हो यह इस पाद की समाप्ति पर्यन्त अधिकार जानना चाहिये ॥ ५५ ॥

## सहेः साडः[6] सः[1] ॥ ५६ ॥

साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः स्यात् । जलाषाट् । जलं सहत इत्यर्थे ॥ साड् रूप सह धातु के सकार को मूर्द्धन्यादेश हो ॥ ५६ ॥

## इण् कोः[5] ॥ ५७ ॥

इत्यऽधिकृत्य कार्य्यं स्यात् ॥ इण् और कवर्ग से परे कार्य्य हो यह अधिकार इस पाद की समाप्ति तक है ॥ ५७ ॥

## [7]नुम्विसर्जनीयशर्व्यवायेऽपि[अ] ॥ ५८ ॥

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यामुत्तरस्य सस्य मूर्धन्यादेशः स्यात् । नुम्व्यवाये–सर्पींषी । हवींषि विसर्जनीयव्यवधाने–सर्पिःषु । हविःषु । शर्व्यवाये–सर्पिष्षु । हविष्षु ॥ नुम् विसर्जनीय और शर् के व्यवाय (व्यधान) में भी सकार को मूर्धन्यादेश हो॥

## आदेशप्रत्यययोः[6] ॥ ५९ ॥

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः । सिषेव । सुष्वाप । कविषु । प्रभुषु । कर्तृषु । बालेषु ॥ इण् और कवर्ग से परे आदेश तथा प्रत्यय के सकार को मूर्धन्यादेश हो ॥ ५९ ॥

## शासिवसिघसीनां[6] च[अ] ॥ ६० ॥

इण्कुभ्यां परस्यैषां सस्य षादेशः स्यात । शिष्टः । शिष्टवान् । उषितः । उषितवान् । घसि—जक्षतुः । जक्षुः ॥ इण् और कवर्ग से परे शासु वस घस्लृ धातुओं के सकार को षत्वादेश हो ॥ ६० ॥

## स्तौतिण्योरेवषण्यभ्यासात् ॥ ६१ ॥

स्तौ०योः[6], एव(अ), षणि[7], अ०त्[5] । अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्—षभूते सनि परे । तुष्टूषति । ण्यन्तस्य सिषेवयिषति । सिषञ्जयिषति । सुष्वापयिषति ॥ षभूत सन् प्रत्यय परे हो तो अभ्यास इण् से परे स्तौति और ण्यन्त धातु के ही सकार को षत्वादेश हो ॥ ६१ ॥

## सः[1] स्विदिस्वदिसहीनां[6] च[अ] ॥ ६२ ॥

अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव स्यात् षभूतेसनि परे । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ॥ ष भूत सन् प्रत्यय परे हो तो ण्यन्तास्विदि स्वदि तथा सहि धातुओं के अभ्यास इण् से परे सकार को सकारादेश ही हो ॥६२॥

## प्राक् सितादड्व्यवायेऽपि ॥ ६३ ॥

प्राक्(अ), सि० द्[5], अ० ये[7], अपि(अ) । से वसितेत्यत्र सितशब्दात् प्राग् ये सुनोत्यादयस्तेषामड् व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् ॥ परिनिविभ्यः ७० सूत्र में कथित सित शब्द से पूर्व २ अट् के व्यवधान में भी षत्वादेश हो ॥

## स्थादिष्वभ्यासेन चाभ्यासस्य॥६४॥

स्था० षु[७], अ० न[१], च(अ), अ० स्य[१]। प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्, एषामेव चाभ्यासस्य, न तु सुनोत्यादीनाम्। परितष्ठौ। अभिषिषेणयिषति॥ आगे के सूत्र में स्थादि धातुओं के अभ्यास के व्यवधान में जो सकार उसको तथा अभ्यास के सकार को ही षत्वादेश हो न कि सुनोत्यादिकों को॥६४॥

## [४]उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनय-सेधसिचसञ्जस्वञ्जाम्[६]॥ ६५॥

उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्। अभिषुणोति, परिषुणोति। अभिषुवति, परिषुवति। अभिष्यति, परिष्यति। अभिष्टौति, परिष्टौति। अभिष्टोभते, परिष्टोभते। अभिष्ठास्यति, परिष्ठास्यति। अभिषेणयति, परिषेणयति। अभिषेधति, परिषेधति। अभिषिञ्चति, परिषिञ्चति। अभिषजति, परिषजति। अभिष्वजते, परिष्वजते॥ उपसर्ग निमित्त से परे सुनोति आदि धातुओं के सकार को षत्वादेश हो॥६५॥

## सदिरप्रतेः॥ ६६॥

सदिः[१], अ० तेः[४]। प्रतिभिन्नादुपसर्गात्सदेः सस्य षादेशः स्यात्। निषीदति। विषीदति॥ प्रतिभिन्न उपसर्गपूर्वक सदि धातु के स को षादेश हो॥ ६६॥

## स्तन्भेः[५]॥ ६७॥

स्तन्भेः सौत्रस्य सस्य षादेशः स्यात्। योगविभाग उत्तरार्थः। अभिष्टभ्नाति। परिष्टभ्नाति॥ उपसर्ग पूर्वक सूत्रस्थ स्तन्भु धातु के स को ष हो॥६७॥

## अवाच्चाऽऽलम्बनाऽऽविदूर्ययोः॥६८॥

अ० त्[५], आ० योः[७]। अवादुत्तरस्य स्तम्भेः सस्य षादेशः स्यादालम्बने आविदूर्ये चार्थे। आलम्बनम्—आश्रयणम्। विदूरं विप्रकृष्टम्, तदन्यदविदूरम्, तस्य भाव आविदूर्यम्। अवष्टभ्यास्ते। अवष्टब्धा सेना। आसन्नेत्यर्थः॥ आलम्बन और आविदूर्य अर्थ में अव उपसर्गपूर्वक स्तम्भु धातु के सकार को षकारादेश हो॥ ६८॥

## वेश्चस्वनो भोजने॥ ६९॥

वेः[१], च(अ), स्वनः[६], भो० ने[७]। व्यवाभ्यामुत्तरस्य स्वनतेः सस्य षादेशः स्याद् भोजने। विष्वणति। अवष्वणति। सशब्दं भुङ्क्ते॥ वि तथा अव उपसर्ग पूर्वक स्वन धातु के सकार को षकारादेश हो भोजन अर्थ में॥ ६९॥

## परिनिविभ्यः[५] सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्[६]॥ ७०॥

परिनिविभ्यः परेषामेषां सस्य षादेशः स्यात्। परिषेवते। निषेवते। विषेवते। सित। परिषितः। निषितः। विषितः। सय। परिषयः। निषयः। विषयः। सिवु। परिषीव्यति। निषीव्यति। विषीव्यति। सह। परिषहते। निषहते। विषहते। सुट्। परिष्करोति। स्तु। परिष्टौति। निष्टौति। विष्टौति। स्वञ्ज। परिष्वजते। निष्वजते। विष्वजते। दंशसञ्जस्वञ्जामिति न लोपः॥ परि, नि और विपूर्वक सेव आदि धातुओं के सकार को षकारादेश हो॥ ७०॥

## [6]सिवादीनां [7]वड्व्यवायेऽपि[8] ॥ ७१ ॥

परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यषीव्यत्, पर्यसीव्यत् । इत्यादि ॥ अट् के व्यवधान में भी परि, नि और वि उपसर्गपूर्वक सिवादि (सिवु, सह, सुट्, स्तु, स्वञ्ज) धातुओं के सकार को विकल्प से षकारादेश हो ॥

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥

अ० स्यः[4], स्यन्दतेः[6], अ० षु[7] । पञ्चभ्यः परस्याऽप्राणि कर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते, अनुस्यन्दते । विष्यन्दते, विस्यन्दते । परिष्यन्दते, परिस्यन्दते । अभिष्यन्दते, अभिस्यन्दते । निष्यन्दते, निस्यन्दते वा जलम् ॥ प्राणि भिन्न अर्थ में अनु, वि, परि, अभि और नि उपसर्ग से परे स्यन्दू धातु के सकार को विकल्प से षकारादेश हो ॥ ७२ ॥

## वेः स्कन्देरनिष्ठायाम् ॥ ७३ ॥

वेः[4], स्कन्देः[6], अ०म्[7] । वेरुत्तरस्य स्कन्देस्सस्य षो वा स्यादनिष्ठायाम् । विष्कन्ता, विस्कन्ता । विष्कन्तुम्, विस्कन्तुम् । विष्कन्तव्यम्, विस्कन्तव्यम् ॥ निष्ठा भिन्न प्रत्यय परे हो तो स्कन्दिर धातु के सकार को विकल्प से षकारादेश हो ॥ ७३ ॥

## परेश्च ॥ ७४ ॥

परेः[4], च(अ) । अस्मात्परस्य स्कन्दतेः सस्य षो वा स्यात् । परिष्कन्दति, परिस्कन्दति । परिष्कन्ता, परिस्कन्ता । परिष्कन्तुम्, परिस्कन्तुम् ॥ परि उपसर्ग से परे स्कन्दिर् धातु के सकार को विकल्प से षकारादेश हो ॥७४॥

## परिस्कन्दः[1] प्राच्यभरतेषु[7] ॥ ७५ ॥

प्राच्यभरतेषु प्रयोगविषयेषु परिस्कन्द इति निपात्यते । परिस्कन्दः । अन्यत्र, परिष्कन्दः ॥ प्राच्य भरत विषयक प्रयोगों में परिस्कन्द शब्द निपातित है ॥ ७५ ॥

## स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७६ ॥

स्फु० त्योः[6], नि० भ्यः[5] । निर्निविभ्यः परस्य स्फुरति स्फुलत्योः सस्य षो वा स्यात् । निष्फुरति, निस्स्फुरति । निष्फुरति, निस्फुरति । विष्फुरति, विस्फुरति । निष्फुलति, निस्स्फुलति । निष्फुलति, निस्फुलति । विष्फुलति, विस्फुलति ॥ निस्, नि और वि उपसर्ग से परे स्फुरति और स्फुलति के सकार को विकल्प से षकारादेश हो ॥७६॥

## वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥

वेः[4], स्क० तेः[6], नि० म्[2] । वेः परस्य स्कभ्नातेः सस्य षादेशः स्यात् । विष्कभ्नोति, विष्कभ्नाति ॥ वि पूर्वक स्कभ्नाति धातुके सकारको षकारादेश नित्यहो ॥७७॥

## इणः षीध्वं लुङ्लिटां धोऽङ्गात् ॥ ७८ ॥

इणः[4], षी०म्[6], धः[6], अ० त्[5] । इणन्तादङ्गात्परेषां षीध्वं लुङ्लिटां धस्य मूर्धन्यादेशः स्यात् । च्योषीढ्वम् । अच्योढ्वम् । चकृढ्वे ॥ इणन्त अङ्ग से परे षीध्वम् लुङ् और लिट् के धकार को मूर्धन्यादेश हो ॥ ७८ ॥

## विभाषेटः ॥ ७९ ॥

वि० षा[1], इटः[5] । इणः परो य इट् तस्मात्परेषां षीध्वं लुङ्लिटां धस्य वा मूर्धन्यादेशः स्यात् । लविषीढ्वम्, लविषीध्वम् । अलविढ्वम्, अलविध्वम् । लुलुविढ्वे, लुलुविध्वे ॥ इणन्त अङ्ग से परे जो इट् उससे परे षीध्वं लुङ् और लिट् के धकार को विकल्प से मूर्धन्यादेश हो ॥ ७६ ॥

## [7]समासेऽङ्गुलेः[5] सङ्गः[1] ॥ ८० ॥

अङ्गुलिशब्दात् सङ्गस्य सस्य मूर्धन्यादेशः स्यात् समासे । अङ्गुलिषङ्गः ॥ समास में अङ्गुलि शब्द से परे सङ्ग शब्द के सकार को षकारादेश हो ॥ ८० ॥

## भीरोः[5] स्थानम्[1] ॥ ८१ ॥

भीरोरुत्तरस्य स्थानस्य सस्य षादेशः स्यात् समासे । भीरुष्ठानम् ॥ समास में भीरु शब्द से परे स्थान शब्द के सकार को षकारादेश हो ॥ ८१ ॥

## अग्नेः[5] स्तुत् स्तोमसोमाः[1] ॥ ८२ ॥

अग्नेरुत्तरस्यैषां सस्य षादेशः स्यात् समासे । अग्निष्टुत् । अग्निष्टोमः । अग्निषोमौ ॥ समासमें अग्नि शब्दसे परे स्तुत् स्तोम और सोम के सकार को षकारादेशहो॥

## ज्योतिरायुषः[5] स्तोमः[1] ॥ ८३ ॥

आभ्यामुत्तरस्य स्तोमस्य सस्य षादेशः स्यात् समासे । ज्योतिष्टोमः । आयुष्टोमः ॥ समास में ज्योतिस् और आयुस् शब्द से परे स्तोम के सकार को सकारादेश हो ॥८३॥

## मातृपितृभ्यां[5] स्वसा[1] ॥ ८४ ॥

आभ्यामुत्तरस्य स्वसुः सस्य षादेशः स्यात् समासे । मातृष्वसा पितृष्वसा ॥ समास में मातृ और पितृ शब्द से परे स्वसृ के सकार को षकारादेश हो ॥ ८४ ॥

## मातुः पितुर्भ्यामन्यतरस्याम् ॥ ८५ ॥

मा०म्[x], अ०म्(अ) । आभ्यामुत्तरस्याः स्वसुः सस्य षो वा स्यात् समासे । मातुःष्वसा, मातुः स्वसा । पितुः ष्वसा, पितुःस्वसा ॥ समास में मातृ और पितृ शब्द से परे स्वसृ के सकार को विकल्प से षकारादेश हो ॥ ८५ ॥

## अभिनिसः[5] स्तनः[1] शब्दसंज्ञायाम्[1] ॥ ८६ ॥

शब्द संज्ञायामस्माद्धुत्तरस्य स्तनेः सस्य षादेशः स्यात् । अभिनिष्टानः-वर्णः ॥ शब्द संज्ञा गम्यमान होतो अभिनिस् पूर्वक स्तन धातुके सकारको षकारादेशहो ॥८६॥

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥८७॥

उ०म्[5], अस्तिः[1], य० रः[1] । उपसर्गेभ्यः प्रादुसश्चोत्तरस्यास्तेः सस्य षादेशः स्याद् यकारेऽचि च परे । अभिषन्ति । निषन्ति । विषन्ति । प्रादुःषन्ति । अभिष्यात् ॥ यकार और अच् परे हों तो उपसर्ग और प्रादुस् शब्द से परे अस्ति के सकार को षकारादेश हो ॥८७॥

## सुविनिदुर्भ्यः[5] सुपिसूतिसमाः[1] ॥८८॥

एभ्यः परस्य सुप्यादेः सस्य षादेशः स्यात् । सुषुप्तः । निःषुप्तः । विषुप्तः । सूतिरिति स्वरूपग्रहणम् । सुषूतिः । विषूतिः । निःषूतिः । दुःषूतिः । सम । सुषमम् । विषमम् ।

निःषमम् दुःषमम् ॥ सु, वि, निर् और दुर् से परे सुपि, सूति और सम् के सकार को षकारादेश हो ॥८८॥

## निनदीभ्यां स्नातेः कौशले ॥८९॥

नि०म्[५], स्नातेः[६], कौ०ले[७] । आभ्यामुत्तरस्य स्नातेः सस्य षादेशः स्यात् कौशले गम्ये । निष्णातः—शास्त्रेषु । नद्यां स्नातीति नदीष्णः ॥ कुशलता गम्यमान होतो नि और नदी शब्दसे परे स्नाति धातुके सकारको षकारादेश हो ॥८९॥

## सूत्रं[१] प्रतिष्णातम्[१] ॥९०॥

प्रतिष्णामिति निपात्यते सूत्रं चेत् स्यात् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः ॥ सूत्र अर्थमें प्रतिष्णात शब्द निपातित है ॥९०॥

## कपिष्ठलो गोत्रे ॥९१॥

क०लः[१], गोत्रे[७] । गोत्रविषये कपिष्ठल इति निपात्यते । कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः ॥ गोत्रविषयमें कपिष्ठल शब्दनिपातित है ॥९१॥

## प्रष्ठोऽग्रगामिनि ॥९२॥

प्रष्ठः[१], अ०नि[७] । अग्रगामिन्यर्थे प्रष्ठ इति निपात्यते । प्रतिष्ठित इति प्राष्ठो गौः । अग्रतो गच्छतीत्यर्थः ॥ अग्रगामि अर्थमें प्रष्ठ शब्द निपातित है ॥९२॥

## वृक्षासनयोर्विष्टरः ॥९३॥

वृ०योः[७], वि०रः[१] । वृक्षे आसने च वाच्ये विपूर्वस्य स्तृणातेः षत्वं निपात्यते । विष्टरः—वृक्षः, आसनं वा ॥ वृक्ष और आसन अर्थमें विपूर्वक स्तृणाति धातु को षत्व करके विष्टर शब्द निपातन कियाहै ॥९३॥

## छन्दोनाम्नि[७] च[अ] ॥९४॥

अत्रापि विष्टरो निपात्यते । विष्टारपङ्क्तिः छन्दः । विष्टारो-बृहती-छन्दः ॥ छन्दो नाम में भी विष्टर शब्द निपातित है ॥९४॥

## गवियुधिभ्यां[५] स्थिरः[१] ॥९५॥

आभ्यामुत्तरस्थिरस्य सस्य षादेशः स्यात् । गविष्ठिरः । युधिष्ठिरः ॥ गवि और युधि शब्दसे परे स्थिर शब्दके सकारको षकारादेश हो ॥९५॥

## विकुशमिपरिभ्यः[५] स्थलम्[१] ॥९६॥

एभ्य उत्तरस्य स्थलस्य सस्य षादेशः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ॥ वि, कु, शमि और परि शब्दसे परे स्थल शब्द के सकार को षकारादेश हो

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जि-पुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः[५] स्थः[६] ॥९७॥

एभ्य उत्तरस्य स्थस्य सस्य षादेशः स्यात् । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्येष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ॥ अम्बादि शब्दोंसे परे स्थके सकार को षकारादेश हो ॥९७॥

## सुषामादिषु[७] च[अ] ॥ ९८ ॥

सुषामादिषु शब्देषु सस्य षादेशः स्यात्। शोभनं साम यस्यासौ—सुषामा ब्राह्मणः। इत्यादि ॥ सुषामादि गणमें षकारको षकारादेश हो ॥९८॥

## एतिसंज्ञायामगात् ॥ ९९ ॥

एति[१], स०म्[७], अ०त्[५]। संज्ञायामेकारपरस्य सस्य षादेशः स्यात्, इण् कोरुत्तरस्यागकारात् परस्य। हरयः सेना यस्यासौ हरिषेणः। परितः सेना अस्य परिषेणः ॥ संज्ञाविषय में एत् परे हो तो गकार भिन्न इण् कवर्ग से परे सकार को षकारादेश हो

## नक्षत्राद्[५] वा[अ] ॥ १०० ॥

संज्ञायां विषये नक्षत्रवाचिनः शब्दाद् गकारादिण्कोरुत्तरस्य सस्य षो वादेशः स्यात्। रोहिणिषेणः, रोहिणिसेनः ॥ संज्ञाविषयमें एत् परे हो तो गकार वर्जित नक्षत्रस्थ इण् कवर्गसे परे सकारको विकल्पसे षकारादेश हो ॥१००॥

## ह्रस्वात्तादौ तद्धिते ॥ १०१ ॥

ह०त्[५], तादौ[७], त०ते[७]। ह्रस्वादुत्तरस्य सस्य षादेशः स्यात् तादौ तद्धिते परे। तरप्तमप्तयप्त्वतल्तस्त्यप इमानि प्रयोजयन्ति। सर्पिष्टरम्। सर्पिष्टमम्। चतुष्टयम्। सर्पिष्ट्वम्। सर्पिष्टा। सर्पिष्टः। आविष्ट्यो वर्धते ॥ तकारादि तद्धित परे हो तो ह्रस्व से परे सकारको षकारादेश हो ॥१०१॥

## निसस्तपतावनासेवने ॥ १०२ ॥

निसः[६], त०तौ[७], अ०ने[७]। निसः सस्य षादेशः स्यादनासेवने तपतौ परतः। आसेवनम्। पौनः पुन्यम्। निष्टपति सुवर्णम्। सकृदग्निं स्पर्शयतीत्यर्थः ॥ अनासेवन अर्थमें तप धातुपरे होतो निस्के सकारको षकारादेशहो ॥१०२॥

## युष्मत्तत्ततक्षुः ष्वन्तःपादम् ॥ १०३ ॥

यु०षु[७], अ०म्[१]। पादमध्यस्थस्य सस्य षादेशः स्यात्तकारादिष्वेषु परेषु। युष्मदादेशः त्वं त्वातेतवाः। त्रिभिष्ट्वं देव! सवितः!। ते भिष्ट्वा। आभिष्टे। अप्स्वग्ने! सधिष्टव। अग्निष्ट्विश्वम्। द्यावा पृथिवी निष्टतक्षुः ॥ युष्मद् तद् और ततक्षु तकारादि शब्दपरे होतो पादस्थ सकारको षकारादेश हो ॥१०३॥

## यजुष्येकेषाम् ॥ १०४ ॥

य०षि[७], ए०म्[६]। युष्मत्तत्ततक्षुषु परतः सस्य षोवा स्यात्। अर्चिभिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे। अर्चिभिस्त्वमित्यादि ॥ यजुर्वेद विषय में तकारादि युष्मद् तद् और ततक्षु परे होतो विकल्प से सकारको षकारादेश हो ॥१०४॥

## स्तुतस्तोमयोः[६] छन्दसि[७] ॥ १०५ ॥

छन्दस्यनयोः सस्य षो वा स्यात्। नृभिष्टुतस्य। नृभिःस्तुतस्य। गोष्टोमम्। गोस्तोमम् ॥ छन्दो विषय में स्तुत और स्तोम के सकार को विकल्प से षकारादेशहो ॥१०५॥

## पूर्वपदात्[५] ॥ १०६ ॥

पूर्वपदस्थान्निमित्तात् परस्य सस्य षो वा स्याच्छन्दसि। यदिन्द्राग्नी दिविष्ठः। युवं हिस्थः स्वर्पती ॥ छन्दो विषय में पूर्वपदस्थ निमित्त से परे सकार को विकल्प से षकारादेश हो ॥ १०३ ॥

## सुञः[6] ॥ १०७ ॥

छन्दसि पूर्वपदस्थान्निमित्तात् परस्य सुञो निपातस्य सस्य षः स्यात् । ऊर्ध्व ऊषुणः । अभीषुणः ॥ छन्दो विषय में पूर्वपदस्थ निमित्त से परे सुञ् के निपात सकार को षकारादेश हो ॥ १०७ ॥

## सनोतेरनः ॥ १०८ ॥

सनोतेः[6], अनः[6] । सनोतेरनकारान्तस्य सस्य षः स्यात् । गोषाः नृषाः ॥ सनोति के अनकारान्त सकार को षकारादेश हो ॥ १०८ ॥

## सहेः[6] पृतनर्त्ताभ्यां[5] च[अ] ॥ १०९ ॥

आभ्यामुत्तरस्य सहेः सस्य षः स्यात् । पृतनाषाहम् । ऋताषाहम् ॥ पृतना और ऋत शब्द से परे सहि धातु के सकार को षकारादेश हो ॥ १०९ ॥

## न[अ] रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्[6] ॥ ११० ॥

रेफपरस्य सस्य सृप्यादीनां सवनादीनां च षो न स्यात् । पुरा क्रूरस्य विसृपः । वाचो विसर्जनम् । दिविस्पृशम् । निस्पृहं वक्ति । सवनादीनाम् । सवने २ सूते ॥ रेफ से परे सृपि सृजि स्पृशि स्पृहि और सवनादि गण पठित सकार को ष न हो ॥ ११० ॥

## सात्पदाद्योः[6] ॥ १११ ॥

अनयोः षत्वं न स्यात् । अग्निसात् । दधिसात् । पदादेः दधिसिञ्चति । मधु सिञ्चति ॥ सात् और पदादि सकार को षत्व न हो ॥ १११ ॥

## सिचो यङि ॥ ११२ ॥

सिचः[6],यङि[7] । यङि परे सिचः सस्य षत्वं न । सेसिच्यते ॥ यङ् परे होते सिच् के सकार को षकार न हो ॥ ११२ ॥

## सेधतेर्गतौ ॥ ११३ ॥

सेधतेः[6], गतौ[7] । गतौ वर्त्तमानस्य सेधतेः सस्य षत्वं न स्यात् । अभिसेधयति गाः । परिसेधयति गाः ॥ गति में वर्त्तमान सेधति धातु के सकार को षत्व न हो ॥११३॥

## प्रतिस्तब्धनिस्तब्धौ[1] च[अ] ॥ ११४ ॥

इमौ निपात्येते । प्रतिस्तब्धः । निस्तब्धः ॥ प्रतिस्तब्ध और निस्तब्ध शब्दों में षत्व का निषेध निपातन किया है ॥ ११४ ॥

## सोढः[6] ॥ ११५ ॥

सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा ॥ सोढ्रूप सह धातु के सकार को षकारादेश न हो ॥ ११५ ॥

## स्तम्भुसिवुसहां[6] चङि[7] ॥ ११६ ॥

उपसर्गनिमित्तादेषां सस्य षो न स्याच्चङि परे । पर्यतस्तम्भत् । पर्यसीषिवत् । पर्यसीषहत् ॥ उपसर्ग निमित्त से परे स्तम्भु सिवु और सह के सकार को षकारादेश न हो

## सुनोतेः[6] स्यसनोः[7] ॥ ११७ ॥

स्ये, सनि च, परे सुञ षो न स्यात् । अभिसोष्यति । परिसोष्यति । अभिसुसूः ॥ स्य और सन परे होते सुञ् धातु के सकार को ष न हो ॥ ११७ ॥

### सदेः[६] परस्य[६] लिटि[७] ॥ ११८ ॥

सदेरभ्यासात् परस्य षत्वं न स्याल्लिटि। निषसाद ॥ अभ्यास से परे सदि धातु के सकार को षत्व नहो ॥ ११८ ॥

### निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ११९ ॥

नि०भ्यः[५], अ०ये[७], वा(अ),छ०[७] सि। अत्र षो वा स्यात्। न्यषीदत्, न्यसीदत्, व्यषीदत्। व्यसीदत्। अभ्यषीदत्। अभ्यसीदत् ॥ छन्दो विषय तथा अट्के व्यवाय में नि, वि और अभी शब्द से परे सकार को विकल्प से षत्व हो ॥ ११९ ॥

इत्यष्टमाध्यायस्य तृतीयः पादः।

---

# अथाष्टमाध्यायस्य चतुर्थः पादः।

### रषाभ्यां[५] नो[६] णः[१] समानपदे[७] ॥ १ ॥

एकपदस्थाभ्यां रेफषकारभ्यामुत्तरस्य नस्य णः स्यात् समानपदे। आस्तीर्णम्। विस्तीर्णम्। षात्। कुष्णाति। मुष्णाति ॥ एक पदस्थ रेफ और षकार से परे नकारको णकारादेश हो समान पद में ॥ १ ॥

### [७]अट्कुप्वाङ्नुम्व्यवायेऽपि[७] ॥ २ ॥

अट्कवर्ग पवर्गआङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवायेऽपि रषाभ्यामुत्तरस्य नस्य णः स्यात् समानपदे। अड्व्यवाये-करणम्। हरणम्। कवर्गव्यवाये—अर्केण। मूर्खेण। पवर्गव्यवाये दर्पेण। रेफेण। गर्भेण। चर्मणा। आङ्व्यवाये—पर्याणद्धम्। निराणद्धम् ॥ नुम् व्यवाये-वृंहणम्। वृंहणीयम् ॥ अट् कवर्ग पवर्ग आङ् और नुम् के व्यवधान में भी रेफ और षकार से परे नकार को णकारादेश हो ॥ २ ॥

### पूर्वपदात्संज्ञायामगः ॥ ३ ॥

पूर्व०त्[५], स०म्[७], अगः[१]। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां, न तु गकारव्यवाये। द्रुरिव नासिका यस्य सः द्रुणसः। खरणसः। शूर्पणखा ॥ गकार वर्जित व्यधान में एवं संज्ञा विषय में पूर्वपदस्थ निमित्त से परे नकार को ण हो ॥३॥

### [१]वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः[५] ॥ ४ ॥

पुरगामिश्रकासिध्रकाशारिकाकोटरा अग्रे इत्येभ्यः पूर्वपदेभ्यः उत्तरस्य वनस्यनस्य णः स्यात् संज्ञायां विषये। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम् ॥ संज्ञा विषय में पुरगादि शब्दों से परे वनस्थ नकार को णत्वादेश हो ॥ ४ ॥

### प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि॥ ५॥

प्र०भ्यः[५], अ०म्[७],अपि(अ)। असंज्ञायामपि एभ्य उत्तरस्य वनस्य नस्य णः स्यात्। प्रवणम्। निर्वणम्। अन्तर्वणम्। शरवणम्। इक्षुवणम्। प्लक्षवणम्। आम्रवणम्। कार्ष्यवणम्॥ खदिरवणम्। पीयूक्षावणम् ॥ असंज्ञा विषय में भी प्र, निर्, अन्तर, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य,खदिर और पीयूक्षा शब्दसे परे वनस्थ नकारको णकारादेशहो

## विभाषौषधिवनस्पतिभ्यः ॥ ९ ॥

वि०षा(अ), ओ०भ्यः[५] । एभ्य उत्तरस्य वनस्य नस्य णत्वं वा स्यात् । दूर्वावणम्, दूर्वावनम् । शिरीषवणम्, शिरीषवनम् ॥ ओषधि और वनस्पति वाचक शब्दों से परे वनस्थ नकार को विकल्प से णकारादेश हो ॥ ९ ॥

## अह्नोऽदन्तात् ॥ ७ ॥

अ०नः[६], अ० त्[५] । अदन्तात् पूर्वं पदस्थाद् रेफादुत्तरस्याऽह्नो नस्य णः स्यात् । पूर्वाह्णः । सर्वाह्णः अपराह्णः ॥ अदन्त पूर्वपदस्थ रेफ से परे अहन् शब्द के नकार को णकारादेश हो ॥ ७ ॥

## वाहनमाहितात् ॥ ८ ॥

वा०म्[१], आ०त्[५] । आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात् परस्य वाहनस्य णत्वं स्यात् । इक्षु वाहणम् । शरवाहणम् ॥ आरोप्य (रखकर) जो वस्तु लेजाया जावे उस कथन के निमित्त से परे वाहन के न को णत्वादेश हो ॥ ८ ॥

## पानं[१] देशे[७] ॥ ९ ॥

पूर्वपदस्थान्निमित्तात् परस्य पानस्य नस्य णत्वं स्याद् देशे गम्ये । क्षीरं पानं येषाम् ते क्षीरपाणाः–उशीनराः ॥ देश गम्यमान होतो पूर्वपदस्थ निमित्त से परे पान के नकार को णत्वादेश हो ॥९॥

## वा[अ] भावकरणयोः[७] ॥ १० ॥

भावे करणे च देशे वाच्ये पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य वा णत्वं स्यात् । क्षीरपाणः, क्षीरपानः—उशीनराः ॥ भाव और करण में देश वाच्य हो तो पूर्वपदस्थ निमित्तसे परे पानस्थ नकारको विकल्पसे णत्वादेश हो ॥१०॥

## प्रातिपदिकान्तनुम्विभक्तिषु[७] च[अ] ॥ ११ ॥

पूर्वपदस्थान्निमित्तात् परस्य एषु स्थितस्य नस्य णो वा स्यात् । प्रातिपदिकान्ते—माषवापिणौ, माषवापिनौ । नुमि—व्रीहिवापाणि, व्रीहिवापानि । विभक्तौ–माषवापेण, माषवापेन ॥ पूर्वपदस्थ निमित्तसे परे प्रातिपदिकान्त नुम् और विभक्तिस्थ नकार को विकल्पसे णकारादेश हो ॥११॥

## एकाजुत्तरपदे[७] णः[१] ॥ १२ ॥

एकाऽजुत्तरपदं यस्मिन् समासे पूर्वपदस्थान्निमित्तात् परस्य प्रातिपदिकान्तनुम विभक्तिस्थस्य नस्य णत्वं स्यात् । वृत्रहणौ । क्षीरपाणि । क्षीरपेण ॥ एक अच् है उत्तरपद में जिसके ऐसे समासमें पूर्वपदस्थ निमित्त से परे प्रातिपदिकान्त नुम् और विभक्तिस्थ नकारको णत्वादेशहो ॥१२॥

## कुमति[७] च[अ] ॥ १३ ॥

कवर्गवत्युत्तरपदे पूर्वपदस्थान्निमित्तात् परस्य प्रातिपदिकान्तनुम्—विभक्तिस्थस्य नस्य णत्वं स्यात् । स्वर्गकामिणौ । वस्त्रयुगाणि । खरयुगेण ॥ कुमान् उत्तरपद में पूर्वपदस्थ निमित्त से परे प्रातिपदिकान्त नुम् और विभक्तिस्थ नकारको णकारादेश हो॥१३॥

## उपसर्गादसमासेऽपि णोपदेशस्य ॥ १४ ॥

उ०द[४], अ०से[७], अपि(अ), णो० स्य[१] । उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् समासेऽसमासेऽपि । प्रणमति । प्रणदति । प्रणायकः । परिणायकः ॥ समास या असमास में उपसर्गस्थ निमित्त से परे णोपदेश धातु के नकार को णकारादेश हो ॥ १४ ॥

## हिनुमीना[१] ॥ १५ ॥

उपसर्गस्थान्निमित्तादुत्तरस्यानयोर्नस्य णः स्यात् । प्रहिणोति । प्रमीणाति ॥ उपसर्गस्थ निमित्त से परे हिनु और मीनाके नको णकारादेश हो ॥ १५ ॥

## आनि[१] लोट्[१] ॥ १६ ॥

उपसर्गस्थान्निमित्तादुत्तरस्य लोडादेशस्याऽऽनीत्यस्य नस्य णः स्यात् । प्रभवाणि । प्रयाणि । परिवपाणि ॥ उपसर्गस्थ निमित्तसे परे लोट्के स्थान में आदेश आनिके नकार को णत्वादेश हो ॥१६॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

नेः[६], ग०षु[७], च(अ) । उपसर्गस्थान्निमित्तादुत्तरस्य नेर्णः स्याद् गदादिषु परेषु । प्रणिगदति । परिणिगदति । प्रणिनदति । परिणिनदति । प्रणिपतति परिणिपतति । प्रणिपद्यते । परिणिपद्यते । प्रणिददाति । परिणिददाति । प्रणिदधाति । परिणिदधाति । प्रणिमिमीते । परिणिमिमीते । प्रणिमयते । परिणिमयते । प्रणिष्यति । परिणिष्यति । प्रणिहन्ति । परिणिहन्ति । प्रणियाति । परिणियाति । प्रणिवाति । परिणिवाति । प्रणिद्राति । परिणिद्राति । प्रणिप्साति । परिणिप्साति । प्रणिवपति । परिणिवपति । प्रणिवहति । परिणिवहति । प्रणिशाम्यति । परिणिशाम्यति । प्रणिचिनोति । परिणिचिनोति । प्रणिदेग्धि । परिणिदेग्धि ॥ उपसर्ग निमित्त से परे नि के नकार को णत्वादेश हो गद, नद, पत, पद, घुसंज्ञक मा,(मेङ् मा) स्यति, हन्ति, याति, वाति, द्राति, प्साति, वपति, वहति, शाम्यति, चिनोति और देग्धि परे होतो ॥१७॥

## शेषे विभाषाऽकखादावषान्त उपदेशे ॥ १८ ॥

शेषे[७], वि०षा अ), अ०दौ[७], अ०न्ते[७], उ०शे[७] । उपदेशे कादिखादि षान्तवर्जे गदनादेरस्मिन्—धातौ परे उपसर्गस्थान्निमित्तादुत्तरस्यनेर्नस्य णोवा स्यात् । प्रणिभवति, प्रनिभवति । प्रणिपचति, प्रनिपचति ॥ उपदेशमें ककारादि खकारादि तथा षान्तवर्जित पूर्व सूत्रस्थ धातुओं से भिन्न धातु परे होतो उपसर्गस्थ निमित्तसे परे निके नकार को विकल्प से णकारादेश हो॥१८॥

## अनितेः[६] ॥ १६ ॥

उपसर्गस्थान्निमित्तात् परस्यानितेर्नस्य णत्वं स्यात् । प्राणिति । पराणिति ॥ उपसर्गस्थ निमित्तसे परे अन धातु के नकारको णत्वादेश हो ॥१६॥

## अन्तः[१] ॥ २० ॥

पदान्तस्य अनितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात् परश्चेत् । हे प्राण् ! । हे पराण् ! ॥ उपसर्गस्थ निमित्तसे परे पदान्त अन धातुके नकारको णत्वादेश हो ॥२०॥

## उभौ[१] साभ्यासस्य[६] ॥ २१ ॥

साभ्यासस्याऽनितेरुभयोर्णत्वादेशः स्यात् निमित्ते सति। प्राणिणिषति। प्राणिणत्॥ उपसर्गस्थ निमित्तसे परे अभ्यास सहित अनके दोनों नकारों को णत्वादेश हो॥ २१॥

## हन्तेरत्पूर्वस्य ॥ २२ ॥

हन्तेः[६], अ०स्य[६]। उपसर्गस्थान्निमित्तादुत्तरस्य अपूर्वस्य हन्तेर्नस्य णत्वं स्यात्। प्रहण्यते। प्रहणनम्॥ उपसर्गस्थ निमित्त से परे अकार है पूर्व जिसके ऐसे हन्ति के नकार को णत्वादेश हो ॥२२॥

## वमोर्वा ॥ २३ ॥

वमोः[७], वा(अ) उपसर्गस्थान्निमित्तादुत्तरस्य हन्तेर्नस्य णोवा स्यात् वे मे च परे। प्रहण्वः। प्रहन्वः। प्रहण्मः। प्रहन्मः॥ वकार और मकार परे हो तो उपसर्गस्थ निमित्त से परे हन् धातु के नकार को विकल्प से णत्वादेश हो॥ २३॥

## अन्तरदेशे ॥ २४ ॥

अन्तः(अ), अदेशे[७]। अदेशेऽन्तः शब्दादुत्तरस्य हन्तेर्नस्य णत्वं स्यात्। अन्तर्हणनम्। अन्तर्हण्यते॥ अदेश अर्थ में अन्तर् शब्द से परे हन धातु के नकार को णकारादेश हो॥

## अयनं[१] च[अ] ॥ २५ ॥

अदेशाभिधानेऽन्तः शब्दादुत्तरस्याऽयननकारस्य णत्वं स्यात्। अन्तरयणं। सुन्दरतरम्॥ अदेश अर्थ में अन्तर् शब्द से परे अयन (मार्ग,गृह) के नकार को णत्वादेशहो॥

## छन्दस्यृदवग्रहात् ॥ २६ ॥

छ० सि[७], ऋ०त्[५]। छन्दसि विषये ऋकारान्तादवग्रहात् परस्य नस्य णत्वं स्यात्। नृमणः। पितृयाणम्॥ छन्दोविषय में अवग्रह (सम्मिलित) पूर्वपदान्त ऋ से परे नकार को णकारादेश हो॥ २६॥

## नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नः[६], च(अ), धा० भ्यः[५]। अत्र नस्य णत्वं स्याच्छन्दसि विषये। अग्नेरक्षाणः। शिक्षाणो अस्मिन्। उरुणस्कृधि। अभीषुणः। मोषुणः॥ छन्दोविषय में धातुस्थ उरु और षु शब्दों से परे नस् के नकार को णत्वादेश हो॥ २७॥

## उपसर्गाद्[५] बहुलम्[१] ॥ २८ ॥

उपसर्गस्थान्निमित्तादुत्तरस्य नसो नस्य णत्वं स्याद् बहुलम्। प्रणः शूद्रः। प्रणसः। प्रणो राजा। न च भवति। प्रनो मुञ्चनम्॥ उपसर्गस्थ से परे नस् के न को बहुलता से णत्वादेश हो॥ २८॥

## कृत्यचः ॥ २९ ॥

कृति[७], अचः[५]। उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्प्रत्ययस्थनस्य णत्वं स्यात्। प्रयाणम् परियाणम्। प्रमाणम्। परिमाणम्। प्रयायमाणम्। प्रयाणीयम्। अप्रयाणि। प्रयायिणी। प्रहीणः॥ उपसर्गस्थ निमित्त से परे अजन्त धातु से उत्तर कृत् प्रत्ययस्थ नकार को णत्वादेश हो॥ २९॥

## णेर्विभाषा ॥ ३० ॥

णेः[५], विभाषा (अ)। उपसर्गस्थान्निमित्तादुत्तरस्य ण्यन्ताद्विहितो यः कृत्-तत्स्थस्य नस्य णत्वं वा स्यात्। प्रयापणीयम्, प्रयापनीयम्। प्रयापणम्, प्रयापनम्॥ उपसर्गस्थ

निमित्त से परे एजन्त धातु से विहित कृत् प्रत्ययस्थ नकार को विकल्प से णत्वादेश हो॥

## हलश्चेजुपधात्[५] ॥ ३१ ॥

हलादेरिजुपधात् कृन्तस्थाऽचः परस्य णत्वं वा स्यात् । प्रकोपणीयम्, प्रकोपनीयम् । परिकोपणीयम्, परिकोपनीयम् ॥ इच् जिसकी उपधा में हो ऐसे हलादि धातु से परे अच् के उत्तर कृत् प्रत्ययस्थ नकार को विकल्प से णकारादेश हो ॥ ३१ ॥

## इजादेः[५] सनुमः[५] ॥ ३२ ॥

सनुमश्चेद्धलो भवेत्तर्हि इजादेर्हलन्ताद् विहितो यः कृत्तत्स्थस्य नस्योपसर्गस्थान्निमित्तादुत्तरस्य णत्वं स्यात् । प्रेङ्खणीयम् । प्रेङ्खणम् ॥ नुम् सहित इजादि हलन्त धातु से विहित कृत् प्रत्ययस्थ नकार को णत्वादेश हो ॥ ३२ ॥

## वा[अ] निंसनिक्षनिन्दाम्[६] ॥ ३३ ॥

उपसर्गस्थान्निमित्तादुत्तरस्यैषां नस्य णो वा स्यात् ॥ प्रणिंसितव्यम्, प्रनिंसितव्यम् । प्रणिक्षणम्, प्रनिक्षणम् । प्रणिन्दनम्, प्रनिन्दनम् ॥ उपसर्गस्थ निमित्त से परे निंस, निक्ष और निन्द धातु के न को विकल्प से णत्व हो ॥ ३३ ॥

## न[अ] भाभूपूकमिगमिप्यायिवेपाम्[६] ॥ ३४ ॥

एषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नस्य णत्वं न स्यात् । प्रभानीयम् । प्रभवनीयम् । प्रपवनम् । प्रकमनम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् ॥ उपसर्गस्थ निमित्त से परे भादि धातु सम्बन्धी कृत्स्थ न को ण न हो ॥ ३४ ॥

## षात्[५] पदान्तात्[५] ॥ ३५ ॥

नस्य णत्वं न स्यात् । निष्पानम् । दुष्पानम् । सर्पिष्पानम् ॥ पदान्त षकार से परे नकार को णत्वादेश न हो ॥ ३५ ॥

## नशेः[६] षान्तस्य[६] ॥ ३६ ॥

नस्य णत्वं न स्यात् । प्रनष्टः । परिनष्टम् ॥ उपसर्गस्थ निमित्त से परे षकारान्त नश् के न को णत्व न हो ॥ ३६ ॥

## पदान्तस्य[६] ॥ ३७ ॥

पदान्तस्य नस्य णत्वं न स्यात् । बालान् । अरीन् । भानून् कर्तॄन् ॥ पदान्त नकार को णकारादेश न हो ॥ ३७ ॥

## [७]पदव्यवायेऽपि[अ] ॥ ३८ ॥

पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ ( अतद्धित इति वाच्यम् ) ॥ आर्द्रगोमयेण । शुष्कगोमयेण ॥ पद के व्यवधान में भी णत्व न हो ॥

## क्षुभ्नादिषु[७] च[अ] ॥ ३९ ॥

अत्र णत्वं न स्यात् । क्षुभ्नाति, क्षुभ्नीतः, क्षुभ्नन्ति । इत्यादि ॥ क्षुभ्नादि गण पठित शब्दों को णत्व न हो ॥ ३९ ॥

## स्तोः[६] श्चुना[३] श्चुः[१] ॥ ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्याताम् । कश्चिच्छेते । बाल-

श्चिनोति । सच्चित् । तज्जयः । वेदविच्छेते ॥ सकार तवर्ग को शकार चवर्ग के योग में शकार और चवर्गादेश हो ॥ ४० ॥

## ष्टुना[३] ष्टुः[१] ॥ ४१ ॥

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्याताम् । अयं छान्दसषष्ठः । बालष्टीकते । पेष्टा । तट्टीका । धनिष्ढौकते ॥ सकार तवर्ग को षकार टवर्ग के योगमें षकार और टवर्गादेश हो ॥ ४१ ॥

## न पदान्ताट्टोरनाम् ॥ ४२ ॥

न(अ), प० त्[५], टोः[५], अ० म्[६] । पदान्ताट्टवर्गादुत्तरस्यानामः ष्टुत्वं न स्यात् । षट् ते । षट् सन्तः ॥ ( अनाम्नवति नगरीणामिति वाच्यम् ) षण्णाम् । षण्णवति । षण्नगर्यः ॥ नाम् वर्जित पदान्त टवर्ग से परे सकार और तवर्ग को षकार और टवर्गादेश न हो ॥ ४२ ॥

## तोः[६] षि[७] ॥ ४३ ॥

तवर्गस्य षकारे परे ष्टुत्वं न स्यात् । सन् षष्ठः ॥ षकार परे हो तो तवर्ग को टवर्गादेश न हो ॥ ४३ ॥

## शात्[५] ॥ ४४ ॥

शात् परस्य तवर्गस्य श्चुत्वं न स्यात् । प्रश्नः । विश्नः ॥ शकार से परे तवर्ग को टवर्गादेश न हो ॥ ४४ ॥

## यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

यरः[६], अ० के[७], अ० कः[१], वा(अ) । यरः पदान्तस्याऽनुनासिके परेऽनुनासिको-वा स्यात् । एतन्मतम्, एतद्मवम् । वेदविन् नयति, वेदविद् नयति । (प्रत्यये भाषायां नित्यम्) तन्मात्रम् । चिन्मयम् ॥ अनुनासिक परे हो तो पदान्त यर् को विकल्प से अनुनासिक हो ॥ ४५ ॥

## अचोरहाभ्यां द्वे ॥ ४६ ॥

अचः[५], रहाभ्याम्[५], द्वे[१] । अचः पराभ्यां रेफहकाराभ्यामुत्तरस्य यरो द्वे वा स्याताम् । अर्क्कः, अर्कः । आर्य्यः, आर्यः । नह्य्यस्ति, नह्यस्ति ॥ अच् से परे जो रेफ हकार उससे परे जो यर् उसको विकल्प से द्वित्व हो ॥ ४६ ॥

## अनचि[७] च[अ] ॥ ४७ ॥

अचः परस्य यरो द्वे वा स्याताम् नत्वचि । दद्ध्यत्र, दध्यत्र । मद्ध्वस्ति, मध्वस्ति ॥ अच् न परे हो तो अच् से परे यर् को विकल्प से द्वित्व हो ॥ ४७ ॥

## नादिन्याक्रोशेपुत्रस्य ॥ ४८ ॥

न(अ०), आ०नी[७], आ०शे[७], पु०स्य[६] । आक्रोशे गम्ये आदिनी परे पुत्रशब्दस्य न द्वे स्याताम् । पुत्रादिनी त्वमसि पापे ! । ( तत्परे च ) ॥ पुत्रपुत्रादिनी त्वमसि पापे ! ( वाहतजग्धयोः ) ॥ पुत्त्रहती, पुत्रहती । पुत्त्रजग्धी, पुत्रजग्धी ॥ आक्रोश गम्यमान हो और आदिनी परे हो तो पुत्रशब्द को द्वित्व न हो ॥४८॥

## शरोऽचि ॥ ४९ ॥

शरः[६], अचि[७] । अचि परे शरो न द्वे स्याताम् । चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः ॥

प्रियचत्वारौ । प्रियचत्वारः । कर्षति । वर्षति ॥ अच् परे होतो शर्को द्वित्व न हो ॥४९॥

## त्रिप्रभृतिषु[७] शाकटायनस्य[६] ॥ ५० ॥

त्र्यादिषु वर्णेषु संयुक्ते वा द्वित्वं स्यात् । इन्न्द्रः, इन्द्रः । चन्न्द्रः, चन्द्रः । राष्ट्रम् राष्ट्रम् । भ्राष्ट्रम्, भ्राष्ट्रम् ॥ तीन आदि संयुक्त वर्णों में विकल्प से द्वित्व हो ॥५०॥

## सर्वत्र[म] शाकल्यस्य[६] ॥ ५१ ॥

द्वित्वं न स्यात् । ब्रह्मा । अर्कः । मर्कः ॥ शाकल्य जी के मत में सर्वत्र द्वित्व नहो ॥

## दीर्घादाचार्याणाम् ॥ ५२ ॥

दी०*त्, आ०*म् । दीर्घादुत्तरस्याचार्याणां मतेन द्वित्वं न स्यात् । दात्रम् । पात्रम् । सूत्रम् । मूत्रम् ॥ दीर्घ से परे आचार्य्यों के मत में द्वित्व न हो ॥५२॥

## झलां[६] जश्[१] झशि[७] ॥ ५३ ॥

झशि परे झलां स्थाने जशादेशः स्यात् । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् । दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् ॥ झश् परे होतो झलोंके स्थानमें जश् आदेशहो॥

## अभ्यासे चर्च्च ॥ ५४ ॥

अ०*से, चर्[१], च(अ) । अभ्यासे झलां चरादेशः स्यात्, चाज्जशश्च झलां जशः खयां चरः । चिखनिषति । चिच्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते । प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति टिटीकिषते । तितनिषति । प्रकृतिजशां प्रकृतिजशो भवन्ति॥ जिजनिषति बुबुधे ॥ अभ्यास में झलों को चर् आदेश हो और च से जश् भी हो ॥५४॥

## *खरि च[म] ॥ ५५ ॥

खरि परे झलां चरादेशः स्यात् । भेत्ता । भेत्तुम् । भेत्तव्यम । युयुत्सते ॥ खर् परे हो तो झलों को चर् आदेश हो ॥५५॥

## वाऽवसाने ॥ ५६ ॥

वा,(अ) अ०*ने । अवसाने झलां चरादेशो वा स्यात् । वाक्, वाग् । त्रिष्टुप्, त्रिष्टुब् ॥ अवसान में झलों को विकल्प से चरादेश हो ॥५६॥

## अणोऽप्रगृह्यस्यानुनासिकः ॥५७॥

अणः[?], अ०स्य[?], अ० कः[१] । अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ, दधि । मधुँ, मधु । कुमारीँ, कुमारी ॥ अवसान में प्रगृह्य संज्ञक वर्जित अण् को विकल्प से अनुनासिक हो ॥५७॥

## अनुस्वारस्य[६] ययि[७] परसवर्णः[१] ॥ ५८ ॥

स्पष्टम् । शङ्किता । शङ्कितुम् । शङ्कितव्यम् । नन्दिता । नन्दितुम् । नन्दितव्यम् । अङ्कितः । अञ्चितः॥ कुण्डितः । शान्तः । गुम्फितः । यय् प्रत्याहार परे हो तो अनुस्वार को परसवर्णादेश हो ॥ ५८ ॥

## वा[म] पदान्तस्य[६] ॥ ५९ ॥

ययि परे पदान्तस्यानुस्वारस्य परसवर्णो वा स्यात् । त्वम्पठसि, त्वं पठसि । सँय्यन्ता, संयन्ता । सँव्वत्सरः, संवत्सरः । यँल्लोकम्, यँल्लोकम् । यय् प्रत्याहार परे हो तो पदान्त अनुस्वार को विकल्प से परसवर्णादेश हो ॥५९॥

## तोर्लि ॥ ६० ॥

तोः[5], लि[7] । तवर्गस्य लकारे परे परसवर्णादेशः स्यात् । तल्लेखः । भवाँल्लुनाति ॥ तवर्ग से लकार परे होतो परसवर्णादेश हो ॥६०॥

## उदः[5] स्थास्तम्भोः[6] पूर्वस्य[6] ॥ ६१ ॥

उदः परयोः स्थास्तम्भोः पूर्वसवर्णादेशः स्यात् । उत्थाता । उत्थातुम् । उत्थातव्यम् । उत्तम्भिता । उत्तम्भितुम । उत्तम्भितव्यम ॥ उद् से परे स्था और स्तम्भु को पूर्व सवर्णादेश हो ॥६१॥

## झयोहोऽन्यतरस्याम् ॥ ६२ ॥

झयः[4], हः[6], अ०म्(अ) । झयः परस्य हस्य वा पूर्वसवर्णः । भवद्धितैषी, भवद्हितैषी । वाग्घसति, वाग्हसति । श्वलिड्ढसति, श्वलिड्हसति ॥ झय् से परे हकार को विकल्प से पूर्वसवर्णादेश हो ॥६२॥

## शश्छोऽटि ॥ ६३ ॥

शः[6], छः[1], अटि[7] । झयः परस्य शस्य छो वाटि वेदविच्छेते, वेदविद् शेते । वाक्छेते, वाक्शेते । ( छत्वममीति वाच्यम् ) तच्छ्लोकेन ॥ अट् प्रत्याहार परे हो ता झय् से परे शकार को विकल्प से छकारादेश हो ॥६३॥

## हलो यमां यमि लोपः ॥ ६४ ॥

हलः[5], यमाम्[6], यमि[7], लोपः[1] । यमि परे हलः परस्य यमो लोपो वा स्यात् । शय्य्या, शय्या ॥ यम परे होता हल् से परे यम् का विकल्प से लोप हो ॥६४॥

## झरो झरि सवर्णे ॥ ६५ ॥

झरः[6], झरि[7], सवर्णे[7] । हल उत्तरस्य झरो लोपो वा स्यात्सवर्णे झरि । कृष्णर्द्धिः, कृष्णर्द्धिः, कृष्णर्द्धिः । द्वित्वाऽभावे लोपे सत्येकधम् । असति लोपे द्वित्वलोपयो र्द्वैरूप्यम् । सति द्वित्वे लोपे चासति त्रिधम् ॥ सवर्णी झर् परे होतो हल् से परे झर् का विकल्प से लोप हो ॥६५॥

## उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उ०द्[5], अ०स्य[6], स्वरः[1] । उदात्तादुत्तरस्याऽनुदात्तस्य स्वरितः स्यात् । अग्निम्, ईडे—अग्निमीडे ॥ उदात्त से परे अनुदात्त को स्वरित हो ॥६६॥

## नोदात्तस्वरितोदयमगार्ग्यकाश्यप गालवानाम् ॥ ६७ ॥

न(अ), उ०म्[1] । एषां मतेन उदात्त परः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्य ऋषिः । यहां गार्ग्य और ऋषि दोनों शब्द आद्युदात्त हैं, ऋकार उदात्त के उदय में अनुदात्त र्ग्य को स्वरित नहीं होता, गार्ग्य आदि के मत में गार्ग्य ऋषि । परन्तु यह नियम लौकिक शब्दों के लिये है । गार्ग्य काश्यप और गालव जी के मत में उदात्त और स्वरित जिससे आगे विद्यमान हों ऐसे अनुदात्त को स्वरित न हो ॥६७॥

## अ[6] अ[1] ॥ ६८ ॥

एकोऽत्र विवृतः परः संवृतः द्वावप्यविभक्तिकौ, यो विवृतस्य स्थानी यः संवृतः स आदेशः । विवृताकारस्थानेसंवृतः स्यात् । वृक्षः ॥ सत्तः । विवृत अकार के स्थान में संवृत अकारादेश हो ॥ ६८ ॥

इति जीवारामोपाध्यायकृतायां पाणिनिसूत्रवृत्तौ अष्टमाध्यायस्य चतुर्थः पादः समाप्तश्चायं ग्रन्थः ॥

---